न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥ ३ ॥

5 विदूषकः—(राजानमवलोक्य) अत्तभवं किं पि हिअए कदुअ मन्तेदि । अरण्णे क्खु मए रुदिदं ।

राजा—( सस्मितम् ) किमन्यत् ? अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—(सपरितोषम्) तेण हि चिरं जीव । (इत्युत्थातुमिच्छति ।)

10 राजा—तिष्ठ तावत् । शृणु मे सावशेषं वचः ।

विदूषकः—आणवेदु भवं ।

राजा—विश्रान्तेन भवता ममानायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदअखज्जिआए ?

राजा—यत्र वक्ष्यामि ।

15 विदूषकः—गहिदो पणओ ।

राजा—कः कोऽत्र भोः ।

(प्रविश्य) दौवारिकः—आणवेदु भट्टा ।

राजा—रैवतक ! सेनापतिस्तावदाहूयताम् ।

दौवारिकः—तथा । (इति निष्क्रम्य सेनापतिना सह प्रविष्टः ।)

20 सेनापतिः—( राजानमवलोक्य स्वगतम् ) कथं दृष्टदोषापि मृगया

---

6. रुदिअं for रुदिदं । B. मए after रुदिदं । 7. A. सुहृदो वाक्यं । 10. A. तिष्ठ तिष्ठ । A. सविशेषं before शृणु । 12. B. वस्तुनि for कर्मणि । 15. A. गिहिदो । 16. B. om. भो । 20. A. om. कथं ।

स्वामिनि केवलं गुणायैव संवृत्ता । तथा हि देवः–

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु क्लेशलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
5 गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

[ दौवारिकः—एदु एदु अज्जो । एसो अणुवअणादिण्णकण्णो भट्टा तुमं जेव्व पडिवालेदि । ता उअसप्पदु अज्जो ]

सेनापतिः—(उपगम्य) जयति जयति स्वामी । स्वामिन् ! गृहीतमृगप्रचारं सूचितश्वापदमरण्यम् । तत् किमिति स्थीयते ?

10 राजा—भद्र भग्नोत्साहः कृतोऽस्मि मृगयापरिवादिना माधव्येन ।

विदूषकः—अत्तभवं पडिमावण्णो । तुमं दाव दासीए पुत्तअ इदो तदो अडविं आहिण्ड जाव विद्धसिआललोलुवस्स कस्स वि जिण्णरिच्छस्स मुहे णिवडिदो होसि त्ति ।

सेनापतिः—(जनान्तिकम्) सखे माधव्य स्थिरप्रतिज्ञो भव । अहं तावत्
15 स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । ( प्रकाशम् ) देव ! प्रलपत्वेष माधव्यः । ननु प्रभुरेवात्र निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

---

2. B. °क्रूरकर्मा । 3. B. स्वेदजालैः for क्लेशलेशैः । 6. B. दे after एसो । 10. B. °परिबाधिना । 12. A. अडविं अडविं । B. गिद्ध° for विद्ध° । B. om. कस्स वि । B. जुण्ण° । 15. A. उपलप्स्ये for अनुवर्तिष्ये । A. प्रलपत्येष । 16. B. om. अत्र । 18. A. अधि° for अपि ।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले

मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥५॥

राजा—भद्र सेनापते आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभि-
नन्दामि । अद्य तावत्–

5 गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं

छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले

विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

सेनापतिः—यथा प्रभविष्णवे रोचते ।

10 राजा—तेन हि निवर्तय पुरोगान् धनुर्ग्राहिणः । यथा च सैनिका
दूरात् तपोवनं परिहरन्ति तथा निषेद्धव्याः । पश्य–

शमप्रधानेषु तपोवनेषु

गूढं हि दाहात्मकमस्ति तेजः ।

स्पर्शानुकूला अपि सूर्यकान्ता-

15 स्ते ह्यन्यतेजोभिभवाद्दहन्ति ॥ ७ ॥

विदूषकः—भो उच्छाहइत्तआ णिक्कम ।

सेनापतिः—यथाज्ञापयति स्वामी । ( इति निष्क्रान्तः । )

राजा—(परिजनं विलोक्य) मृगयावेषमपनयन्तु भवन्तः । रैवतक !
त्वमपि स्वनियोगमशून्यं कुरु ।

20 दौवारिकः—जं देओ आणवेदि । ( इति निष्क्रान्तः । )

---

7. A. विश्वस्तैः for विश्रब्धैः । 10. B. om. तेन हि । A. om. च । 15. A. °प्यन्य° for ह्यन्य° । 16. A. °इत्तका for °इत्तआ । 20. B. देवो for देओ ।

विदूषकः—किदं भवदा णिम्मक्खिअं । ता इमस्सिं पाअवच्छाआ-
अविरइदविदाणसणाधे सिलादले उअविसदु भवं । जाव अहं पि
सुहासीणो होमि ।

राजा—गच्छाग्रतः ।

5 विदूषकः—एदु एदु भवं । ( उभौ परिक्रम्योपविष्टौ । )

राजा—सखे माधव्य ! अनाप्तचक्षुःफलोऽसि, येन त्वया द्रष्टव्यानां परं
न दृष्टम् ।

विदूषकः—णं भवं जेव अग्गदो मे चिट्ठदि ।

राजा—सर्वः कान्तमात्मानं पश्यति । अहं तु पुनस्तामेवाश्रमललाम-
10 भूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदूषकः—(स्वगतम्) भोदु । ण से पसरं वड्ढावइस्सं । (प्रकाशम्) भो
जदो दाव सा तवस्सिकण्णआ अणब्भत्थणीआ, तदो किं ताए
दिट्ठाए ?

राजा—मूर्ख !

15 निराकृतनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति ॥ ८ ॥

न च परिहार्ये वस्तुनि दुष्मन्तस्य मनः प्रवर्तते ।

ललिताप्सरोभवं किल मुनेरपत्यं तदुज्भिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालतीकुसुमम् ॥ ९ ॥

2. B. विणादक° for विदाण° । B. सिलाअले for सिलादले । A. अस्सिं for अहं पि । 6. A. वरं for परं । 8. A. दिष्टं जेव जं before णं । A. om. णं । A. भवं अग्गदो । B. om. मे । 9. B. सर्वे and पश्यन्ति । A. om. तु । B. om. पुनः । 12. A. जदा for जदो । A. तावस° । B. °कण्णाजणो । B. ता for तदो । 18. A. नवमालिका° for नवमालती° ।

विदूषकः—(विहस्य) भो जधा कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिड़िआए अहिलासो भोदि, तधा इत्थीरअणपरिभोइणो भवदो इअं अब्भत्थणा।

राजा—सखे न तावदेनां पश्यसि येन त्वमेवमवादीः।

5 विदूषकः—तं खु रमणीअं णाम जं भवदो विम्हअं उप्पादेदि।

राजा—वयस्य, किं बहुना ?

चित्ते निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन महता मनसा कृता नु।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
10 धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥१०॥

विदूषकः—सव्वधा पच्चादेसो सा रूपवदीणं।

राजा—इदं च मे मनसि वर्तते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम्।
15 अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ॥११॥

विदूषकः—तेण हि लहुं लहुं गदुअ परित्ताअदु भवं। सा कस्स वि ताव-सस्स इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि।

राजा—परवती तत्रभवती, न च सन्निहितगुरुजना।

---

1. B. om. भो। 2. A. तिन्तिडिआ°। 2. A. °परिहारिणो for °परिभोइणो। 4. A. om. सखे। A. त्वमेनां for तावदेनां। 11. B. सव्वथा। 12. B. om. च। 15. Com. फलमपि for फलमिव। 17. A. लहु लहु। A. परिणअदु। B. तवस्सीजणस्स।

विदूषकः—अध भवन्तमन्तरेण कीदिसो से दिट्ठिराओ ?

राजा—वयस्य स्वभावादप्रगल्भस्तपस्विकन्यकाजनः । तथापि

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकथोदयम् ।
5 विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥१२॥

विदूषकः—किं खु दिट्ठमेत्तकेण ज्जेव अङ्कमारुहदु ?

राजा—मिथःप्रस्थाने तत्रभवत्या मयि भूयिष्ठमाविःकृतो भावः । तथाहि—

10 दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥१३॥

विदूषकः—गहिदपाधेओ भवं किदो तए । अणुरञ्जिदं तवोवणं ति
15 तक्केमि ।

राजा—सखे चिन्तय तावत् । केनापदेशेन पुनराश्रमपदं गच्छामः ?

विदूषकः—को अवरो अवदेसो ? णं भवं राआ ।

राजा—ततः किम् ?

विदूषकः—णीवारछट्ठभाअं मे तावसा उवहरन्तु त्ति ।

20 राजा—मूर्ख ! पुण्यभागमेते रक्षिणे निर्वपन्ति यं रत्नराशिं परिहाया-

---

1. B. णणु for अध । 14. A. °पाथेओ । B. इदं for किदो । 16. A. om. चिन्तय तावत् । 19 A. om त्ति । B. उपहरन्ति त्ति । 20. B. निर्वर्तयन्ति for निर्वपन्ति ।

भिनन्दन्ते । पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत् फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥१४॥

( नेपथ्ये ) हन्त सिद्धार्थौ स्वः ।

5 राजा—(आकर्ण्य) अये धीरप्रशान्तः स्वरः । तपस्विभिर्भवितव्यम् ।

( प्रविश्य ) दौवारिकः— जअदु जअदु भट्टा । एदे क्खु दुवे इसिकुमारा पडिहारभूमीए उवत्थिदा ।

राजा—अविलम्बं प्रवेशय ।

दौवारिकः—जं भट्टा आणवेदि । ( इति निष्क्रम्य ऋषिभ्यां सह प्रवि-

10 शति । )

दौवारिकः—इदो इदो एध ।

एकः—( राजानमवलोक्य ) अहो दीप्तिमतोऽपि विश्वसनीयता अस्य वपुषः । अथवा उपपन्नमेवैतत् ऋषिकल्पे राजनि । कुतः ?

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
15 रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१५॥

द्वितीयः—सखे अयं बलभित्सखो दुष्मन्तः ?

19 प्रथमः—अथ किम् ।

---

1. A. यद्रत्नराशिं विहायास्मानभिनन्दति । 2. B. धनं for फलम् । 5. A. °प्रशान्तस्वरः । 6. A. तावस्सिकुमारए । B. °कुमारके । 7. A. उअत्थिदा । 8. A. अविलम्बितं । 9. B. निष्क्रान्तः पुनः ऋषिभ्यां सह प्रविश्य । 18. B. om. अयं ।

द्वितीयः—तेन हि—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
5 रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥१६॥

उभौ—( उपगम्य ) विजयस्व राजन् !

राजा—(आसनादुत्थाय) अभिवादये भवन्तौ ।

ऋषी—स्वस्ति भवते । (इति फलान्युपनयतः ।)

राजा—(सप्रणामं प्रतिगृह्य) आज्ञापयेतां भवन्तौ ।

10 ऋषी—विदितो भवानिहस्थस्तपस्विभिः । ते च भवन्तमभ्यर्थयन्ते ।

राजा—किमाज्ञापयन्ति ?

ऋषी—तत्रभवतः कुलपतेरसान्निध्याद् रक्षांसि नस्तपोविघ्नमुत्पादयन्ति । तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम-पदम् ।

15 राजा—अनुगृहीतोऽस्मि ।

विदूषकः—(अपवार्य) अअं दाणिं अणुऊलो दे गलहत्थो ।

राजा—रैवतक ! उच्यतामस्मद्वचनात् सारथिः सबाणकार्मुकं रथमुप-स्थापयेति ।

दौवारिकः—जं देवो आणवेदि । (इति निष्क्रान्तः ।)

---

5. A. पौरहूतस्य । 10. B. om. तपस्विभिः । B. मुनयो after ते च । 12. A. °तपोवन° for तपो° । 13. A. कतिपयरात्रि । 16. A. om. दाणिं । B. अअं दाणि भवदो अनुऊलो गलहत्थो । 17. B. om. °वचनात् ।

निवेदयेत् । भवतु, एवं तावद् वक्ष्यामि । (विदूषकं हस्ते गृहीत्वा प्रकाशम्) सखे माधव्य ! ऋषिगौरवादाश्रमपदं गच्छामि । न खलु सत्यमेव तापसकन्यकायामभिलाषः ।

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सह वर्धितो जनः ।
परिहासविकल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥१६॥

विदूषकः—एवं णेदं ।

( इति निष्क्रान्ताः सर्वे । )



1. A. om. प्रकाशं । 6. A. परमार्थी न न 8. The name of this Act is illegible in Mss.

( ३ )

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः—( विचिन्त्य ) अहो महाप्रभावोऽयं राजा दुष्मन्तः । प्रविष्ट-
मात्र एव तत्रभवति निरुपप्लवानि नः कर्माणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुंकारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥ १ ॥

5 यावदिमान् वेदिसंस्तरणार्थान् दर्भानृषिभ्य उपहरामि । ( परि-
क्रम्यावलोक्य च आकाशे) प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणा-
लवन्ति च नलिनीदलानि नीयन्ते ? ( आकर्ण्य ) किं ब्रवीषि ?
आतपलङ्घनाद् बलवदस्वस्थशरीरा शकुन्तला । तस्या शरीरनिर्वा-
पणायेति । प्रियंवदे ! यत्नादुपचर्यताम् । सा हि तत्रभवतः कुल-
10 पतेरुच्छ्वसितम् । अहमपि वैतानं शान्त्युदकमस्या एव गौतमी-
हस्ते विसर्जयामि ।

( इति निष्क्रान्तः । )

॥ प्रवेशकः ॥

( ततः प्रविशति मदनावस्थो राजा । )

15 राजा—( निःश्वस्य सचिन्तम् )

---

2. A. सविस्मयं विचिन्त्य । 3. A. °मात्रकेण for °मात्र एव । B. तत्र भवति सारथिद्वितीये । 6. B. कुशान् for दर्भान् । 7. B. om. अवलोक्य च । 8. B. °पत्राणि for °दलानि । 9. B. om. बलवद् । A. om. शरीर° । 11. A. वैतानकं for वैतानं ।

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।

न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥ २ ॥

भगवन् मन्मथ ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् ? (स्मृत्वा) आं ज्ञातम् ।

5　अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।

त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ ३ ॥

अपि च । त्वया चन्द्रमसा चाविश्वसनीयाभ्यामभिसंधीयते कामिजनः । कुतः ?

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-

10　र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-

स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ४ ॥

अथवा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।

15　यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ ५ ॥

भगवन् एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ।

वृथैव सङ्कल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम् ।

आकृष्य चापं श्रवणोपकण्ठं मय्येव युक्तस्तव बाणमोक्षः ॥६॥

क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोद-

20　यामि ? न च प्रियादर्शनादृते शरणमन्यत् । ( ऊर्ध्वमवलोक्य )

---

3. A. om. ॰तत । 7 A. यथा for अपि च । B. च विश्व॰ for चाविश्व॰ । 15. A. मयि for यदि । 17. B. ॰रभीक्ष्ण॰ for ॰रजस्र॰ । 18. B. ॰कण्ठे for ॰कण्ठं ।

इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखी-
जना तत्रभवती गमयति । भवतु, तत्रैव गच्छामि । (परिक्रम्याव-
लोक्य च) अनया बालपादपवीथ्या तत्रभवती न चिरं गतेति
तर्कयामि । कुतः ?

5 संमीलन्ति न तावद् बन्धनकोषास्तयावचितपुष्पाः
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ ७ ॥

(स्पर्शं रूपयित्वा) अहो ! प्रवातसुभगोऽयं प्रदेशः ।

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ८ ॥

10 (विलोक्य) अस्मिन्नेव वेतसलतामण्डपे शकुन्तलया भवितव्यम् ।
तथा हि—

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥९॥

यावद् विटपान्तरेणावलोकयामि । (तथा कृत्वा सहर्षम्) अये लब्धं
15 नेत्रनिर्वाणम् । एषा मनोरथप्रिया मे कुसुमास्तरणं शिलापट्टमधि-
शयाना सखीभ्यां पर्युपास्यते । भवतु, शृणोमि तावदासां
विश्रम्भकथितम् । (विलोकयन् स्थितः ।)

---

1. B. °तपवेलां° for °तपां वेलां । B. °निलय° for °वलय° ।
2. B. om. भवतु···गच्छामि । 7. B. अभिनीय for रूपयित्वा ।
A. प्रताप° for प्रवात° । A. देशः for प्रदेशः । 10. A. अव° for वि° ।
A. एतस्मिन् for अस्मिन् । A. om. वेतस । 11. A. कुतः for तथाहि ।
15. B. °स्तरणशिला° । 15. B. °पट्टक° । 16. A. om. भवतु । 17. A.
विश्रब्ध° । B. °जल्पितम् ।

( ततः प्रविशति सह सखीभ्यां शकुन्तला । )

सख्यौ—(उपवीज्य) हला सउन्तले ! अवि सुहाअदि दे णलिणीपत्त-
वादो ?

शकुन्तला—(शून्याभिनयम्) किं मं वीअअन्ति पिअसहीओ ?

5 ( उभे सविषादं परस्परमवलोकयतः । )

राजा—बलवदस्वस्थशरीरा तत्रभवती । तत् किमयमातपदोषः स्यात्,
उत यथा मे मनसि वर्तते ? (निरूप्य) अथवा कृतं संदेहेन ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
10 समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥१०॥

अनुसूया—हला सउन्तले ! अणब्भन्तरा अम्हे मअणगदस्स वुत्तन्तस्स ।
किं तु जादिसी इदिहासकधाणिबन्धेसुं कामिजणाणं अवत्था
सुणीअदि तादिसी तवावि त्ति तक्केमि । ता कधेहि किंणिमित्तं
15 दे अअं आआसो । विआरं परमत्थदाए अआणिअ अणारम्भो
पदीआरस्स ।

राजा—अनुसूययाप्यनुगतो मदीयस्तर्कः ।

शकुन्तला—(आत्मगतम्) बलिओ मे आआसो । ण सहसा सक्कुणोमि

---

3. B. °वाओ for °वादो । A. वादो ण वेत्ति । 4. A. वीअन्ति । 6. B. अस्वस्था । 7. A. om. अथवा । 12. A. °न्तरा वि । 13. A. जादिसी तादकण्णस्स सुहादो । B. कामअमाणाणं for कामिजणाणं । 14. A. om. त्ति । B. कथेहि । 15. B. om. दे । B. आआसो त्ति । 17. A. B. om. मदीयः । 18, A. बलिअं for बलिओ । A. अअं आआसो । A. सहसा ण ।

विणिवेदिदुं ।

प्रियंवदा—सहि सुट्ठु क्खु एसा भणादि । किं अत्तणो उवद्दवं उवेक्खसि ? अणुदिअहं परिहीअसि अङ्गेसुं । केवलं लावण्णमेत्तकच्छाअं ण मुञ्चसि ।

5 राजा—अवितथमाह प्रियंवदा । तथा ह्यस्याः—

क्षामक्षामकपोलमाननमुरः काठिन्ययुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥११॥

10 शकुन्तला—(निश्वस्य) कस्स वा अण्णस्स कधितव्वं ? किं ण आआमइत्तिआ वो भविस्सं ।

उभे—सहि अदो ज्जेव णो णिब्बन्धो । विभत्तं खु दुक्खं सज्झवेअणं भोदि ।

राजा—　　पृष्टा जनेन समदुःखसुखेन बाला
15　　नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
　　दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
　　मत्रोत्तरश्रवणकातरतां गतोऽस्मि ॥१२॥

शकुन्तला—जदो पहुदि सो तपोवणरक्खिदा राएसी मम दंसणपधं गदो ( इत्यर्धोक्तेन लज्जां नाटयति । )

20 उभे—कधेदु पिअसही ।

1. A. निव्वण्णिदुं । 3. B. om. अणुदिअहं । 6. B. °मुक्तस्तनं । 11. A. °इत्तआ for °इत्तिआ । 12. B. विब्भत्तं for विभत्तं । 18. A. राएसी तपोवणरक्खिदा । A. दिट्ठिपधं for मम दंसणपधं । 20. B. पिअसहीओ ।

शकुन्तला—तदो आरम्भिअ तग्गदेण अहिलासेण एदावत्थ म्हि संवुत्ता ।

उभे—दिट्ठिआ दाणि दे अणुरूअवराहिलासो । अह वा साअरं वज्जिअ कहिं वा महाणदिए पविसिदव्वं ?

5 राजा—(सहर्षम्) श्रुतं श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥१३॥

शकुन्तला—ता जदि वो अणुमदं तधा पअट्टध जधा तस्स राएसिणो अणुकम्पणीआ होमि । अध अण्णधा, पसीदध सिञ्चध दाणि मे

10 उदअं ।

राजा—( सभयानन्दम् ) अहो विमर्षच्छेदि वचनम् । एतदवस्थापि मां सुखयति ।

प्रियंवदा—( जनान्तिकम् ) अणुसूए दूरगदमम्महा । अक्खमा इअं खु कालहरणस्स ।

15 अनुसूया—अध को उवाओ भवे जेण णो सहीए अविलम्बिदं णिहुअं मणोरहं संपादेम्ह ?

प्रियंवदा—णिहुअ त्ति पअट्टिदव्वं । सिग्घ त्ति ण दुक्करं ।

---

1. A. आरहिअ for आरम्भिअ । एआवत्थ for एदावत्थ । 3. A. अणुरूआभिलासो । 4. B. कधं । B. om. वा । A. पसरिदव्वं । 5. A. श्रुतं यत् । 8. B. om. ता । 9. A. °कम्पिदा for °कम्पणीआ । 10. A. मं उअएण । 11. A. विरहेऽपि मर्मच्छेदि for अहो विमर्षच्छेदि । 13. A. दूरगदो महाराओ for दूरगदमम्महा । 13. A. om. इअं । B. om. खु । 15. A. om. अध । A. om. णो । A. om. अविलम्बिदं । A. णिहुअं सिग्घं ।

अनुसूया—कधं विअ ?

प्रियंवदा—णं सो वि राएसी इमस्सिं सिणिद्धदिट्ठिसूइदाहिलासो इमेसुं दिअसेसुं पजागरणकिसो विअ लक्खीअदि ।

राजा—सत्यमित्थंभूत एवास्मि । तथा हि—

5　अशिशिरतरैरन्तस्तापैर्विवर्णमलीमसं
　निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः ।
　अनतिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धनात्
　कनकवलयं स्रस्तं स्रस्तं मुहुः प्रतिसार्यते ॥१४॥

प्रियंवदा—(संचिन्त्य) हला अणुसूए ! मअणलेहो से करीअदु । तं अहं

10　सुमणोगोविदं कदुअ देवदावदेसेण तस्स रञ्ञो हत्थं पावइस्सं ।

अनुसूया—सहि ! रोअदि मे सुउमारो एसो पओओ । किं वा सउन्तला भणादि ?

शकुन्तला—सहि णिओओ वि विअप्पीअदि ?

प्रियंवदा—तेण हि अत्तणो उवण्णासाणुरूवं चिन्तेहि किं पि ललिद-

15　पदणिबन्धिअं गीदिअं ।

शकुन्तला—सहि चिन्तइस्सं । किं तु अवधीरणाभीरुअं उण वेवदि मे हिअअं ।

---

2. A B. om. णं and वि । A. °भिलासो । 4. A. °मेवं भूतोस्मि । 8. B. वलयः । A. पुनः for मुहुः । 9. A. om. संचिन्त्य । A. मदण° । A. त्ति after करीअदु । A. B. om. तं । 10. B. om. देव…सेण । 11. A. सउन्तला वा । 13. A. om. सहि । B. om. वि । 14. B. उअ° । A. °णुरूअं । A. कञ्चि for किं पि । A. ललिदवदगीदिअं । 16. B. om. सहि । B. चिन्तिस्सं ।

राजा—(विहस्य) अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रियो दुरापः कथमीप्सितो भवेत् ॥१५॥

5 अपि च—

अयं स यस्मात् प्रणयावधीरणा-
मशङ्कनीयां करभोरु शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति मृग्यते हि तत् ॥१६॥

10 सख्यौ—अत्तगुणावमाणिणि ! को णाम संतावणिव्वावइत्तअं सारद-जोण्हं आदवत्तेण वारइस्सदि ?

शकुन्तला—( सस्मितम् ) णिओइदम्हि । ( इति चिन्तयति । )

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथा हि—

15 उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥१७॥

शकुन्तला—हला मए चिन्तिदा गीदिआ । असंणिहिदाणि उण लेह-साहणाणि ।

प्रियंवदा—सुणम्ह दाव से अक्खराइं । तदो इमस्सिं सुओदरसिणिद्धे

1. B. om. विहस्य । 4. A. प्रियो for श्रियो । 7. मन्यसे for शङ्कसे । 10. B. अत्तणो° । A. °इत्तकं । 12. A. °जिदम्हि । B. om. इति । 13. A. °यिष्यामि for °यामि । 15. A. उल्लसितैक° । 17. B. om. हला । A. has °हिदा दाणि for °हिदाणि । 19. A. सुणाम for सुणम्ह । A. om. से ।

णलिणीवत्ते पत्तच्छेदभत्तीए णहेहिं लिहिअवण्णं करिस्ससि ।
संपदं पढीअदु दाव ।

शकुन्तला—सुणाव दाव णं विसदत्था ण व त्ति ।

उभे—अवहिदम्ह ।

5　शकुन्तला—( पठति )

तुज्झ ण आणे हिअअं मम उण मअणो दिवा अ रत्तिं च ।
णिक्किव दावइ बलिअं तुअ हुत्त मणोरहाइं अङ्गाइं ॥१८॥

राजा—( सहसोपसृत्य )

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
10　ग्लपयति यथा शशाङ्कं न तथेह कुमुद्वतीं दिवसः ॥१९॥

सख्यौ—(विलोक्य सहर्षम्) साअदं जधाचिन्तिदफलस्स अविलम्बिणो मणोरहस्स ।

शकुन्तला—(ससाध्वसा आत्मगतम्) हिअअ तधा उत्तम्मिअ इदाणिं ण किंचि पड़िवज्जसि । ( इत्युत्थातुमिच्छति । )

15　राजा—अलमायासेन ।

संदष्टकुसुमशयनान्याशुविवर्णितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥२०॥

अनुसूया—इदो सिलातलेकदेसं अणुगेण्हदु पिअवअस्सो ।

( शकुन्तला किंचित् पादावपसारयति । )

---

1. A. °भन्तीए for °भत्तीए । A. लिहिद° for लिहिअ° । B. करीहसि for करिस्ससि । 3. B. सुणाध for सुणव । A. ण वेत्ति । 7. A. तवेइ for दावइ । 11. A. आअदं for साअदं । 13. B. om. ससाध्वसा । B. उत्तम्हिअ । 16. A. °विवर्त्तित° for °विवर्णित° । 18. B. °मलंङ्करोदु for अणुगेण्हदु । A. om पिअ° ।

राजा—(उपविश्य) प्रियंवदे ! कच्चित् न सखीं वो बाधते शरीरतापः ?

प्रियंवदा—( सस्मितम् ) लद्धोसधो दाणिं उवसमं गमिस्सदि ।

अनुसूया—(जनान्तिकम्) पिअंवदे ! कालेण किं ण पेक्खसि मेहवादा-
हदं विअ गिम्हमोरिं णिमिसन्तरेण पच्चागदजीविअं पिअसहिं ?

5 ( शकुन्तला सलज्जा तिष्ठति । )

प्रियंवदा—महाराअ ! दोण्णं पि वो अण्णोण्णाणुराओ पच्चक्खो ।
सखीसिणेहो उण मं पुनरुत्तवादिणिं करेदि ।

अनुसूया—एस णं धम्मो ।

राजा—विवक्षितं ह्यनुक्तमनुतापं जनयति । अस्मात्परं किं तत् ?

10 प्रियंवदा—तेण हि इअं णो पिअसही तुमं जेव उद्दिसिअ भअवदा
मअणेण इमं अवत्थं पाविदा । ता अरिहसि अब्भुववत्तीए जीविदं
से अवलम्बिदुं ।

राजा—भद्रे साधारण एष प्रणयः । सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—( सस्मितम् ) हला अलं वो अन्तेउरविरहपज्जुसुएण राए-

15 सिणा उवरुद्धेण ।

राजा— इदमनन्यपरायणमन्यथा
हृदयसन्निहिते हृदयं मम ।

---

1. A. सखीं ते न । A शरीरातपः for शरीरतापः । 2. B. °सहो for °सधो । 3. B. खणेण पेक्ख for कालेण किं ण पेक्खसि । 4. B. णिमित्तम° for णिमिसन्त° । 6. B. दोण्ह for दोण्णं । B. वोण्णोण्णा° । 8. B. ण एस । 9. A. अस्मात् किमपरं तत् । 9. After तत् the Commentaries add अनुसूया-आश्रमवासिना जनेन राज्ञोन्तःपुरे न भवितव्यम् । 11. A. अवत्थन्तरं for अवत्थं । B. अरिहिसि for अरिहसि । 12. A. एष ते ।

यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥२१॥

अनुसूया—वअस्स ! बहुवल्लहा राआणो होन्ति । ता जधा णो पिअसही बन्धुअणसोअणीआ ण भोदि तधा णिव्वाहेसि ।

5 राजा—भद्रे ! किं बहुना–

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररसना चोर्वी सखी च युवयोरियम् ॥२२॥

उभे—णिव्वुदाओ म्ह ।

शकुन्तला—(हर्षं सूचयित्वा जनान्तिकम्) हला मरिसावेध लोअपालं ।

10 जं अम्हेहिं वीसद्धप्पलाविणीहिं उवआरादिक्कमेण भणिदं तं मरिसीअदु ।

उभे—(सस्मितम्) जेण जं मन्तिदं सो ज्जेव तं मरिसावेदु । अण्णस्स जणस्स उण को पच्चओ ?

शकुन्तला—अरिहदि क्खु महाराओ इमं पच्चक्खवअणं सोढुं । परोक्खं

15 वा किं न मन्तीअदि ?

राजा—अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गसृष्टे ।
कुसुमास्तरणे क्लमापहं मे स्वजनत्वादनुमन्यसेऽवकाशम् ॥२३॥

---

3. A. सुणीअन्ति for होन्ति । 4. A. °जण° for °अण° । B. होदि for भोदि । A. णिव्वाहेसि त्ति । 8. A. णिव्वुदम्ह । 9. A. om. जनान्तिकं । B. लोअवाअं । 10. A. om. जं । B. विसम्बद्ध° । A. वीसम्हदुप्प° । A. उवअरा° for उवआरा° । 11. A. मरिसीअदु त्ति 13. A. om. जणस्स । A. अच्चाहिदो for पच्चओ । 14. B. अरहदि । A. om. इमं । A. पसत्त° for पच्चक्ख° । 16. A. °मिदं for °मिमं । A. °मृष्टे for °सृष्टे । 17. A. सुजन° for स्वजन° । A. °दव° for °दनु° ।

प्रियंवदा—णं एत्तिकेण ज्जेव तुट्ठी भविस्सदि ?

शकुन्तला—विरम दुल्ललिदे ! एदावत्थं गदाए वि मए कीडसि तुमं ।

अनुसूया—( बहिर्विलोक्य ) सहि पिअंवदे ! एस तवस्सी मिअपोदओ इदो तदो दिण्णदिट्ठी णूणं परिब्भट्ठो पज्जुसुओ मादरं अण्णे-

5 सदि । ता संजोएमि दाव णं ।

प्रियंवदा—हला चवलो क्खु एसो दुव्विणीदो । ता ण एणं संजोइदुं एआइणी पारेसि । ता अहं पि सहाअत्तणं करइस्सं ।

( उभे प्रस्थिते । )

शकुन्तला—हला ण वो गमनं अनुमण्णे । असहाइणि म्हि ।

10 उभे—(सस्मितम्) तुमं दाणि असहाइणी ? जं पुहवीणाहो दे समीवे वट्टदि । ( इति निष्क्रान्ते । )

शकुन्तला—कधं गदाओ पिअसहीओ ?

राजा—( दिशोऽवलोक्य ) सुन्दरि अलमावेगेन । नन्वयमाराधयिता जनस्ते सखीभूमौ वर्तते ।

15 किं शीकरैः क्लमविनोदिभिरार्द्रवातं

संचारयामि नलिनीदलतालवृन्तम् ।

अङ्के निधाय चरणावुत पद्मताम्रौ

संवाहयामि करभोरु यथासुखं ते ॥२४॥

शकुन्तला—ण माणणीए जणे अत्ताणअं अवराहइस्सं ।

---

1. B. एत्तकेण । A. om. ज्जेव । 2. A. °वत्थगदाए । 3. B. om. सहि । A. मअपोदओ । 4. B. om. तदो । B. णूणं उसुओ । B. om. पज्जुसुओ । A. पब्भट्ठो । 5. B. ताव for दाव । 7. A. सहाअदं for सहाअत्तणं । 10. A. तुम्हे for तुमं । B. om. दे । 14. B. तिष्ठति for वर्तते । 19. B. अत्ताणं । B. °राधइस्सं for °राहइस्सं ।

( इति अवस्थासदृशमुत्थाय प्रस्थिता । )

राजा—सुन्दरि ! अपरिनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः ॥२५॥

5 ( इति बलान्निवारयति । )

शकुन्तला—मुञ्च मुञ्च । ण क्खु अहं अत्तणो पहवामि । अहवा सही-
मेत्तसरणा किं दाणि एत्थ करइस्सं ?

राजा—धिक् व्रीडितोऽस्मि !

शकुन्तला—ण क्खु अहं महाराअं भणामि । देव्वं उआलहामि ।

10 राजा—अनुकूलकारि किमुपालभ्यते दैवम् ?

शकुन्तला—कधं दाणि ण उआलहिस्सं ? जं अत्तणो अणीसं मं पर-
गुणेहिं लोहावेदि ।

राजा—(स्वगतम्)

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
15 काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाध्यन्ते न खलु मदनेनापि लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥२६॥

( शकुन्तला गच्छत्येव । )

राजा—कथमात्मनः प्रियं न करिष्ये ?

---

1. A. om इति । 2. A. om. च । 5. A. निवर्तयति । 7. B. करिस्सं । 10. B. उपलंभ्यते for उपालभ्यते । 10. A. उवाल° । 11. A. जं मं । A. om. मं । 12. A. °गुणेसुं for °गुणेहिं । 13. B. आत्मगतं । 18. B. प्रस्थितैव ।

( उपसृत्य पटान्तरमवलम्बते । )

शकुन्तला—(कृतककृतककोपा) पोरव रक्ख अविणअं । इदो तदो इसिओ संचरन्ति ।

राजा—सुन्दरि ! अलं गुरुजनाद् भयेन । न ते विदितधर्मा तत्रभवान्

5 कण्वः खेदमुपयास्यति ।

गान्धर्वेण विवाहेन बह्व्यो हि मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥२७॥

(दिशोऽवलोक्य) कथं प्रकाशं निर्गतोऽस्मि ? (ससंभ्रमं शकुन्तलां हित्वा तेनैव पथा पुनर्निवर्तते । )

10 शकुन्तला—( पदान्तरे प्रतिनिवृत्य ) पोरव ! अणिच्छापूरओ वि खणमेत्तपरिचिदो अअं जणो ण विसुमरिदव्वो ।

राजा—सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिनावसानच्छायेव पुरोमूलं वनस्पतेः ॥२८॥

15 शकुन्तला—( आत्मगतम् ) हद्धी हद्धी इमं सुणिअ ण मे चरणा पुरोमुहा पसरन्ति । भोदु, इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा पेक्खिस्सं दाव से भावाणुबन्धं । ( तथा कृत्वा स्थिता । )

राजा—प्रिये ! कथमेवमनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि ।

---

2. A. om. पटान्तरम् । 6. B. °पि for हि । 7. A. पितृभ्यः । 9. A. पदेन for पथा पुनः । 10. B. प्रतिनिवर्त्य । A. °पूरणो वि संभासणमेत्तपरि° । 11. B. अयं । 15. A. om. आत्मगतं । A. पुरोअदाए for पुरोमुहा । 16. B. वारिद° for ओवारिद° । 18. A. किमेव° for कथमेव° । A. °मुपेक्ष्य for °मुत्सृज्य ।

अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥२९॥

शकुन्तला—एवं सुणिअ ण मे अत्थि विहवो गच्छिदुं ।

राजा—संप्रति प्रियाशून्ये किमस्मिन् करोमि । ( अग्रतोऽवलोक्य
5  विचिन्त्य च ) हन्त ! व्याहतं गमनम् ।

मणिबन्धाद् गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥३०॥

( सबहुमानमादत्ते । )

शकुन्तला—(हस्तं विलोक्य) अम्मो दोब्बल्लसिढिलदाए एदं परिब्भट्ठं
10  मुणालवलअं मए ण विण्णादं ।

राजा—( मृणालवलयमुरसि निक्षिप्य ) अहो स्पर्शः !

अनेन लीलाभरणेन ते प्रिये
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभा-
15  गचेतनेनापि सता न तु त्वया ॥३१॥

शकुन्तला—अदो अवरं असमत्थम्हि अहं विलम्बिदुं । भवदु, एदेण
ज्जेव ववदेसेण अत्ताणअं दंसइस्सं । ( इत्युपसर्पति । )

राजा—( दृष्ट्वा सहर्षम् ) अये जीवितेश्वरी मे प्राप्ता । परिदेवितानन्तरं

---

3. A. अत्र for एवं । A. णत्थि मे । B. गन्तुं । 4. A. किमत्र for किमस्मिन् । A. om. अग्रतः । 8. A. बहुमान° । 9. B. दोब्बल्लदाए सिढिल° । 10. B. °वलयं for °वलअं । 11. B. दत्वा for निक्षिप्य । 12. B. °वलयेन । 14. B. एव for एष । 16. A. असमत्था for असमत्थम्हि । 17. A. अत्ताणं for अत्ताणअं ।

प्रसादिनः खलूपकर्तव्योऽस्मि दैवस्य !

पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥३२॥

शकुन्तला—(राज्ञः संमुखे स्थित्वा) अज्ज अद्धपथे सुमरिअ एदस्स
5 हत्थब्भंसिणो मुणालवलअस्स किदे आअदम्हि । आचक्खिदं
विअ मे हिअएण तए गहिदं ति । ता णिक्खिप एदं । मा
अत्ताणअं मं च मुणिअणे असूअइस्ससि ।

राजा—एकेनाभिसंधिना प्रत्यर्पयामि ।

शकुन्तला—भण ।

10 राजा—यद्यहमेव यथास्थानं निवेशयामि ।

शकुन्तला—( स्वगतम् ) का गदी ? ( प्रकाशम् ) एवं करेहि ।
( इत्युपसर्पति । )

राजा—इतः शिलापट्टकमेव संश्रयावः । ( उभौ परिक्रम्योपविष्टौ । )

राजा—( शकुन्तलाया हस्तमादाय आत्मगतम् । ) अहो स्पर्शः !

15 हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः संभृतो भूयः किंस्वित् कामतरोरयम् ॥३३॥

शकुन्तला—(स्पर्शं रूपयित्वा) तुवरदु तुवरदु अज्जउत्तो ।

---

1. A. °नन्तरप्रसादिन उपकर्तव्योस्मि खलु । 4. B. पुरतः for संमुखे । A. अहं for अज्ज । B. सुमरिदं मए for सुमरिअ । 5. A. B. कदे for किदे । A. पडिणिअत्तम्हि for आअदम्हि । 6. A. उवगहिद त्ति for गहिदं ति । B. एवं for एदं । B. मा मं अत्ताणं च । 6. B. अवराहइस्ससि । 9. B. omits this speech of शकुन्तला । 10. A. °मेव ते । B. यथास्थाने । 11. B. का खु । 12. A. om. इत्युपसर्पति । 14. A. om. आतमगतं । 17. B. अभिनीय for रूपयित्वा । A. तुअरदु ।

राजा—(सहर्षमात्मगतम्) इदानीमस्मि विश्वसितः। भर्तुराभाषणपदमेतत्। (प्रकाशम्) सुन्दरि! नातिश्लिष्टः संधिरस्य मृणालवलयस्य। तदन्यथा घटयितव्यः।

शकुन्तला—(विहस्य) जधा दे रोअदि।

5 राजा—(सव्याजं विलम्ब्य प्रतिमुच्य) सुन्दरि दृश्यताम्।

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥३४॥

10 शकुन्तला—ण दाव पेक्खामि। पवनकम्पिणा कण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी।

राजा—(सस्मितम्) यदि मन्यसे, तदहमेनां मुखमारुतेन विशदां करिष्ये।

शकुन्तला—तदो अणुकम्पिदा भवे। अहं ण उण दे वीससिमि।

15 राजा—मा मैवम्। नवो हि परिजन आदेशात् परं नातिवर्तते।

शकुन्तला—अअं जेव दे अच्चाअरो अविस्सासजणओ।

राजा—नाहमेवं रमणीयमात्मनः सेवावकाशं शिथिलयिष्ये। (मुखमुन्नमयितुं प्रवृत्तः। शकुन्तला अकामप्रतिषेधं रूपयन्ती विरमति।)

---

1. A. om. मृणाल। 3. B. °मोच्य च for °मुच्य च। 4. A. °मनोहरः। 10. B. ण दाणि for णं दाव। 14. B. om. तदो। B. om. अहं। B. वीससामि for वीससिमि। 16. A. अअमेव for अअं जेव। A. अच्चुअरो for अच्चाअरो। 17. A. करणीय° for रमणीय°। B. °मेव°or °मेवं। 18. B. कृत्वा for रूपयन्ती। A. om. विरमति।

राजा—पर्यश्रुताम्रेक्षणे ! अलमस्मदविनयाशङ्कया । (शकुन्तला किंचिद् दृष्ट्वा अवनतमुखी तिष्ठति । )

राजा—( अङ्गुलीभ्यां मुखमुन्नमय्य आत्मगतम् । )

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।

5 पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥ ३५ ॥

शकुन्तला—पडिण्णादमन्थरो विअ अज्जउत्तो ।

राजा—सुन्दरि ! कर्णोत्पलसान्निध्यादीक्षणसादृश्यमूढोऽस्मि । (मुख-मारुतेन चक्षुः सेवते । )

शकुन्तला—भो पइदित्थिददंसणम्हि संवुत्ता । लज्जामि उण अणुव-

10 आरिणी पिअआरिणो अज्जउत्तस्स ।

राजा—सुन्दरि ! किमन्यत् ।

इदमप्युपकृतिपक्षे सुरभि मुखं ते मया यदाघ्रातम् ।

( सस्मितम् )

न तु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण ॥३६॥

15 शकुन्तला—( विहस्य ) असंतोसे उण किं करेदि ?

राजा—इदमिदम् । ( इति व्यवसितः । शकुन्तला वक्त्रं ढौकते । )

(नेपथ्ये) अइ चक्कवाअवहू आमन्तेहि सहअरं । उवत्थिदा रअणी ।

---

1. B. °विनय for विनया° । 1. A. om. किंचिद्दृष्ट्वा । 3. A. अङ्गुल्या । 6. A. पलिञ्ञाद° for पडिण्णाद° । A. अज्जउत्तो लक्खीअदि । 7. A. °सन्निकर्षात् for °सान्निध्यात् । 9. A. °दित्थदंस° for °दित्थिददंस° । B. °दंसणा संवुत्तम्हि । B. क्खु for उण । 12. B. सुरभि मुखं यन्मयाघ्रातम् । 13. A. om. सस्मितम् । 14. A. om. विहस्य । 15. A. व्यवसितः करोति इति वक्त्रं । B. व्यवस्यतीति । 16. B. अयि । A & B °वहूए ।

शकुन्तला—( कर्णं दत्वा ससंभ्रमम् ) अज्जउत्त एसा मम वुत्तन्तो-
पलम्भणिमित्तं अज्जा गोदमी आअदा । ता विडवन्तरिदो होहि ।

राजा—तथा । ( इति एकान्ते स्थितः । )

( प्रविश्य शान्त्युदकपात्रहस्ता ) गौतमी—जाद ! सन्तिउअअं । कुदो
5 चिट्ठसि ? ( दृष्ट्वा ) अच्चाहिदं । असुत्था दाणि देवदासहाइणी
चिट्ठसि ?

शकुन्तला–इदाणिं जेव पिअंवदाअणुसूआओ मालिणिं अवदिण्णाओ ।

गौतमी—( शान्त्युदकेन शकुन्तलामभ्युक्ष्य ) जाद ! अवि लहुसंतावाइं
दे अङ्गाइं ? ( इति स्पृशति । )

10 शकुन्तला—अज्जे अत्थि विसेसो ।

गौतमी—तेण हि णिराबाधा चिरं मे जीव । जाद ! परिणदो
दिअसो । ता एहि । उडअं जेव गच्छम्ह ।

शकुन्तला—(कथंचिदुत्थायात्मगतम्) हिअअ ! पढमं सुहोवणदे मणो-
रहे कालहरणं करेसि । संपदं अधण्णाए बट्टिदस्य किं पि
15 पड़िवज्जसि । ( इति पदान्तरे प्रतिनिवृत्य प्रकाशम् ) लताहरअ
सन्तावहारअ ! आमन्तेमि दे पुणो वि परिभोअत्थं । ( इति
निष्क्रान्ते । )

---

2. B. तादकण्णस्स धम्मकनीयसी अज्जा । A. दाव होहि । 4. A. ततः प्रविशति । B एदं सन्तिउअअं । 5. B. एआइणी for असुत्था दाणि । 7. A. °सूआ...दिण्णा । 8. B. अभिषिच्य for अभ्युक्ष्य । A. °संदावाइं for °संतावाइं । 9. A. कधं अत्थि विसेसो after अङ्गाइं । 10. A. अज्जा । B. अज्ज । 11. A. om. मे । B. परिणदो वि । 13. A. सुहोप° for सुहोव° । 14. B °रघे for °रहे । 14. A. अण्णधा वट्टमाणस्स दे भवि-स्सदि । 15. A. सप्रकाशं । A. लताहर for लताहरअ ।

राजा—( पूर्वस्थानमवलोक्य सनिःश्वासम् ) अहो विघ्नवत्यः प्रार्थि-
तार्थसिद्धयः ।

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
5　मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तत् ॥३७॥

क्व नु खलु गच्छामि संप्रति ? अथवा इहैव प्रियापरिभुक्ते मण्डपे मुहूर्त्तं तिष्ठामि । (सर्वतोऽवलोक्य)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
10　कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि ॥३८॥

हा हा धिक् ! न सम्यगाचेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया । तदिदानीं—

15　रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि प्रकृतिदुरवापा हि विषयाः ।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥३९॥

(नेपथ्ये) भो भो राजन् !

---

1. B. °मुपेत्य for °मवलोक्य । 2. B. °संसिद्धयः । 7. B. लतामण्डपे प्रियापरिभुक्ते । 8. B. om. मण्डपे । 13. A. हा धिक् twice. A. प्रियां प्रति । A. om. समासाद्य ।

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ ४० ॥

5 राजा—भो भोस्तपस्विनः! मा भैष्ट। अयमहमागच्छामि। (इति साटोपं परिक्रामति।)

। इति निःक्रान्तः ।

॥ शृङ्गारभोगो नाम तृतीयोङ्कः ॥



5. A. om. अहं। 6. B. इति निःक्रान्ताः सर्वे।

( ४ )

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ । )

अनुसूया—पिअंवदे ! जइ वि गन्धव्वेण विआहेण णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तधा वि ण णिव्वुदं मे हिअअं । एत्तिकं दाणिं चिन्तणीअं ।

5 प्रियंवदा—किं ति ?

अनुसूया—जहा सो राआ इट्ठिपरिसमत्तीए इसीहिं पेसिदो हत्थिणाउरं णअरं पविसिअ अन्तेउरिआसमागदो इमं जणं सुमरेदि ण वेत्ति ।

प्रियंवदा—एत्थ दाव वीसत्था होहि । ण हि तादिसा आकिदि-

10 विसेसा गुणविरोहिणो होन्ति । एत्तिकं उण चिन्तणीयं । तादो दाणिं तित्थादो पडिणिअत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जइस्सदि त्ति ।

अनुसूया—जधा मं पुच्छसि तधा अणुमदं तादस्स ।

प्रियंवदा—कधं विअ ?

---

1. A. प्रसूना° for कुसुमा° । । 3. B. अणुरूअ° । A. संवुत्त त्ति । B. तथा । 4. B. om. एत्तिकं दाणिं चिन्तणीअं । 5. A. कधं विअ for किं ति । 6. B. अज्ज for जहा । A. इसिहिं । A. परिपेसिदो । B. णअरं before हत्थिना° । 9. A. ईदिसा for तादिसा । 10. A. दाव for उण । 12. B. °ज्जस्सदि त्ति ।

अनुसूया—अणुरूवस्स वरस्स हत्थे कण्णका पडिवादणीअ त्ति अअं दाव तस्स पढ़मो संकप्पो । तं जइ देव्वं जेव संपादेदि णं कदत्थो गुरू ।

प्रियंवदा—एवं णेदं । (पुष्पभाजनमवलोक्य) अवचिदाइं बलिकम्म-
5 पज्जत्ताइं कुसुमाइं ।

अनुसूया—णं सउन्तलाए वि सोहग्गदेवदाओ अच्चणीआओ । ता अवराइं पि अवचिणुम्ह ।

प्रियंवदा—जुज्जदि । ( उभे तदेव कर्माभिनयतः । )

( नेपथ्ये ) अयमहं भोः !

10 अनुसूया—( कर्णं दत्वा ) सहि अदिधिणा विअ णिवेदिदं ।

प्रियंवदा—णं उडए ज्जेव सउन्तला सण्णिहिदा ।

अनुसूया—आं । अज्ज उण असण्णिहिदा हिअएण ।

प्रियंवदा—भोदु, एत्तिकेहिं कुसुमेहिं पओअणं । ( उभे प्रस्थिते । )

( पुनर्नेपथ्ये ) आः अतिथिं मां परिहरसि !

15 विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

( उभे श्रुत्वा विषण्णे । )

---

1. A. वरस्स अणुरूअस्स कण्णा···। B. अवस्सं अणुरूवस्स वरस्स हत्थे कण्णका···। 2. B. पढुमं । A. जदि । B. दिव्वं । B. पडिवाडेति for संपादेदि । 5. A. पसत्थाइं for पज्जत्ताइं । 6. A. om. णं । 11. A. उडअं । A. om. सण्णिहिदा । 12. B. om. अ in असण्ण° । 13. A. om. प्रियंवदा । A. एत्त° for एत्ति° । 18. A. प्रथमां । 19. B. विवर्णे ।

प्रियंवदा—हद्धी हद्धी तं जेव्व संवुत्तं । कस्सिं पि पूआरहे अवरद्धा सुण्णहिअआ पिअसही ।

अनुसूया—(विलोक्य) सहि ण क्खु जस्सिं कस्सिं वा । एसो दुव्वासा सुलहकोवो महेसी अविरलं तुरिदाए गदीए पडिणिअत्तो ।

5 प्रियंवदा—को अण्णो हुअवहादो डहिदुं पहवदि । ता गच्छ । पाएसुं पणमिअ णिअत्तावेहि । जाव से अहं पि अग्घोअअं उवकप्पेमि ।

अनुसूया—तथा । ( इति निष्क्रान्ता । )

प्रियंवदा—( पदान्तरे स्खलितं रूपयन्ती) अम्मो ! आवेअक्खलिदाए मे परिब्भट्ठं अग्गहत्थादो पुप्फभाअणं । ( पुष्पावचयमादत्ते । )

10 (प्रविश्य) अनुसूया—सहि सरीरो विअ कोवो कस्स वि सो अणुणअं ण गेह्णादि । किंचि उण साणुकम्पो कदो ।

प्रियंवदा—णं खु एदं जेव्व तस्सिं बहुदरं । ता कधेहि कधं दाणि सो तुए पसादिदो ।

अनुसूया—सहि सो जदा णिअत्तिदुं ण इच्छदि, तदा पादेसुं पणमिअ विण्णाविदो मए । भअवं पढुमं भत्ति अवेक्खिअ अज्ज तव

15 अविण्णादप्पहावपरमत्थस्स दुहिदाजणस्स भअवदा एसो अवराधो मरिसिदव्वो त्ति ।

---

1. B. om. प्रियंवदा । A. पूजाविधे । 2. B. णो पिअसही । 3. A. om. विलोक्य । A. तस्सिं for कस्सिं । 4. A. अविलम्बतुरिदाए । 5 B. अण्णो को । A गच्छ अणुसूए । 5. B. पादेसुं । 6. B. पणमिअ । A. ते for से । 7. B. अग्घोदअं । B. उअ° । 8. B. अभिनीय for रूपयन्ती । A. परिक्खलिदाए गदीए । 9. A. om. मे । 11. B. गेह्णदि । B. किं च for किंचि । B. सानु° for साणु° । A. मए at the end. 12. A. तस्स for तस्सिं । B. बहुअरं for बहुदरं । B. कथेहि for कधेहि । B. कथं for कधं । 13. B. तए for तुए । 15. B. अज्जाव for अज्ज तव । 16. B. °पहाव° । 16. B. om. एसो ।

प्रियंवदा—तदो तदो ।

अनुसूया—तदो सो भणादि-ण मे वअणं अण्णधा भविदुं अरिहदि। किं तु अहिण्णाणाहरणदंसणादो सावो णिअत्तइस्सदि त्ति मन्तअन्तो ज्जेव अन्तरहिदो ।

5 प्रियंवदा—सक्कं दाणि अस्ससिदुं । अत्थि उण तेण राएसिणा पत्थिदेण णामधेअङ्किदं अत्तणो अङ्गुलीअअं सुमराअणीअ त्ति सउन्तलाए सअं पिणद्धं । ता से साहीणो उवाओ भविस्सदि ।

अनुसूया—एहि देवदाकज्जं दाव णिव्वुत्तम्ह । ( इति परिक्रामतः । )

प्रियंवदा—( विलोक्य ) अणुसूए ! पेक्ख दाव वामहत्थ-विणिहिद-

10 वअणं आलिहिदं विअ पिअसहिं । भत्तुगदाए चिन्ताए अत्ताणअं पि एसा ण विहावेदि किं उण अदिधिविसेसं ।

अनुसूया—पिअंवदे ! दोहिं ज्जेव णो मुहे एसो साववुत्तन्तो चिट्ठदु । रक्खणीआ क्खु पइदिपेलवा पिअसही ।

प्रियंवदा—को दाणि उण्होदएण णोमालिअं सिञ्चेदि ?

15 ( इत्युभे निष्क्रान्ते । )

॥ इति प्रवेशकः ॥



2. B. अर्हदि । 3. B. णिवत्त' for णिअत्त । 5. B. आसुसिदुं । B. जदो for अत्थि उण । 6. A. अङ्गुलीअअं सउन्तलाए दिण्णं सुमराअणिअत्तितं । तस्सिं for ता से । 8. B. देवदाकज्जं दाव । 10. B. अहिलिहिदं for आलिहिदं । 11. B. विभावेदि । 12. B. दोण्हं । 14. B. सिञ्चदि । 16. A. om. इति प्रवेशकः ।

(ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः ।)

शिष्यः—वेलोपलक्षणायादिष्टोऽस्मि तत्रभवता प्रवासात् प्रतिनिवृत्तेन कण्वेन । तत् प्रकाशं निर्गत्यावलोकयामि किन्ववशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च ) हन्त प्रभातम् ! तथा हि–

5

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसंध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ।। २ ।।

अपि च–

10

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
र्दूरारोहो भवति महतामप्यपभ्रंशनिष्ठः ।। ३ ।।

अपि च । यत्सत्यं सूर्याचन्द्रमसौ जगतोऽस्य संपद्विपत्यो-रनित्यतां दर्शयत इव । तथाहि–

15

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरस्सर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इव व्यसनोदयेषु ।। ४ ।।

20

2. B. भगवता for तत्रभवता । A. प्रवासात् for तीर्थात् । 3. A. om. कण्वेन ।

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
5 दुःखानि नूनमतिमात्रदुरुद्वहानि ॥ ५ ॥

(प्रविश्यापटीक्षेपेण) अनुसूया—एवं पि णाम विसअपरम्मुहस्स एवं ण विदिदं जधा तधाविधेण राएसिणा सउन्तलाए अणज्ज-माचरिदं ति ।

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि। (इति निष्क्रान्तः।)

10 अनुसूया—णं पभादवेला । तं णिद्दं पडिच्चआमि । अधवा पलिबुद्धा वि दाणिं किं करइस्सं । ण मे उइदेसुं पभादकरणीएसुं हत्था पसरन्ति । सकामो दाणिं कामो भोदु जेण णो पिअसही सुद्ध-हिअआ असच्चसंधे जणे पदं कारिता । ( स्मृत्वा ) अधवा ण तस्स राएसिणो अवराहो । एसो दुव्वासा-सावो क्खु पहवदि ।
15 अण्णधा कधं दाणिं सो राएसी तादिसाइं मन्तिअ एत्तिकस्स वि कालस्स वत्तामेत्तकं पि ण विसज्जेदि । (विचिन्त्य) इदो अहिण्णाणअङ्गुलीयकं विसज्जेमि त्ति । अधवा णिअदुःखसीले

---

5. B. एदं । B. om. विसअ…विदिदं । B. णाम णिवलिदं । 6. B. तथा° । B. om. सउन्तलाए । 7. °दव्व त्ति for °दं ति । 9. B. णिअं for तं णिद्दं । 10. A. om. वि । B. ण मे उण । B. उए° for उइ° । 11. A. पहवन्ति । 13. B. इदो स for ण तस्स । B. राएसिणो ण । B. अवराधो for अवराहो । B. om. एसो । B. दुव्वास° for दुव्वासा° । 16. B. अवि° for अहि° । B. °रीयकं° for °लीअकं° । B. °ज्जामि for °ज्जेमि । B. अहवा for अधवा । B. णिद्दुर° for णिअदुक्ख°

तवस्सिजणो को अब्भत्थीअदु ? णं सहीगामिदोसो त्ति कदुअ ववसिदाओ वि ण पारेम्ह तादकण्णस्स दुस्सन्तपरिणीदं आवण्णसत्तं पिअसहिं णिवेदिदुं । एत्थ दाणिं किं णु क्खु अम्हेहिं करणीअं ?

5 (प्रविश्य) प्रियंवदा—अणुसूए ! तुवरदु तुवरदु । सउन्तलाए पत्थाण-कोदुआणि करीअदु त्ति ।

अनुसूया—(सविस्मयम्) सहि कधं विअ ?

प्रियंवदा—सहि सुणाहि । दाणिं जेव सुहसुविदापुच्छणणिमित्तं सउन्तलाए समीवं गदम्हि ।

10 अनुसूया—तदो तदो ।

प्रियंवदा—जाव णं लज्जावणदमुहिं परिस्सइअ तादकण्णो से एवं अहिणन्ददि । वच्छे ! दिट्ठिआ धूमोवरुद्धदिट्ठिणो वि जजमाणस्स हुअवहस्स ज्जेव मुहे आहुदी णिवड़िदा । सुसिस्सपडिवाडिदा विअ विज्जा असोअणीयासि मे संवुत्ता । ता अज्ज ज्जेव तुमं

15 इसिपडिग्गहिदं कदुअ भत्तुणो सआसं विसज्जेमि त्ति ।

अनुसूया—सहि अध केण उण आअक्खिदो तादकण्णस्स अअं वुत्तन्तो ?

प्रियंवदा—णं सुण्णअग्गिसरणं पइट्ठस्स सच्छन्दवदीए वाआए ।

---

1. B. अवत्थणीअदु for अब्भत्थीअदु । 3. B. सउन्तलं for पिअसहिं । B. किं णु for किं । 4. B. करीअदु त्ति for करणीअं । 5. B. तुवर तुवर । 6. B. कोतूहलाणि for कोदुआणि । 8. B. सुणादु सही । A. इदाणिं । B. °वुत्तन्त° for °पुच्छण° । 10. B. omits this line. 11. A. om. एवं । 12. A. om. वि । 13. B. om. °स्स ज्जेव । B. °आ for °दा । 14. B. विज्जा विअ । 15. A. अआसं for सआसं । A. विसज्जआमि त्ति ।

अनुसूया—( सविस्मयम् ) कधं विअ ?

प्रियंवदा—सहि सुण । ( संस्कृतमाश्रित्य पठति । )

दुष्मन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥६॥

5 अनुसूया—( प्रियंवदामाश्लिष्य ) सहि पिअं मे पिअं मे । किं तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं दाणि परितोसमणुभवामि ।

प्रियंवदा—उक्कण्ठं विणोदइस्सामो । सा दाणि तवस्सिणी णिव्वुत्ता भोदु ।

10 अनुसूया—तेण हि एदस्सिं चूअसाहावलम्बिदे णालिएरसमुग्गके तण्णिमित्तं जेव णिक्खित्ता कालन्तरक्खमा केसरचुण्णा चिट्ठन्ति । ते तुमं णलिणीपत्तगदे करेहि । जाव से अहं पि गोरोअणं तित्थमट्टिअं दुव्वाकिसलआइं मङ्गलत्थं समालहणं विरएमि । ( प्रियंवदा तथा करोति । अनुसूया निष्क्रान्ता । )

15 ( नेपथ्ये )—गौतमि ! आदेशय शाङ्गरव-शारद्वतमिश्रान्—वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्तः ।

प्रियंवदा—(कर्णं दत्वा) अणुसूए ! तुवर तुवर । एदे क्खु हत्थिणा-उरगामिणो इसिओ सद्दावीअन्ति ।

---

1. B. om. स° । 2. B. om. पठति । 6. B. णीअदु त्ति । A. दाणि से । 7. B. परिदोस° for परितोस° । 10. B. चूद° for चूअ° । B. णालिएल° for णालिएर° । 11. A. °णिमित्त for °णिमित्तं । 12. B. तं तुमं for ते तुमं । B, °वत्तगतं for °पत्तगदे । B. ताव for जाव । 13. A. गोरोअण° । A. समालिहणं for समालहणं । B. समालहणं च । 15. A. शारङ्गरव & सारत्वत throughout.

(प्रविश्य समालभनहस्ता) अनुसूया—पिअंवदे ! एहि गच्छम्ह ।

( इति परिक्रामतः । )

प्रियंवदा—(नेपथ्याभिमुखमवलोक्य) एसा सुज्जोदअ ज्जेव सुहमज्जिता पलिच्छिदणीवारभाअणाहिं तावसीहिं अहिणन्दीअमाणा
5 सउन्तला चिट्ठदि । ता उअसप्पम्ह णं । ( तथा कुरुतः । )

( ततः प्रविशति यथानिर्दिष्टपरिवारा शकुन्तला आसनस्था गौतमी च । )

शकुन्तला—भअवदि पणमामि ।

गौतमी—जाद भत्तुणो बहुमाणइत्तअं देवीसद्दं अहिगच्छ ।

10 अपरे तापस्यौ—वच्छे वीरप्पसविणी होहि । ( इत्याशिषं दत्वा निष्क्रान्ते गौतमीवर्जं तापस्यौ । )

सख्यौ—( उपगम्य ) सहि सुहमज्जणं दे भोदु ।

शकुन्तला—साअदं पिअसहीणं । इदो णिसीदध ।

सख्यौ—(उपविश्य) हला ! उज्जुआ दाव होहि जाव दे मङ्गल-
15 समालहणं करेम्ह ।

शकुन्तला—उज्जुअम्हि । उइदं पि एदं अज्ज बहुदरं मणिणादव्वं । दुल्लहं दाणि पुणो वि मे सहीमण्डणं भविस्सदि । ( इति बाष्पं विसृजति । )

---

4. A. °बाअणाहिं for °भाअणाहिं । A. अहिणन्दि° for अहिणन्दी° । 5. A. om. णं । 6. A. °परीबारा । 9. A. एका तापसी for गौतमी । A. °इत्तकं for °इत्तअं । 10. A. आशिषो for आशिषं । 14. B. दाणि for दाव । 16. B. om. उज्जुअम्हि । B. assigns the sentence उइदं पि···मणिणादव्वं to सख्यौ । B. उचिदं । 17. B. शकु° at the beginning of this line । A. om. वि ।

सख्यौ—सहि ण जुत्तं मङ्गलकाले रोदिदुं । (शकुन्तलाया अश्रूणि
परिमृज्य नाट्येन प्रसाधयतः । )

प्रियंवदा—अहो आहरणारिहं से रूअं अस्समसुलहेहिं कुसुमपसाहणेहिं
विप्पआरीअदि ।

5 ( ततः प्रविशत आभरणहस्तौ मुनिकुमारकौ । )

एकः—इदमिदमलङ्कारजातम् । अलंक्रियतामायुष्मती शकुन्तला ।

(सर्वा विलोक्य विस्मिताः । )

गौतमी—वच्छ हारीद ! कुदो आसादिदं ?

हारीतः—तातकण्वप्रभावात् ।

10 गौतमी—किं माणसी सिद्धी ?

हारीतः—न खलु । श्रूयताम् । तत्रभवता कण्वेन वयमाज्ञापिताः-
शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमाभरणान्याहरेति । ततः-

क्षौमं केनचिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
15 अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायाप्रतिस्पर्धिभिः ॥७॥

प्रियंवदा—( शकुन्तलां विलोक्य ) हला कोडरसंभवा वि महुअरी
पोक्खरमहुं जेव अहिलसदि ।

---

1. B. °आले for °काले । B. रोइदुं for रोदिदुं । 2. B. प्रमृज्य for परिमृज्य । 3. A. om. प्रियंवदा at the beginning of this line. । B. °पसाअणेहिं । 10. A. किं णु । 12. B. कुसुमान्याभ° । 14. A. °सुलभो । 17. B. om. वि । 18. B. पोक्खरअं for पोक्खरमहुं । A. अहिरसेदि ।

गौतमी—जाद इमाए अब्भुववत्तीए सूइदा दे भत्तुणो गेहे अणुभविदव्वा राअलच्छी। (शकुन्तला लज्जां रूपयति।)

अनुसूया—अणणुभूदभूसणो अअं जणो कधं तुमं अलंकरेदु ? ( इति चिन्तयित्वा विलोक्य च ) चित्तकम्मपरिचएण जाणिअ अङ्गेसुं

5 आहरणविणिओअं करेम्ह।

शकुन्तला—जाणामि वो णिउणत्तणं। (इति सख्यौ नाट्येनालंकारमायुञ्जाते।)

प्रथम ऋषिकुमारकः—गौतम! एहि। अभिषेकावतीर्णाय तातकण्वाय वनस्पतिसेवां निवेदयावः।

10 द्वितीयः—तथा। ( इति निष्क्रान्तौ। )

( ततः प्रविशति स्नानावतीर्णः कण्वः। )

कण्वः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम्।
15 वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः॥ ८॥

( इति परिक्रामति। )

सख्यौ—हला सउन्तले! अवसिदमण्डणा दाणि सि तुमं। ता परिधेहि संपदं एदं पवित्तं खोमजुअलं।

20 (शकुन्तला उत्थाय परिधाय च पुनस्तथैवास्ते। कण्व उपसर्पति।)

---

1. B. उववत्तीए। B. सूइदे णं। 3. B. अणणुहुत्त°। B °करेदि। 5. B, °णिओअं। 7. B. कुरुतः for आयुञ्जाते। 8. A. & B. गौतमि। 9. A. °निवेदितां for °सेवां। 10. A & B निष्क्रान्तः। 13. A. संश्लिष्ट° for संस्पृष्ट°। 20. A. तथोपविशति।

गौतमी—जाद एसो दे आणन्दवाहपरिवाहिणा चक्खुणा परिस्सअन्तो विअ गुरू उवत्थिदो। ता साअरं पडिवज्जस्स।

शकुन्तला—(सव्रीडा) ताद वन्दामि।

कण्वः—वत्से! वीरप्रसविनी भव!

5　　ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव।
　　पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि॥ ९॥

गौतमी—भअवं वरो क्खु एसो ण आसीसा।

कण्वः—वत्से! इतः सद्योहुताग्नीन् प्रदक्षिणीकुरु। (इति सर्वे परिक्रामन्ति।)

10　कण्वः—वत्से!

　　अमीं वेदीं परितः क्लृप्तधूमाः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
　　अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पालयन्तु॥१०॥

वत्से प्रतिष्ठस्वेदानीम्। (सदृष्टिक्षेपम्) क्व ते शाङ्गरवशारद्वतमिश्राः?

15　(प्रविश्य) त्रयः शिष्याः—भगवन्निमे स्मः।

कण्वः—वत्स शाङ्गरव! भगिन्याः पन्थानमादेशय।

शिष्यः—इत इतो भवती। (इति परिक्रामन्ति।)

कण्वः—भो भोः संनिहितवनदेवतास्तपोवनतरवः। शृण्वन्तु भवन्तः।

　　पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
20　नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।

---

1. B om. जाद। A. एष for एसो। A. परिसन्तो। 2. A. गुरु। A. आआरं for साअरं। 3. A. om. सव्रीडा। 4. A. om. वीरप्रसविनी भव। 7. B. आसंसा। 13. B. सदृष्टिक्षेपम्। 15. A. ते for त्रयः। 17. A. भगिनी for भवती।

आद्ये वः कुसुमप्रबोधसमये यस्या भवत्युत्सवः

सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥११॥

शार्ङ्गरवः—( कोकिलशब्दं सूचयित्वा ) भगवन् ! आम्

अनुमतगमना शकुन्तला सा तरुभिरियं वनवासबन्धुभिः ।

5 परभृतविरुतं कलं यदद्य प्रतिवचनीकृतमेभिरात्मनः ॥१२॥

( नेपथ्ये )

रम्यान्तरः कमलिनीहरितैः सरोभि-

श्छायाद्रुमैर्नियमितार्कमरीचितापः ।

भूयात् कुशेशयरजोमृदुरेणुरस्याः

10 शान्तोऽनुकूलपवनश्च शिवश्च पन्थाः ॥१३॥

( सर्वे सविस्मयमाकर्णयन्ति । )

गौतमी—जाद णादिजणसिणिद्धं अब्भणुण्णादासि तवोवणदेवदाहिं गमणे । ता पणम भअवदीणं ।

शकुन्तला—(सप्रणामं परिक्रम्य जनान्तिकम्) हला पिअंवदे अज्ज-

15 उत्तदंसणूसुआए वि अस्समपदं परिचअन्तीए दुक्खदुक्खेण मे चरणा पुरोमुहा णिवडन्ति ।

प्रियंवदा—ण केवलं तवोवणविरहकादरा तुमं जेव । तए उवत्थिद-विओअस्स तवोवणस्स वि दाव अवत्थं पेक्खदु बहिणिआ ।

---

4. A. om. सा । B. ते for सा । 8. A. °मयूख° for °मरीचि° । 10. B. शान्तानुकूल° । 12. B. अभिजण° for णादि° । 13. A. पणव । B. भअवदीणं वणदेवदाणं । 15. B. °वदं for °पदं । 17. A. °परिश्वाअ° for °विरह° । B. उअत्थिद° for उवत्थिद° । 18. A. वहिणिअआ ।

उग्गिलिदब्भकवला मई परिच्चत्तणच्चणा मोरी ।

ओसरिअपण्डुवत्ता मुअन्ति अस्सूइं वणलदाओ ॥१४॥

शकुन्तला—(स्मृत्वा) ताद लदाबहिणिअं आमन्तइस्सं ।

कण्वः—वत्से अवैमि तेऽस्यां सौहार्दम् । इयं सा दक्षिणेन । पश्य ।

5 शकुन्तला—( उपसृत्य लतामालिङ्गति । ) माहवि ! लदाबहिणिए ! पच्चालिङ्ग मं साहामईहिं वाहाहिं । अज्जप्पहुदि दूरवत्तिणी खु दे भविस्सं । ताद अहं विअ इअं चिन्तणीआ ।

कण्वः—वत्से !

सङ्कल्पितं प्रथममेव मया त्वदर्थे

10 भर्तारमात्मसदृशं सुकृतैर्गतासि ।

अस्यास्तु संप्रति वरं त्वयि वीतचिन्तः

कान्तं समीपसहकारमिमं करिष्ये ॥१५॥

तदितः पन्थानं प्रतिपद्यस्व ।

शकुन्तला—(सख्यावुपेत्य) हला एसा दोण्हं पि वो हत्थे णिक्खेवो ।

15 सख्यौ—(सास्रम्) अअं जणो दाणिं कस्स हत्थे समप्पिदव्वो ? (इति बाष्पं विसृजतः । )

कण्वः—अनुसूये ! प्रियंवदे ! अलं रुदितेन । ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्तव्या । (इति सर्वे परिक्रामन्ति । )

---

1. A. मही for मई । B. °णच्चणा for °णत्तणा । 2. A. पण्डुरत्ता for पण्डुवत्ता । B. अस्सूणि for अस्सूइं । 4. A. सौहृदम् । A. इयं च । 6. B. आलिङ्गस्व for पच्चालिङ्ग । A. °वट्टिणी । A. दे क्खु । 7. B. om. ताद । 10. A. गता त्वम for गतासि । 12. B. कामं for कान्तं । 13. B. प्रस्थानं । 14. B. om. हला । A. हत्थनिक्खेवो । 17. A. °सूया । B. om. एव ।

शकुन्तला—(विलोक्य) ताद एसा उडअपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा सुहप्पसवा भवे तदा मे कं पिअणिवेदइत्तकं विसज्जिस्सध ? मा एदं विसुमरिस्सध ।

कण्वः—वत्से ! नेदं विस्मरिष्यामि ।

5 शकुन्तला—( गतिभेदमभिनीय ) अम्मो को णु क्खु पदक्कन्तो विअ पुणो पुणो वि मे वसणन्तं गेह्णादि । (इति विलोकयति ।)

कण्वः—वत्से !

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
10 श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥१६॥

शकुन्तला—(विलोक्य) वच्छ कीस मं सहवासपरिच्चाइणिं अणुबन्धेसि ? अचिरप्पसूदोपरदाए जणणीए विणा जधा मए वड्ढिदोसि तधा इदाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि । ता णिअत्त
15 वच्छ णिअत्त । (इति रुदती प्रस्थिता ।)

कण्वः—वत्से अलं रुदितेन । स्थिरीभव । इतः पन्थानमवलोकय ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
20 मार्गे पदानि खलु ते विषमीभवन्ति ॥१७॥

---

2. A & B मअवहू। B. कं पिअं। B. °इत्तअं। B. विसज्जइस्सध। 3. A. णेदं विसुमरिदव्वं। 5. A. रूपयित्वा for अभिनीय। 6. A. वसणस्स अन्तं गेण्हदि। 8. B. °विरोधण°। 13. A. °पसूदो°। 14. A. इदाणिं पि तधा। B. इदो तुमं तादो वड्ढइस्सदि। 14–15. B. णिअत्त once only। 16. A. आलोकय। 20. A. °वृत्ति for °वृत्तिं।

शार्ङ्गरवः—भगवन्! उदकान्तात् स्निग्धोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र नः संदिश्य प्रतिगन्तुमर्हसि।

कण्वः—तेन हि इमां चीरिवृक्षच्छायामाश्रयामः। ( इति सर्वे तथा स्थिताः। )

5 कण्वः—(अपवार्य) किं नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं संदेष्टव्यम्? ( इति चिन्तयति। )

अनुसूया—सहि ण सो अस्समपदे अत्थि को वि चित्तवन्तो जो तए विरहिज्जन्तो ण ऊसुओ अज्ज किदो। ता पेक्ख दाव।

पुड़इणिवत्तन्तरिअं वाहरिओ वि णाणुवाहरेइ पिअं।

10 तह उव्वूढमुणालो तइ दिट्ठिं देइ चक्काओ ॥१८॥

शकुन्तला—सहि सच्चं जेव णलिणीपत्तन्तरिअं पिअ-सहअरं अणवेक्खन्ती आउलं चक्कवाई आवसदि। (सत्रासम्) दुक्करं खु इअं करेदि।

प्रियंवदा—

15 अज्ज पिएण विणा जं गमेइ रत्तिं विसूरणादीहं।

हन्त गुरुअं पि दुक्खं आसाबन्धो सहावेइ ॥१९॥

कण्वः—वत्स शार्ङ्गरव! इति मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः।

---

1. A. भगवन्नुदकान्तं। B. भगवन्नोद । 2. B. तीरमतो for तीरम् अत्र। B. om. प्रति⁰। 3. A. त्तीर⁰। 7. B. ⁰वदे for ⁰पदे। A. om. को वि। B. चित्तअन्तो। 8. A. ऊसुओ कओ। B. उसुओ। A. om. अज्ज। 9. B. ⁰न्तरितं। B. om. वि। 11. A. ⁰पत्तन्तदं। B. ⁰वत्तन्तरिअं। 12. A. om. खु इअं। 15. A. राइं for रत्तिं। 16. B. गरुअम्मि। 17. B. इतो for इति।

शाङ्गरवः—आज्ञापयतु भवान् ।

कण्वः—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-

स्त्वय्यस्याः कथमप्यबान्धवकृतां भावप्रवृत्तिं च ताम् ।

5 सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया

भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥२०॥

शिष्यः—भगवन् गृहीतोऽयं संदेशः ।

कण्वः—( शकुन्तलामुपेत्य ) वत्से ! त्वमिदानीमनुशासनीया । वनौ-
कसोऽपि वयं लौकिकज्ञा एव ।

10 शिष्यः—भगवन् न कश्चित् धीमतामविषयो नाम ।

कण्वः—वत्से ! सा त्वमितः पतिगृहं प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तं सपत्नीजने

भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी

15 यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥२१॥

कथं वा गौतमी मन्यते ?

गौतमी—एत्तिको क्खु वहूजणे उवएसो । जाद अवधारएहि एदं ।

कण्वः—वत्से ! एहि । परिष्वजस्व मां सखीजनं च ।

शकुन्तला—ताद किं इदो ज्जेव पिअसहीओ णिवत्तिस्सन्ति ?

20 कण्वः—वत्से ! इमे अपि प्रदेये । तन्न युक्तमनयोस्तत्र गमनम् । त्वया

9. B. लौकिकाभिज्ञाः । 11. A. तद् वत्से । 17. B. जाद एत्तिको । B. उअदेसो । B. अवधारेहिं । B. जाव for जाद । 19. A. विणि-अत्तिस्सन्ति । 20. B. परप्रदेये for प्रदेये ।

सह गौतमी गमिष्यति ।

शकुन्तला—(पितुरङ्कमाश्लिष्य) कधं तादस्स अङ्कादो परिब्भट्ठा मलअ-
पव्वदुम्मूलिदा विअ चन्दणलदा देसन्तरे जीविदं धारइस्सं ?
( इति रोदिति । )

5 कण्वः—वत्से किमेवं कातरासि ?

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥२२॥

10 अपि च । इदमवधारय ।

यदा शरीरस्य शरीरिणश्च पृथक्त्वमेकान्तत एव भावि ।
आहार्ययोगेन वियुज्यमानः परेण को नाम भवेद्विषादी ॥२३॥

शकुन्तला—( पितुः पादयोः पतित्वा ) ताद वन्दामि ।

कण्वः—वत्से यदहमीहे तदस्तु ते ।

15 शकुन्तला—(सख्यावुपेत्य) सहीओ एध । दुवे वि मं समं जेव परि-
स्सजध ।

सख्यौ—( तथा कृत्वा ) सहि जइ कदाइ सो राएसी पच्चभिण्णाण-
मन्थरो भवे तदो से इमं अत्तणो णामङ्किदं अङ्गुलीअअं दंसेसि ।

शकुन्तला—सहि इमिणा संदेसेण आकम्पिदं मे हिअअं ।

---

3. B. om. विअ । B. जीविअं । 11. B. भाति for भावि । 12. B. विभज्य° for वियुज्य° । 17. A. कदावि for जइ कदाइ । B. पच्चहि° for पच्चभि° । 18. B. om. से । A. सेदं for से इमं । A. णामङ्किद° । B. om. अङ्गुलीअअं

सख्यौ—सहि मा भाआहि । सिणेहो पावं सङ्कदि ।

शिष्यः—भगवन् ! दूरमारूढः सविता । तत् त्वर्यतां त्वर्यताम् ।

शकुन्तला—( भूयः पितुरङ्कमाश्लिष्य ) ताद ! कदा क्खु तवोवणं
पेक्खिस्सं ?

5 कण्वः—वत्से ! श्रूयताम् ।

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।
तत्संनिवेशितभरेण सहैव भर्त्रा
शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥२४॥

10 गौतमी—जाद परिहीअदि दे गमणवेला । ता णिअत्तावेहि पिदरं ।
( कण्वं प्रति ) अधवा चिरेणापि एसा ण णिअत्तइस्सदि । ता
णिअत्तदु भअवं ।

कण्वः—वत्से उपरुध्यते मे तपोवनानुष्ठानम् । तत् परावर्तितुमिच्छामि ।

शकुन्तला—(सासूयम्) तवोवणवावारेण णिरुक्कण्ठो तादो भविस्सदि ।
15 अहं उण दाणि उक्कण्ठाभाइणी संवुत्ता ।

कण्वः—अयि किं मामेवं जडीकरोषि ? ( निश्वस्य )

अपयास्यति मे शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥२५॥

---

1. भाआहि । A. परं for पावं । 2. A. त्वरयतां भवती । 3. A. पितर° for पितुरङ्क° । 9. A. °श्रमेषु । 10. B. °वेहि पिअरं । 11. A. अहवा । 12. B. णिअत्तीअदु । 13. B. मम for मे । A. प्रतिनिवर्तयितु° for परावर्तितु° । 11. B. om. सासूयं । B. तादो णिरुक्कण्ठो । B. हुविस्सदि । 15. A. om. उण । 17. B. कथं सु° । B. चरित° ।

गच्छ ! शिवास्ते पन्थानः सन्तु ।(इति निःक्रान्ता शकुन्तला सह गौतमीशार्ङ्गरवशारद्वतमिश्रैः । )

सख्यौ—( चिरमवलोक्य सकरुणम् ) हद्धी हद्धी अन्तरिदा सउन्तला वनराईहिं ।

5 कण्वः—प्रियंवदे ! अनुसूये ! गता वां सहधर्मचारिणी सखी । निगृह्य शोकं मामनुगच्छेतां भवत्यौ ।

सख्यौ—(प्रस्थिते) ताद सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसामो ।

कण्वः—स्नेहवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः !

10 शकुन्तलां विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः–

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा ॥२६॥

15 ( इति निष्क्रान्ताः सर्वे । )

॥ इति शकुन्तला-प्रस्थानो नाम चतुर्थोऽङ्कः ॥



1. A. & B. om. सन्तु । B. om. शकुन्तला । 5. A. अनुसूये प्रियंवदे । 7. B. उभे for सख्यौ । A. om. सुण्णं विअ । 12. A. प्रतिग्रहीतुः । 16. B. °गमनं for °प्रस्थानो ।

## ( ५ )

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—(निःश्वस्य) अहो बत कीदृशीं वयोवस्थामापन्नोऽस्मि ?

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
5 काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय ॥ १ ॥

यावदभ्यन्तरगताय देवाय स्वयमनुष्ठेयमकालक्षेपार्हमावेदयामि । किं पुनस्तत् ? आं ज्ञातम् । कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति । भोः चित्रमेतत् !

10 क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥

( दृष्ट्वा ) एष देवः

प्रजाः प्रजाः स्वा इव चिन्तयित्वा
निषेवते शान्तमना विविक्तम् ।
15 यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ३ ॥

यत् सत्यं शङ्कितोऽस्मि इदानीमेव धर्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम् । अथवा कुतो विश्रामो लोकपालानाम् ?

---

2. A. अवस्थां for वयोवस्थां । 18. A. शिष्यस्यागमनं ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

5 ( इति परिक्रामति । )

(ततः प्रविशति राजा विदूषकः विभवतः परीवारः । )

राजा—( अधिकारखेदं निरूप्य ) सर्वः प्रार्थितार्थमधिगम्य सुखी संपद्यते । राज्ञस्तु चरितार्थता दुःखोत्तरैव । कुतः ?

औत्सुक्यमात्रमवसादयति प्रतिष्ठां
10 क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ५ ॥

(नेपथ्ये) वैतालिकौ—जयति जयति देवः ।

एकः—

15 स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमंशुं
शमयति परितापं छायया संश्रितानाम् ॥ ६ ॥

द्वितीयः—

20 नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।

---

5. B. om. इति । 10. B. °रेव for °रेवम् । 13. B. वैतालिकः
16. A. °विधेव । 17. B. °मुस्रं for °मंशुं ।

अतनुषु विभवेषु ज्ञातयः संविभक्ता-

स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥ ७ ॥

राजा—(आकर्ण्य) आश्चर्यं कार्यशासनपरिश्रान्ताः पुनर्नवीभूता स्मः ।

विदूषकः—गोविन्दारको त्ति किल भणिदस्स रिसभस्स परिस्समो

5 णस्सदि ।

राजा—(सस्मितम्) क्रियतामासनपरिग्रहः ।

( उभावुपविष्टौ परिजनश्च यथास्थानं स्थितः । )

( नेपथ्ये वीणाशब्दः ।)

विदूषकः—( कर्णं दत्वा ) भो वअस्स ! सङ्गीदअसालब्भन्तरं अवधाणं

10 देहि । ताललअसुद्धाए वीणाए सरसंजोओ सुणीअदि । जाणे

तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति ।

राजा—तूष्णीं भव । यावदाकर्णयामि ।

कञ्चुकी—अये व्यासक्तचित्तो देवः । तदवसरं तावत् प्रतिपालयामि ।

( इत्येकान्ते स्थितः । )

15 ( नेपथ्ये गीयते । )

अहिणवमहुलोहभाविअं तह परिचुम्बिअ चूअमञ्जरिं ।

कमलवसदिमेत्तणिव्वुदो महुअर विसुमरिदो सि णं कहं ॥८॥

राजा—अहो रागपरिवाहिनी गीतिः !

---

1. A. सन्तु नाम for संविभक्ताः । 3. A. om. आश्चर्यं । 4. A. om. किल । B. परिस्समं । 6. A. ननु क्रियतां । 9. B. भो भो । A. सालन्तरे for सालब्भन्तरे । 11. B. परिचयं । 12. B. भवतु for भव । 13. B. om. अये । 16. B. °लोभ° for °लोह° । 17. A. सुमरिदोसि for विसुम° । B. °रिओ सि । 18. B. परिमोहिणी ।

विदूषकः—किं दाव से गीदिआए भवदा गहिदो अक्खरत्थो ?

राजा—(सस्मितम्) सकृत्कृतप्रणयोऽयं जनः । तदहं हंसवतीं देवीमन्तरेणोपालम्भमुपगतोऽस्मि । तत् सखे माधव्य ! मद्वचनादुच्यतां देवी–निपुणमुपालब्धोऽस्मि ।

5 विदूषकः—जं भवं आणवेदि त्ति । (उत्थाय) गहिदो तए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो । अविगदराअस्स सुअणस्स वि णत्थि मे मोक्खो ।

राजा—सखे ! गच्छ । नागरकवृत्त्या सान्त्वयैनाम् ।

विदूषकः—का गदी ? (इति निष्क्रान्तः ।)

10 राजा—(आत्मगतम्) किं नु खलु गीतमेवंविधमाकर्ण्य इष्टविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि ? अथवा–

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
15 भावस्थिराणि जननान्तरसौहृदानि ॥ ६ ॥

( अस्मृतिनिमित्तमुन्मनस्कत्वं सूचयति । )

कञ्चुकी—(उपसृत्य) जयति जयति देवः । देव ! एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसंदेशमादाय सस्त्रीकास्तपस्विनः प्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

---

1. B. गहिदो भवदा । 2. B. om. सस्मितम् । B. om °कृत° । 5. A. परकेहिं । 6. B. विश्म सरअणस्स for सुअणस्स वि । 13. A. सुखिनो° । 16. B. °मनस्कं । 17. B. om. देव । 18 A. संदेशानादाय । 19. B. om. प्राप्ताः ।

राजा—कथं कण्वसंदेशहारिणः ?

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनाद् विज्ञाप्यतामुपाध्यायः सोमदत्तः—अमू-
नाश्रमवासिनः श्रौतेन विधिना पुरस्कृत्य स्वयमेव प्रवेशयितु-
5 मर्हसीति । अहमप्येतांस्तपस्विन उचिते प्रदेशे प्रतिपालयामि ।

कञ्चुकी—यथाज्ञापयसि । ( इति निष्क्रान्तः । )

राजा—(उत्थाय) वेत्रवति ! अग्निशरणमार्गमादेशय ।

प्रतीहारी—इदो इदो एदु देओ । ( परिक्रम्य ) एसो अहिणवमज्जण-
रमणीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दओ । ता आरुहदु
10 देओ ।

राजा—( साभिनयमारुह्य परिजनांसावलम्बी तिष्ठन् ) वेत्रवति ! कि-
मुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः स्युः ?

किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
15 आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥१०॥

प्रतीहारी—देवस्स भुअदण्डणिव्वुदे अस्समे कुदो एवं ? किंतु सुचरिदा-
भिणन्दिणो इसिओ देवं सभाजइदुं आअद त्ति तक्केमि ।

---

1. B. सत्यं for कथं । 3. उच्यतां for विज्ञाप्यतां । 4. B. संस्कृत्य corrected to पुरस्कृत्य । 5 B. °मेतास्तपस्विन उचितदेशे । 9. B. अग्नि° for अग्गि° । 10. देवो for देओ । 11. A.…जनाङ्कावलम्बी । 17. B. एदं for एवं । B. सुचरिआहिलासणन्दिणो । 18. A. om. इसिओ । A. संभाविदुं for सभाजइदुं । B. आसुदो त्ति for आअद त्ति ।

( ततः प्रविशन्ति गौतमीसहिताः शकुन्तलामादाय कण्वशिष्याः पुरतश्चैषां पुरोहितकञ्चुकिनौ । )

कञ्चुकी—इत इतो भवन्तः ।

शार्ङ्गरवः—शारद्वत !

5 महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥११॥

शारद्वतः—शार्ङ्गरव ! स्थाने पुरप्रवेशात् तवेत्थंभूतः संवेगः । अहं हि-

10 अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमवशः सङ्गिनमवैमि ॥१२॥

पुरोहितः—अत एव भवद्विधा महान्तः ।

शकुन्तला—( दुर्निमित्तमभिनीय ) अम्मो ! किं ति वामेदरं णअणं मे फुरदि ?

15 गौतमी—जाद पडिहदं अमङ्गलं । सुहाणि दे होन्तु । ( इति परिक्रामन्ति ।)

पुरोहितः—( राजानमवलोक्य ) भोस्तपस्विनः । अयमसौ वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः । पश्यतैनम् ।

---

4. A. सारद्वत all along 7. B.corrects °पी° to °ही° । 11. A. अवशं for अवशः । 12. A. om. पुरोहितः as the speaker. 13. A. om. अम्मो । B. किं वि or किं पि for किं ति । A. वामेतरं । 14. B. om. मे । A. विप्फु° । 17. A. कञ्चुकी for पुरोहितः । B. om. राजानमवलोक्य । 18. A. परिपालयति । B. om. प्रति° । B. पश्यैनं ।

शार्ङ्गरवः—काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुतः ?

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
5 स्वभाव एवैष परोपकारिणाम् ॥१३॥

प्रतीहारी—देव पसण्णमुहराआ इसिओ सत्थीका दीसन्ति ।

राजा—( शकुन्तलां निर्वर्ण्य ) अथात्रभवती

केयमवगुण्ठनवती नातिप्रस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥१४॥

10 प्रतीहारी—दंसणीआकिदि क्खु लक्खीअदि ।

राजा—भवतु । अनिर्वर्ण्यं परकलत्रम् ।

शकुन्तला—(उरसि हस्तं दत्वा आत्मगतम्) हिअअ किं एवं वेवसि ? अज्जउत्तस्स भावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बेहि ।

पुरोहितः—( पुरो गत्वा ) स्वस्ति देवाय । देव ! एते विधिवदर्चिता-
15 स्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशोऽस्ति । तं देवः श्रोतुमर्हति ।

राजा—अवहितोऽस्मि ।

शिष्याः—(हस्तमुद्यम्य) भो भो राजन् ! विजयतां विजयतां भवान् ।

राजा—सर्वानभिवादये ।

शिष्याः—स्वस्ति भवते ।

20 राजा—अपि निर्विघ्नं तपः ?

---

1. A. शिष्याः for शाङ्गरवः । 6. B. वीसत्थकप्पा for सत्थीका । 12. A. आत्मगतं उरसि हस्तं दत्वा । A. om. एवं । 17. B. हस्तान् । B. भो once.

शिष्याः—

धर्मविघ्नः कुतोऽस्माकं सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥१५॥

राजा—सर्वथार्थवान् खलु मे राजशब्दः । अथ तत्रभवान् लोकानु-
5 ग्रहाय कुशली कण्वः ?

शार्ङ्गरवः—राजन् स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामय-
पूर्वकमिदमाह ।

राजा— किमाज्ञापयति ?

शार्ङ्गरवः—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपयेमे, तन्मया
10 प्रीतिमता युवयोरनुज्ञातम् । कुतः ?

त्वमर्हतां प्राग्रहरः स्मृतोऽसि नः
शकुन्तला मूर्तिमयी च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥१६॥

15 तदिदानीमापन्नसत्वा प्रतिगृह्यतां सहधर्माचरणाय ।

गौतमी—भद्दमुह, वत्तुकामा व्वि अम्हे । ण मे वअणावआसो अत्थि
कधिदुं त्ति ।

राजा—आर्ये कथ्यताम् ।

गौतमी—णावेक्खिदो गुरुअणो इमिए तुम्हे वि ण पुच्छिआ बन्धू ।
एक्कक्कमस्स वि चरिदे किं भणउ एक्कमेक्कस्सिं ॥ १७ ॥

---

1. B. ऋषयः for शिष्याः । 8. A. °यन्ति for °यति । 9. B. om. मदीयां । 15. A. om. प्रति° । A. सहधर्मचारिणीं । 15. A. om. व्वि । A. om. मे । B. °कासो for °आसो । 17.B. om. त्ति ।

शकुन्तला—(स्वगतम्) किं णु क्खु अज्जउत्तो भणिस्सदि ?

राजा—अयि किमिदमुपन्यस्तम् ।

शकुन्तला—( स्वगतम् ) हद्धी हद्धी पावो क्खु से वअणोवण्णासो ।

शार्ङ्गरवः—किं नाम किमिदमुपन्यस्तमिति । ननु भवानेव सुतरां

5 लोकवृत्तान्तनिष्णातः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १८ ॥

10 राजा—किमत्रभवती परिणीतपूर्वा मया ?

शकुन्तला—( सविषादमात्मगतम् ) हिअअ ! समुदिदा दे आसङ्का ।

शार्ङ्गरवः—राजन् ।

किं कृतकार्यद्वेषात् धर्मं प्रति विमुखता कृता राज्ञा ?

राजा—कुतोऽयमसत्कल्पः प्रश्नः ?

15 शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तानाम् ॥ १९ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—जाद मा लज्ज । अवणइस्सं दाव दे अवगुण्ठणं । तदो

भत्ता तुमं अहिजाणइस्सदि । ( तथा करोति । )

---

1 A. reads किं हु । 3. A. om. स्वगतम् । B. एसो for से । A. °पण्णासो । 11. A. संवादिदा । A. om. दे । 17. A. om. दे । 18. B. has this line partly effaced.

राजा—(शकुन्तलां निर्वर्ण्य आत्मगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
5 न खलु सपदि भोक्तुं नापि शक्तोऽस्मि मोक्तुम् ॥२०॥

प्रतीहारी—( स्वगतम् ) अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरएदि ?

शार्ङ्गरवः—भो राजन् ! किमिदं जोषमास्यते ?

राजा—भोस्तपस्विन् ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः
10 स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां परस्त्रियमाशङ्कमानः प्रतिपत्स्ये ?

शकुन्तला—(स्वगतम् कधं एवं परिणए ज्जेव संदेहो । भग्गा दाणि दूरारोहिणी आसालदा ।

शार्ङ्गरवः—मा तावत्–

15 कृताभिमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
दुष्टः प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥२१॥

शारद्वतः—शार्ङ्गरव ! विरम त्वमिदानीम् । शकुन्तले ! वक्तव्यमुक्त-
20 मस्माभिः । सोऽत्रभवानेवमाह । तद् दीयतामस्मै प्रत्ययवचनम् ।

---

5. B. विमोक्तुं for °स्मि मोक्तुम् । 6. B. इदीसं । 7. A. विआरेइ for विआरएदि । 9. B. न स्मरामि । 11. B. °शङ्कमाणः । 12. This line is partly effaced in B. 20. B. प्रतीतिवचनं ।

शकुन्तला—(स्वगतम्) इमं अवत्थन्तरं गदे तादिसे अणुराए किं वा सुमराविदेण ? अधवा अत्ता दाणि मे सोअणीओ। भोदु, वदिस्सं एदं। ( प्रकाशम् ) अज्जउत्त ! ( इत्यर्धोक्ते ) अध वा संसइदे दाणि ण एस समुदाआरो। पोरव ! जुत्तं णाम तव पुरा
5 अस्समपदे सब्भावुत्ताणहिअअं इमं जणं समओपरुद्धं पआरिअ संपदं ईदिसेहिं अक्खरेहिं पच्चाइक्खिदुं ?

राजा—(कर्णौ पिधाय) शान्तम्।

व्यपदेशं मलिनयितुं समीहसे मां च पातयितुम्।
कूलंकषेव सिन्धुः प्रसन्नमोघं तटतरुं च ॥२२॥

10 शकुन्तला—भोदु, जइ परमत्थदो परपरिग्गहसंकिणा तए एदं पउत्तं ता अहिण्णाणेण केणावि तव संदेहं अवणइस्सं।

राजा—प्रथमः कल्पः।

शकुन्तला—( मुद्रास्थानमवलोक्य ) हद्धी हद्धी अङ्गुलीअअसुण्णा मे अङ्गुली। ( सविषादं गौतमीमीक्षते। )

5 गौतमी—ण हु दे सक्कावदारब्भन्तरे सचीतित्थे उअअं वन्दमाणाए परिब्भट्ठं अङ्गुलीअअं ?

राजा—(सस्मितम्) इदं तत्। अहो प्रत्युत्पन्नमतित्वं स्त्रीणाम्।

शकुन्तला—एत्थ दाव विहिणा दंसिदं पहुत्तं। अवरं दे कधइस्सं।

राजा—श्रोतव्यमिदानीं संवृत्तम्।

---

2-3. A. अहवा। 4. ण च एस। B. समुदाहारो। 4. A णाम एदं। B. अस्समवदे। 5. B. समअविरुद्धं for समओपरुद्धं। 10 A. जदि। 11. B. अहिण्णाणकेणावि। 13. B. अङ्गुलीयक। 14. A. गौतमीं समीक्षते। 15. B. ननु। 17. A. सविस्मयम्। 19. A. सद्वृत्तं।

शकुन्तला—णं एक्कदिअसं वेदसलदामण्डवे णलिणीवत्तभाअणकदं उअअं तव हत्थे सण्णिहिदं आसि ।

राजा—शृणुमस्तावत् ।

शकुन्तला—तक्खणं सो मम पुत्तकिदहरिणओ उवत्थिदो । तदो तए

5 अअं दाव पढमं पिवदु त्ति अणुकम्पिणा उअच्छन्दिदो उअएण । ण उण दे अवरिचिदस्स हत्थे उअअं उवगदो पादुं । पच्छा तस्सिं जेव मए परिग्गहिदे किदो तेण पणओ । एत्थन्तरे उवहसिअ तए भणिदं–सव्वं सगन्धे वीससदि । दुवे वि तुम्हे आरण्णकाओ त्ति ।

10 राजा—आभिस्तावदात्मकार्यनिर्वर्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः ।

गौतमी—महाभाअ णारिहसि एवं मन्तिदुं । तवोवणसंवड्ढिदो क्खु अअं जणो अणहिण्णो कइअवस्स ।

राजा—अयि तापसवृद्धे !

15 स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरीक्षपतनात्स्वमपत्यजात-
मन्यद्विजैः परभृताः किल पोषयन्ति ॥२३॥

---

1. A. वेअस° for वेदस° । B. °णलिनी° । B. °गदं for °कदं । 3. A. शृणुवः for शृणुमः । 4. B. पुत्तकीकिद° for पुत्तकिद° । B. om. तदो तए । 5. A. दाणि for दाव । B, पिअदु त्ति कदुअ । 6. B. अपरि° for अवरि° । 6. B. उअगदो for उवगदो । 8. B. उअहसिअ । A. om सव्वं । 8. B. सिणिद्धे for सगन्धे । 12. B. एदं for एवं । A. om. क्खु । 13. B. कैअवस्स for कइअवस्स ।

शकुन्तला—( सकोपम् ) अणज्ज ! अत्तणो हिअआणुमाणेण सव्वं एदं पेक्खसि । को णाम अण्णो धम्मकञ्चुअववदेसिणो तिण-च्छण्णकूवोवमस्स तव अणुआरी भविस्सदि ?

राजा—(आत्मगतम्) वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते ।

5 तथाहि—

न तिर्यगवलोकितं भवति चक्षुरालोहितं

वचोऽपि परुषाक्षरं न च पदेषु संशय्यते ।

हिमार्त इव वेपते सकल एव बिम्बाधरः

प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥२४॥

अपि च । संदिग्धबुद्धिं मां कुर्वन्त्या अकैतवच्छाय इवास्याः कोपोऽयम् ।

मय्येवमस्मरणदारुणचित्तवृत्तौ

वृत्तं रहःप्रणयमप्रतिपद्यमाने ।

भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या

भग्नं शरासनमिवातिरुषा स्मरस्य ॥२५॥

15 (प्रकाशम्) भद्रे ! प्रथितं दुष्मन्तचरितं प्रजासु । तवापीदं दृश्यते ।

शकुन्तला—

तुम्हे ज्जेव पमाणं जाणध धम्मत्थिदिं च लोअस्स ।

लज्जाविणिज्जिदाओ जाणन्ति ण हु किं पि महिलाओ ॥२६॥

सुट्ठु दाणि सच्छन्दआरिणी संवुत्ता दाव अहं ।

---

3. A. तिवण° for तिण° । B. कूवोप° for कूवोव° । B. अणुकारी हुवि° for अणुआरी भवि° । 4 B. कोप आल° for कोपो लक्ष्यते । 7. B. संयु° for संश° । 11. B. अकैतवे छाययास्याः । 15. A. भिन्नं for भग्नं । 18. B, om. हु । 19. B. समत्थिदा for संवृत्ता ।

गौतमी—जाद, इमस्स पुरुवंसपच्चएण मुहमहुणो हिअअपत्थरस्स हत्थं उवगदासि ।

( शकुन्तला पटान्तेन मुखमावृत्य रोदिति । )

शार्ङ्गरवः—इत्थमप्रतिहतं चापलं दहति ।

5 अतः समीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥२७॥

राजा—अयि भोः, किमत्रभवतीसंप्रत्ययादेवास्मानवलेपेन क्षिण्वन्ति भवन्तः ?

शार्ङ्गरवः—( सासूयम् ) कृतं भवद्भिरुत्तरोत्तरम् ।

10 आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
पराभिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥२८॥

राजा—हं हो सत्यवादिन्, अभ्युपगतं तावद् युष्माभिरेवंविधा वयम् ।
15 किं पुनरिमामभिसंधाय लभ्यते ?

शार्ङ्गरवः—विनिपातः ।

राजा—विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत् ।

शार्ङ्गरवः—भो राजन्, किमुत्तरोत्तरैः ? अनुष्ठितो गुरुसंदेशः । प्रतिनिवर्तामहे वयम् ।

20 तदेषा भवतः पत्नी त्यज वैनां गृहाण वा ।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ॥२९॥

1. B. om. जाद । B. पुरुवंसस्स for पुरुवंसपच्चएण । 2. B. गतासि for गदासि । 7 B. °लेपनेन for °लेपेन । 12. A. ये विद्येति for यैर्विद्येति ।

गौतमि, गच्छाग्रतः ( इति प्रस्थिताः । )

शकुन्तला—हुँ अहं इमिणा दाव किदवेण विप्पलद्धा । तुम्हे वि मं परिच्चअध ? ( इति अनुप्रस्थिता । )

गौतमी—( स्थित्वा ) शार्ङ्गरव ! अणुगच्छदि णो करुणपरिदेविणी सउन्तला । पच्चादेसदारुणे भत्तरि किं करेदु तवस्सिणी ?

शार्ङ्गरवः—( सरोषं प्रतिनिवृत्य ) आः पुरोभागिनि ! किमिदमत्रापि स्वातन्त्र्यमवलम्बसे ? ( शकुन्तला भीता वेपते । )

शार्ङ्गरवः—(सकरुणम्) शृणोतु भवती ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् ॥३०॥

तत् त्वमितस्तिष्ठ, यावद् यामो वयम् ।

राजा—भोस्तपस्विनः किमत्रभवतीं विप्रलभ्य प्राप्यते ? पश्यत—

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखं चेतः ॥३१॥

शार्ङ्गरवः—राजन् अथ पुनः पूर्वपरिग्रहो व्यासङ्गाद् विस्मृतो भवेत्, तदा कथमधर्मभीरोस्तव दारपरित्यागः ?

1. B. आगच्छ for गच्छाग्रतः । 2. B. om. हुँ अहं । B. किदवेण अहं B. णं for मं । A. om. दाव । A. कितवेण for किदवेण । A. °लब्धा for °लद्धा । 3. A. प्रस्थिता for अनुप्रस्थिता । 4. A. स्थिता for स्थित्वा । 7. B. सक्रोधं for सरोषं । B. om. प्रति° । 8. B. om. अत्रापि । B. सबाष्पं । 15. A. विप्रलम्भयामि for विप्रलभ्य प्राप्यते । B. पश्य for पश्यत । 18. A. om. पूर्व° । A. om. व्यासङ्गात् । 19. A. om. तव ।

राजा—भवन्तमेवात्र पृच्छामि गुरुलाघवज्ञम् ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥३२॥

पुरोहितः—(विचार्य) देव एवं तावत् क्रियते ।

5 राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदा प्रसवादस्मद्गृहे तिष्ठतु ।

राजा—कुत इदमुच्यते ?

पुरोहितः—त्वं साधुनैमित्तिकैरादिष्टः पूर्वं प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति,
10 ततोऽभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये त्वस्याः पितुः समीपगमनं व्यवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—(उत्थाय) वत्से, इत इतोऽनुगच्छ माम् ।

शकुन्तला—भअवदि वसुंधरे ! देहि मे अवआसं ।

15 ( इति सह पुरोधसा तपस्विभिर्गौतम्या च रुदती निष्क्रान्ता । )

( राजा शकुन्तलागमनमेव चिन्तयति । )

(नेपथ्ये) आश्चर्यमाश्चर्यम् ।

राजा—(कर्णं दत्वा) किं नु खलु स्यात् ?

(प्रविश्य) पुरोधाः—(सविस्मयम्) देव अद्भुतं खलु संवृत्तम् ।

---

3. B. भवान्याहो for भवाम्याहो । 4. A. om. विचार्य । A. क्रियतां for क्रियते । 6. om. तावद् । 9. B. om. इति । 10. A. °यिष्यामि for °यिष्यसि । 11 A. om. व्यवस्थितं । 13. B. om. उत्थाय । 15. A. पुरोधस्तप° . A. om. रुदती । B. om. सह । B. om. च । 19. B. सस्मितं for सविस्मयम् ।

राजा—किमिव ?

पुरोधाः—परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

5 राजा—किं ततः ?

पुरोधाः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
दाक्षिप्यैव ज्योतिरेनां तिरोऽभूत् ॥३३॥

( सर्वे विस्मयं रूपयन्ति । )

10 राजा—प्रथममेवास्माभिरेषोऽर्थः प्रत्यादिष्टः । किं मिथ्यातर्केणान्वि-
ष्यते ? विश्राम्यताम् ।

पुरोधाः—विजयस्व । ( इति निष्क्रान्तः । )

राजा—वेत्रवति ! पर्याकुल एवास्मि । शयनीयगृहमार्गमादेशय ।

प्रतीहारी—इदो इदो एदु देओ । ( इति परिक्रामतः । )

15 राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥३४॥

( इति निष्क्रान्ताः सर्वे । )

॥ शकुन्तला-प्रत्याख्यानो नाम पञ्चमोऽङ्कः ॥

---

1. B. किमिति for किमिव । 2. A. प्रतिनिवृत्तेषु for परावृत्तेषु । 5. B ततः किं । 7. B. °दाक्षिप्याङ्के for °दाक्षिप्यैव । 8. B. सविस्मयं दर्शयन्ति । 9. A. एव after रूपयन्ति । 10 B. °नुशिष्यते for °न्विष्यते । 12. A. om. एव । A. शयन° for शयनीय° । 17. B. प्रत्यापयतीव for प्रत्याययतीव । 19. B. om. this line.

# ( ६ )

(ततः प्रविशति नागरकश्यालकः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च।)

रक्षिणौ—( पुरुषं ताडयित्वा ) अले कुम्भीलआ ! कधेहि कधेहि। तए कहिं महालअणभाशुले उक्किण्णनामक्खले लाअकीए अङ्गुलीअए शमाशादिदे ?

5 पुरुषः—( भीतिनाटितकेन ) पशीदन्तु पशीदन्तु भावमिश्शा। हगे ण ईदिशश्श कम्मश्श कालके।

प्रथमः—किं णु क्खु शोहणबम्भणे त्ति कदुअ लञ्ञा पलिग्गहे दिण्णे ?

पुरुषः—शुणाध दाव णं। हगे शक्कावदालवाशिके धीवले।

10 द्वितीयः—हण्डे पाटच्चले ! किं अम्हेहिं जादिं वशदिं च पुच्छिदे शि तुमं ?

श्यालकः—सूचअ ! कधेदु सव्वं कमेण। मा णं पलिबन्धेध।

उभौ—जं लाउत्तो आणवेदि। लवेहि रे लवेहि।

---

1. B. श्यालः for श्यालकः। 2. A. कुम्भीलका for कुम्भीलआ। A. कधेहिं for कधेहि here as elsewhere. 3. A. °मणि° for °लअण°। A. reads दन्त्य स for तालव्य श in most places. B. °ग्गि° for °क्कि°। 4. B. °लीए for °लीअए। 5. om. भीतिनाटकितेन। 6. A. इलिसस्स for ईदिशश्श। 7. A. बम्भणो हि for बम्भणेत्ति। A. रज्जा B. लण्णा। B. पलिग्गहेण। 9 B. शुणादु। A. °वदारवासी। 13. A. इसलो for लाउत्तो।

पुरुषः—हगे जालबलिशादीहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।

श्यालकः—(प्रहस्य) विसुद्धो से दाणि आजीओ ।

पुरुषः—भट्टके मा एवं भणेध ।

5 शहजे किल जे विणिन्दिदे ण हु शे कम्म विवज्जणीअके ।
पशुमालि कलेइ कालणा छकम्मा विदुवे वि शोत्तिके ॥१॥

श्यालः—तदो तदो ?

पुरुषः—ता एकदिअशे मए लोहिदमच्छके मुण्डके कप्पिदे । जाव तश्श उदलब्भन्तलगदं इमं महालअणभाशुलअं अङ्गुलीअअं पेच्छामि ।
10 पच्छा इह विकअं च दंशअन्त ज्जेव गहिदे भावमिश्शेहिं । एत्तिके दाव एतश्श आगमे । संपदं मालेध वा पिट्टेध वा ।

श्यालः—(अङ्गुरीयकमाघ्राय) जाणुअ ! मच्छोदलब्भन्तलगदो त्ति ण संदेहो । तधा एदस्स आमिसगन्धो वाअदि । अङ्गुलीअआगमो दाव विमरिसिदव्वो । ता एध । राउलं जेव गच्छम्ह ।

15 रक्षिणौ—( पुरुषं प्रति ) आगच्छ ले गण्ठिच्छेदआ आगच्छ ।

श्यालः—( परिक्रम्य ) सूचअ इह गोउरदुआरए अप्पमत्ता पलिवालेध

---

1. A. कुम्भीलकः for पुरुषः । A. °बन्धणोवजीवणेहिं । 3 A. विहस्य । 3. B. विशुद्धे दाणि दे अजीओ । 4. A. कुम्भीलकः for पुरुषः । 5. A. कुल जे for किल जे । A. ण वि से धम्म for ण हु शे शे कम्म । 7. B. °कलेवि दालुणे अणुकम्पामिदुले वि शोत्तिए । 8. B. om. ता । B. लोहिदश्श मुण्डे for लोहिदमच्छके मुण्डके । 9. B भासुल । 10. A. ता पछा । B. adds शनूचो at the bottom after °मिश्शेहिं । A. दंसअन्तो । B. गहिदो । 11. A. एत्तिकेण । A om. last वा । 12. B. णत्थि । 13. B. अस्स for एदस्स । 14. A. विमरसि° for विमरिसि° । 15. B आअच्छ । B. गण्ठिच्छेद only. 16. B. om. सूचअ । B. इध for इह । B. गोँउरदुआरे । B. पतिवालेध ।

मं। जाव लाउलं पविशिअ णिक्कमामि।

उभौ—पविसदु लाउत्ते सामिपसादत्थं।

श्याल—तथा ( इति निष्क्रान्तः। )

सूचकः—जानुअ चिलाअदि लाउत्ते।

5 जानुकः—णं अवसलोपसप्पणीआ लाआणो होन्ति।

सूचअः—वअश्श पप्फुलन्ति मे हत्था इमं गण्ठिच्छेदअं घादिदुं।

जानुकः—( विलोक्य पुरुषं निर्दिश्य ) एसे अम्हाणं ईशले गेण्हिअ लाअशाशणं आअदे। ता शंपदं सउणाणं मुहं पेच्छदु अध वा गिद्धीशिआलीणं बली भोदु।

10 (प्रविश्य) श्यालः—शिग्घं शिग्घं एदं—(इत्यर्धोक्तेन)

पुरुषः—हा हदम्हि। (इति विषादं नाटयति। )

श्यालः—मुञ्चध ले मुञ्चध एणं जालोवजीविणं। उववण्णो किल अङ्गुलीअअस्स आगमो। अम्हं शामिणा ज्जेव कधिदं।

सूचकः—जमवसदिं खु गदुअ पलिणिउत्तो एसो। ( पुरुषं बन्धनान्मोचयति। )

15

पुरुषः—(श्यालं प्रणम्य) भट्टके तव केलके संपदं मम जीविदे।

श्यालः—एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पालिदोशिको दे

---

1. B. om. मं। 2. B. लाउत्तो for लाउत्ते। 5–8. B. confuses the two names. 4. B. चिलाएदि। 6. B. पुरणुन्ति for पप्फुलन्ति। A. हत्थो for हत्था। 8. B. इसले पत्ते। 9. B. om. आअदे। 8. B. शकुणाणं। B. पेक्खदु। 10. B. एनं for एदं। 12. A मुञ्च once। A. °जीवअं for °जीविणं। 13. A. अङ्गुलीअआगमो। 13. B. जधा दे for ज्जेव। 14. A. पलिणिअत्तो। B. क्खु एसो। 16. B जीविदं for जीविदे। 17. B. भट्टिणो for भट्टिणा। 17. A. दंसणसमुल्लसिदेण for मुल्लसम्मिदो। B. पारितोसिओ।

पसादीकिदो । ता गेण्ह एदं । (इति पुरुषाय कटकं ददाति ।)

पुरुषः—(सहर्षं प्रतिगृह्य) अणुगहिदम्हि ।

जानुकः—एसो क्खु रञ्ञा अणुगाहिदो जो शूलादो ओआलिअ हत्थि-
कन्धे समालोपिदो ।

5 सूचकः—जाणामि देण अङ्गुलीएण सामिणो बहुमदेण भविदव्वं ।

श्यालः—ण एतस्सिं भट्टिणो महालअण त्ति पलिओसो । एत्तिकं
उण तक्केमि । तस्स दंसणेण को वि हिअअवट्टी भट्टिणा सुम-
रिदो त्ति । जदो मुहुत्तं पइदिगम्भीरो वि पज्जुसुअमणो आसि ।

सूचकः—तोशिदे दाणि भट्टा लाउत्तेण ।

10 जानुकः—णं भणेहि इमस्स मच्छलीशत्तुणो कदे त्ति । (पुरुषं सासूयं
पश्यति ।)

पुरुषः—इदो तुम्हाणं पि अद्धं दाणि मुल्लअं भोदु ।

उभौ—धीवले महत्तले ! शंपदं उण पिअवअश्शके मे शंवुत्ते शि ।
कादम्बलीसोत्थिके पढुमसोहिच्चदे अम्हाणं इट्ठीअदि । ता
15 सुण्डिकागालं जेव गच्छम्ह ।

पुरुषः—तथा ।

॥ इति निष्क्रान्ताः सर्वे ॥

॥ प्रवेशकः ॥

---

1. A. °कदो for °किदो । 2. B. प्रगृह्य for प्रतिगृह्य । 3. B. अणुगहिदो । B. om. जो । 3. B. आणिअ for ओआलिअ । 5. B. तेण for देण । B. होदव्वं for भविदव्वं । 6. A. om ण । B. तस्सिं for एतस्सिं । A. महाराअस्स अणन्तपरिदोसो । B. एत्तिअं for, एत्तिकं । 7. B. हिअअलोइने । A. भट्टिणो for भट्टिणा । 8. B. मुहुत्तसुं for मुहुत्तं । 12. B. दे शुलामुल्लं होदु । 13. B. om. उण । 14. After शंपदं B. adds: समक्खं वुत्तोसि । B. om. मे । 14. A. °स्वत्थिके । B, सोत्थिदे । 15. B. इच्छीअदि for इट्ठीअदि । 15. B. शुण्ठिकागालं । 16. B. कुम्भीलकः for पुरुषः ।

( ततः प्रविशति आकाशयानेन मिश्रकेशी । )

मिश्रकेशी—णिव्वत्तिदं मए पज्जाअणिव्वत्तणीअं कम्मं । अच्छरा-तित्थसण्णिज्झं साहुअणस्स अभिसेअकालो । ताव इमस्स राएसिणो संपदं वुत्तन्तं पच्चक्खीकरइस्सं । मेणआसंबन्धेण सरीरभूदा

5 मे सउन्तला । ताए वि संदिट्ठम्हि । (समन्तादवलोक्य) किं णु क्खु उवत्थिदच्छणे वि दिअसे णिरुच्छवारम्भं विअ राउलं दीसदि ? अह वा अत्थि मे विहवो पणिधाणेण जाणिदुं । किं तु सहीए मए आअरो माणइदव्वो । भोदु, इमीणं दाव उज्जाणवाडिआणं पासपरिवत्तिणी भविअ तिरक्खरिणीए विज्जाए

10 पच्छण्णा उवलहिस्सं । (नाट्येनावतीर्य स्थिता । )

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी तस्याः पृष्ठतोऽपरा च ।)

प्रथमा—कधं उवत्थिदो मधुमासो ?

आअम्बहरिअवेण्टं ऊससिअं विअ वसन्तमासस्स ।
दिट्ठं चूअङ्कुरअं रइए छणमङ्गलअं णिअच्छामि ॥२॥

15 द्वितीया—सहि परहुदिए ! किं एदं एआइणी मन्तेसि ?

प्रथमा—सहि महुअरिए ! चूअलदिअं पेक्खिअ उम्मदिआ क्खु परहुदिआ भोदि । तव उण कालो एसो मदविब्भमुग्गीअदाणं ।

---

2. B. णिव्वुदं for णिव्वत्तिदं । B. om कम्मं । 3. B. °सण्णिज्जं । A साधुजणस्स । A अभिषेअ° । 5 A. मं आदिट्ठम्हि । 8. A. om. मए । A. सो आअरो माणिदव्वो । 9. A तिक्करिणीए । B om. विज्जाए । 10. B उअलहिस्सं । 11. B. आलोकयन्ती । 12. B. om. कधं । 13. B. आँअम्ब । 14 A. only चूअं । 15. A. एअं for एदं । 16. B. महुरिए for महुअरिए । A. चूद° । B. उम्मत्तिआ । A. om. क्खु । 17. A. एस कालो । A. °मुग्गीदाणं ।

ता सहि अवलम्बस्स मं जाव अग्गपदोवत्थिदा भविअ इमिणा चूअप्पसवेण संपादेमि कामदेवस्स वाअणं ।

द्वितीया—जइ एवं ता हला ममावि अद्धं वाअणस्स फलं ।

प्रथमा—सहि अभणिदं पि एदं संपज्जदि । जधा एक्कं जेव णो सरीरं
5 दुधा विहत्तं पआवइणा । ( सख्यवलम्बितकेन नाट्येन चूतप्रसवं गृहीत्वा ) अम्महे ! अप्पबुद्धो वि चूअप्पसवो एस बन्धणपब्भट्ठो सुरभी वाअदि । (कपोतहस्तं कृत्वा) णमो भअवदो मअरद्धअस्स ।

अरिहसि मए चूअङ्कुर दिण्णो कामस्स गहिदचावस्स ।
संठविअजुअइलक्खो पञ्चब्भहिओ सरो भोदुं ॥३॥

10 ( इति चूताङ्कुरं क्षिपति । )

(प्रविश्य) कञ्चुकी (रुपितः सक्रोधम्) मा तावदनात्मज्ञे । देवेनेवं निषिद्धेऽपि वसन्तोत्सवे त्वमग्रतश्चूतकलिकाभङ्गमारभसे ?

उभे—(भीते) पसीददु पसीददु अज्जो । अगहिदत्थाओ क्खु अम्हे ।

कञ्चुकी—हुँ । न खलु श्रुतं भवतीभ्यां यत्तु देवशासनं वासन्तैस्तरुभि-
15 रपि प्रमाणीकृतं तदाश्रयिभिश्च । तथा हि-

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।

1. A. पदग्गट्ठिदा for अग्गपदोवत्थिदा । 2. B. om. चूअ । 3. B. om. ता । A. om. हला । A. अफलितो वि । 4. B. द्विधा for दुधा । A. सख्यावल° । B. °लम्बितेन । B. विभत्तं for विहत्तं । 5. B. विअ for वि । B. भट्ठो for पब्भट्ठो । 7. B वाआदि । 8. B मे for मए । 9. A. °लक्खे for °लक्खो । A. °ब्भहिदो for °ब्भहिओ । 10. B. संक्षिपति । 11. B एवंविधे । 13. A. पसंददु । A. अगहिदत्थो for अगहिदत्थाओ । 14 B. om. हुँ । B किल for खलु ।

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं

शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥४॥

मिश्रकेशी—ण एत्थ संदेहो । महाप्पहावो क्खु एस राएसी ।

प्रथमा—अज्ज कदिच्चि दिवसाइं मित्तावसुणा रट्ठिएण भट्टिणो पाद-
5 मूलं पेसिदाणं अम्हाणं इध पमदवणे कलागिहकम्मं समप्पिदं ।
ता अज्ज ण कदा वि सुदपुव्वो एस वुत्तन्तो अम्हेहिं ।

कञ्चुकी—तेन हि न पुनरेवं प्रवर्तितव्यम् ।

उमे—अज्ज कोदूहलं णो । जइ इमिणा जणेण सोदव्वं, ता कधेदु अज्जो
किंणिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो त्ति ।

10 मिश्रकेशी—(स्वगतम्) ऊसवपिआ राआणो होन्ति । ता एत्थ गुरुणा
कारणेण होदव्वं ।

कञ्चुकी—(स्वगतम्) बहुलीभूतमेतत् किं न कथ्यते । (प्रकाशम्) अस्ति
भवत्योः कर्णपथमागतं शकुन्तलाप्रत्यादेशकौलीनम् ?

उमे—अज्ज सुदं रट्ठिअमुहादो सव्वं अङ्गुलीअअदंसणं जाव ।

15 कञ्चुकी—तेन हि स्वल्पं कथयितव्यम् । यदैव हि अङ्गुरीयकदर्शना-
दनुस्मृतं देवेन–सत्यमूढपूर्वा मया रहसि तत्रभवती शकुन्तला,
मोहात् प्रत्यादिष्टेति, तदैव पश्चात्तापमुपगतो देवः ।

---

3. B. °प्पहाओ । B. om. क्खु एस । 4. A. सामिणा मित्ता । B. भट्टिएण for रट्ठिएण । 5 B. वादमूलं for पादमूलं । B. पेरिदाणं for पेसिदाणं । B. कीलागिहकम्मं for कलागिहकम्मं । 7. A. पुनरेवं न । 8 B. मे for णो । A तदा for ता । 9 B. पतिसिद्धो for पडिसिद्धो । 11. A पणएण for कारणेण । 12. A. मेतं for मेतत् । 12. A. om. अस्ति भवत्योः । 14. B. भट्टिअ । B. om. सव्वं । 15. B. कथितव्यं for कथयितव्यं । 16. B. om. मया रहसि तत्रभवती । 17. B. मोहात तु ।

तथा हि—

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
5 गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ।।५।।

मिश्रकेशी—(स्वगतम्) पिअं मे पिअं मे ।

कञ्चुकी—अस्मात् प्रभवतो वैमनस्यात् प्रत्याख्यात उत्सवः ।

उभे—जुज्जदि ।

(नेपथ्ये)—एदु एदु भवं ।

10 कञ्चुकी—(कर्णं दत्वा पुरोऽवलोक्य च) अये इत एवाभिवर्तते देवः । तद् गच्छतां भवत्यौ । स्वकर्मानुष्ठीयताम् ।

उभे—तथा । (इति निष्क्रान्ते । )

(ततः प्रविशति पश्चात्तापगृहीतो राजा विदूषकः प्रतीहारी च ।)

कञ्चुकी—( राजानं विलोक्य ) अहो सर्वावस्थासु रामणीयकमाकृति-
15 विशेषाणाम् । तथा ह्येष एवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः ।

तथाहि—

प्रत्यादिष्टविशिष्टमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।

---

2. A. रम्यान् for रम्यं । 3. B. शय्योपान्त° for शय्याप्रान्त° । 6 A. om. स्वगतम् । 7. B. उत्सवः प्रत्याख्यातः । 9. A. om. भवं । 10. B. om. पुरोऽवलोक्य च । 15 A. om. एष । A. परिगृहीतो for परीतो । 16 A om. तथाहि । 17. B. °विशेष° for °विशिष्ट° ।

चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥

मिश्रकेशी—(राजानमवलोक्य) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स कारणादो सउन्तला किलिम्मदि ।

5 राजा—( सध्यानं परिक्रम्य )

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥७॥

मिश्रकेशी—ईदिसाइं से तवस्सिणीए भाअधेआइं ।

विदूषकः—( अपवार्य ) हुं ! भूए वि लंघिदो एसो सउन्तलावादेण ।
10 ण जाणे कधं चिकिच्छिदव्वो भविस्सदि ?

कञ्चुकी—( उपसृत्य ) जयति जयति महाराजः । देव प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि देवः ।

राजा—वेत्रवति ! मद्वचनादमात्यपिशुनं ब्रूहि–चिरादप्रबोधान्न संभावितमस्माभी राजधर्मानुशासनमनुष्ठातुम् । यत् प्रत्यवेक्षितं पौर-
15 कार्यमार्येण तत् पत्रे आरोप्य प्रस्थाप्यतामिति ।

प्रतीहारी—जं देओ आणवेदि । ( इति निष्क्रान्तः । )

राजा—पार्वतायन ! त्वमपि स्वनियोगमशून्यं कुरु ।

कञ्चुकी—तथा । ( इति निष्क्रान्तः । )

---

1 B तैस्तैर्गुणै° for तेजोगुणै° । 6. A प्रबोध्य° for प्रतिबोध्य° । 8. B. °णि for इं । 9. A. भूए णवित्र । B om वि लं° । B. विलं° । 9. B. एस for एसो । B. °वाओण for °वादेण । 10. B. आणे for जाणे । B. हुवि° for भवि° । 11. B. देवः for महाराजः । B. om. देव । 12. A. मनोहर° for विनोद° । 14. B. शासनानुष्ठान for शासनमनुष्ठातु° । 15 B पत्रमारोप्यतामिति ।

विदूषकः—किदं भवदा णिम्मक्खिअं । संपदं सिसिरविच्छेदरमणीए इमस्सिं पमदवणे अत्ताणअं विणोदेहि ।

राजा—(निःश्वस्य) वयस्य यदुच्यते रन्ध्रोपनिपातिनोऽनर्था इति तदव्यभिचारि । पश्य–

5　　मुनिसुताप्रणयस्मृतिरोधिना
　　मम च मुक्तमिदं तमसा मनः ।
　　मनसिजेन सखे प्रहरिष्यता
　　धनुषि चूतशरश्च निवेशितः ॥८॥

अपि च ।

10　　उपहितस्मृतिरङ्गुलिमुद्रया
　　प्रियतमामनिमित्तनिराकृताम् ।
　　अनुशयादनुरोदिमि चोत्सुकः
　　सुरभिमाससुखं च पुरः स्थितम् ॥९॥

विदूषकः—भो वअस्स ! चिट्ठ दाव । इमिणा दण्डअट्ठेण कन्दप्पवाणं
15　णासेमि ।

राजा—( सस्मितम् ) दृष्टं भवतो ब्रह्मवर्चसम् । सखे क्वेदानीमुपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विनोदयामि ?

विदूषकः—णं भवदा आसण्णपरिचारिणी मेहाविणी लिविअरी आदिट्ठा–माहवीलदामण्डवे इमं वेलं अदिवाहइस्सं । तहिं से चित्त-
20　फलहए सहत्थलिखिदा तत्थभोदीए पडिकिदी आणिअदु त्ति ।

2. B. अत्ताणअं for अत्ताणं । 3 A. om. वयस्य । 13. B. °सुखं समुपस्थितं for °सुखं च पुरः स्थितम् । 18. B °चारिआ for °चारिणी । B. om. लिविअरी । 19. B. °फलअके for फलहए । 20. B. पदिकिदी for पडिकिदी ।

राजा—सदृशं मे हृदयाश्वासनम् । तत्तदेवादेशय ।

विदूषकः—इदो इदो भवं । (इति परिक्रामतः । मिश्रकेशी अनुगच्छति ।)

विदूषकः—एस मणिसिलापट्टसणाहो माहवीलदामण्डवो उअआररम-
णीअदाए णीसद्दसाअदेण विअ पडिच्छदि तुमं । ता पविसिअ
5 एत्थ उवविसम्ह । ( इति उभौ प्रविश्योपविष्टौ । )

मिश्रकेशी—लदासण्णिठधा भविअ पेक्खिस्सं दाव सहीए पडिकिदिं ।
तदो से भत्तुणो अणुराअं बहुमुहं णिवेदइस्सं । ( तथा कृत्वा
स्थिता । )

राजा—( निःश्वस्य ) सखे माधव्य ! सर्वमिदानीं स्मरामि । प्रियायाः
10 प्रथमदर्शनवृत्तान्तं कथितवानस्मि भवते सर्वम् । स भवान् प्रत्या-
ख्यानकाले मत्समीपगो नासीत् । प्रथममपि न त्वया कदाचिद्
संकथासु तत्रभवत्याः संकीर्तितं नाम । कच्चिदहमिव विस्मृतवां-
स्त्वमसि ?

विदूषकः—ण विसुमरामि । किं तु सव्वं कधिअ अवसाणे तए भणिदं
15 परिहासविअप्पो एसो ण भूदत्थो त्ति । मए मन्दबुद्धिणा तह
ज्जेव गहिदं । अहवा भविदव्वदा एत्थ बलवदी ।

मिश्रकेशी—एवं णेदं ।

---

1. B तदेवादेशय । 2 B. इदो once. 3. B °वट्ट° for °पट्ट° । A °सणासो for °सणाहो । B. °मण्डपो for °मण्डवो । 4 A साअदेण वि । B. भवं for तुमं । 4. A. पविशिअ । B. om. एत्थ । 5. B. इति उपविशतः । 6 B. °झम्पिआ for °सण्णिठधा । B पदिक्किदिं । 7. B. om. से । 9 B. om. सर्वं । B शकुन्तला° for प्रियायाः । 11. A. om. मत्° । 12. B संकथनं । 13 A. om. °वान् । 14. A. कहिअ for कधिअ । 15 A एस for एसो । B. भूअत्थो for भूदत्थो । B om. त्ति । B. मए वि । 16 A. सव्वधा for अहवा ।

राजा—(क्षणं ध्यात्वा) सखे परित्रायस्व माम् ।

विदूषकः—भो किं एदं ? अणुववण्णं तव । ण कदावि सप्पुरिसा सोअवरुद्धा होन्ति । णं पवादे वि णिकम्पा ज्जेव गिरिओ ।

राजा—वयस्य ! निराकरणविक्लवायास्ते सख्यास्तामवस्थामनुस्मृत्य
5 बलवदशरणोऽस्मि । सा हि—

इतः प्रत्याख्यानात् स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥१०॥

10 मिश्रकेशी—अम्महे इदिसी कज्जस्स परवसदा—इमस्स जणस्स संदावेणाधिअदरं अहं रमामि ।

विदूषकः—भो एत्थ तक्केमि केणावि तत्थभोदी आआसचारिणा णीद त्ति ।

राजा—वयस्य क इव देवताभ्योऽन्यः संभाव्यते ? कः पतिव्रतां
15 तामन्यः परामष्टुमुत्सहते ? मेनका किल सख्यास्ते जन्मभूमिप्रतिष्ठेति तत्सखीजनात् श्रुतवानस्मि । तत्सहचरीभिस्तया वा सा नीतेति मे हृदयमाशङ्कते ।

---

1. B om. क्षणं । 2. A. किं णेदं for किं एदं । A. सप्पुरुसा for सप्पुरिसा । 3. A. सोअपरिगदा for सोअवरुद्धा । 4. A. सखे for वयस्य । 5. A. °दस्वस्थो° for °दशरणो° । 8. B. °प्रसर° for °प्रकर° । 10. B. ज्जेव for कज्जस्स । 11. B. om. अधिअदरं । A. om. अहं । 12. B. कए वि for केणावि । B. आकास° for आआस° । 13. B. णीएत्ति for णीद त्ति । 15. B. om. तां । A. प्रमाष्टु° for परामष्टु° । A. उत्सहेत for उत्सहते । B. °भूमिः । 16 A. तत्सहचरीभ्यां । A. om. तया वा ।

मिश्रकेशी—संमोहे वि विम्हअणीओ क्खु से पडिबोधो ।

विदूषकः—जइ एवं ता समस्ससदु भवं । अत्थि क्खु समागमो कालेणावि तत्थभोदीए ।

राजा—कथमिव ?

5 विदूषकः—भो ण हि मादापितरा भत्तिविरहिदं दुहितरं चिरं पेक्खिदुं पारेन्ति ।

राजा—वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु
क्लृप्तं नु तावत्फलमेव पुण्यैः ।
10 सासन्निवृत्त्यै सुदती ममैव
मनोरथानामतटप्रपातः ॥११॥

विदूषकः—वअस्स मा एवं भण । णं अङ्गुलीअअं एव एत्थ णिदंसणं । अवस्संभाविणो अचिन्तणीअसमागमा होन्ति ।

राजा—( अङ्गुरीयकमवलोक्य ) इदं तदसुलभस्थानभ्रंशशोचनीयं मे
15 अङ्गुरीयकम् ।

तव सुचरितमङ्गुरीय नूनं
गतमसुनैव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥१२॥

1. A. विम्हअणीअ । B. विअम्हअणीओ । 2. A. जइ वि । 5. B. मादापिदरो । A. भत्तुणो विरहिदं for भत्तिविरहिदं । 6. A. पहवन्ति for पारेन्ति । 10. B. सुदतीति मन्ये । 12. B. अङ्गुरीअअ everywhere while A. °लीअ° in Sanskrit as well as in Prakrit. A. इमे for एवं । A. णिदरिसणं for णिदंसणं । 17 B. प्रतनु ममेव for गतमसुनैव ।

मिश्रकेशी—जइ अण्णहत्थं गदं भवे तदा सच्चं सोअणीअं भवे। सहि
　　दूरे वट्टसि। एआइणी ज्जेव अहं कण्णसुहाइं अणुभवामि।

विदूषकः—भो इअं णाममुद्दा केण उण उवुग्घादेण तत्थभोदीए हत्थ-
　　संसग्गं पाविदा ?

5 मिश्रकेशी—ममावि कोदूहलेण वावारिदो एसो।

राजा—वयस्य। श्रूयताम्। तदा स्वनगराय प्रस्थितं मां प्रिया
　　सबाष्पमाह-कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ?

विदूषकः—तदो तदो।

राजा—अथेमां नाममुद्रामङ्गुल्यां निवेशयता मयाभिहिता-

10 विदूषकः—किं ति ?

राजा—

　　　　एकैकमत्र दिवसे दिवसे मदीयं
　　　　नामाक्षरं गणय यासि न यावदन्तम्।
　　　　तावत् प्रिये मदवरोधनिदेशवर्ती
15　　　　नेता जनस्तव समीपमुपैष्यतीति ॥१३॥

　　तच्च मोहाद् दारुणमनुष्ठितम्।

मिश्रकेशी—रमणीओ क्खु अवधी विहिणा विसंवादिदो।

---

1. B. तदो for तदा। 2. B. कण्णसुहं for कण्णसुहाइं। 3. B. उवाएण। A. तत्थभोदीहत्थगदा। 5. B. वाआरिदो for वावारिदो। 6 B. om. वयस्य। B. °नगरं for °नगराय। 12. A. मदीय° for मदीयं। 13. A. गच्छति for यासि न। 14. B. °गृहप्रवेशी for °निदेशवर्ती। 15. A. °मिहैष्यतीति for °मुपैष्यतीति। 16. B. om. क्खु। B. सविसादो किदो for विसंवादिदो।

विदूषकः—अध कधं पुण रोहिदमच्छस्स वडिशं विअ मुहं पइट्ठं एदं आसि ?

राजा—वयस्य ! शचीतीर्थसलिलं वन्दमानायाः सख्यास्ते गङ्गास्रोतसि परिभ्रष्टम् ।

5 विदूषकः—हुं जुज्जदि ।

मिश्रकेशी—अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो अवणीदो संदेहो जादो । अहवा ण ईदिसो अणुराओ अहिण्णाणमवेक्खदि । ता किं पि एदं ।

राजा—भवतूपालप्स्ये तावदिदमङ्गुरीयकम् ।

10 विदूषकः—(सस्मितम्) अहं पि एदं दण्डअट्ठं उवालहिस्सं, कधं उज्जुअस्स मे कुडिलं सि त्ति तुमं ?

राजा—(अनादृत्य)

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

15 अथवा

अचेतनं नाम गुणं न वीक्षते
मयैव कस्मादवधीरिता प्रिया ॥१४॥

मिश्रकेशी—सअं जेव्व पडिवअणो जं वत्तुकामा ।

---

1. B. भो अध । A. om. पुण । B. पविट्ठं for पइट्ठं । 3. B. °तीर्थे for °तीर्थसलिलं । B. उदकं for °सलिलं । B. ते सख्याः । B om. गङ्गा° । 5. B. om. हुं । 6. ^ धम्मभीरुणो for अधम्म... । 7. B. अघवा । B. इदीसोणुराओ । 8. B. कधं पि for किं पि । 10. B. उआल° for उवाल° । 11. A. तुम त्ति for सि त्ति तुमं । 12. A. तं अना° ।

राजा—निपुणो भवान् । अस्त्यत्र भावलिङ्गं च ।

स्निग्धाङ्गुलिविनिवेशाद् रेखा प्रान्तेषु दृश्यते मलिना ।

अश्रु च कपोलपतितं लक्ष्यमिदं वर्तिकोच्छ्वासात् ॥१८॥

मेधाविनि ! अर्धलिखितमिदं विनोदस्थानमस्माभिः । तद् गच्छ,

5 वर्तिकास्तावदानय ।

मेधाविनी—अज्ज माधव्व ! अवलम्ब चित्तफलअं । जाव गच्छामि ।

राजा—अहमेवैनमवलम्बे । (यथोक्तं करोति । निष्क्रान्ता लिपिकरी ।)

विदूषकः—भो एत्थ किं अवरं अहिलिहिदव्वं ?

मिश्रकेशी—जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामो

10 राजा भविस्सदि त्ति तक्केमि ।

राजा—सखे श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी

पादास्तामभितो निषण्णचमरो गौरीगुरोः पावनः ।

शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः

15 शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥१९॥

विदूषकः—(अपवार्य) जधा मन्तेदि तधा तक्केमि पूरिदो अणेण चित्त-

फलओ कुच्चणिकाणं तावसाणं समूहेहिं ।

राजा—अन्यच्च शकुन्तलाप्रसाधनमभिप्रेतमप्यत्र लिखितुं विस्मृत-

1. B. तावल्लिङ्गं for भावलिङ्गं । 2. B. स्विन्नः° for स्निग्धा° । B. रेखोपान्ते° for रेखा प्रान्ते° । 3. B वर्त्तुलो° for वर्तिको° । 6. B. माहव्व for माधव्व । B. चित्तफलअं गेण्ह । 8. A लिहिदव्वं । 9. B अभिमदो । 10. B. रात्रा for राजा । 11. B. om. सखे । 15. A. °मानं for °मानां । 16. A. पूरिदोणेण for पूरिदो अणेण । 17. A. कुसुम्बआणं for कुच्चणिकाणं ।

मस्माभिः ।

विदूषकः—किं विअ ?

मिश्रकेशी—वणवासस्स कण्णकाभावस्स सदिसं से भविस्सदि ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ २० ॥

विदूषकः—किं ण क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं ओवारिअ चकिदचकिदा विअ दीसदि ? आं ही ही भोः ! एसो दासीए पुत्तो कुसुमरसहरो महुअरो तत्थभोदीए वअणकमलं अहिलसदि ।

राजा—ननु वार्यतामेष दुष्टः ।

विदूषकः—भो तुमं जेव अविणीदाणुसासणे पहवसि ।

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे ! किमतः परिपतनखेदमनुभवसि ?

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति भ्रमरी न खलु मधु त्वां विना पिबति ॥२१॥

मिश्रकेशी—अइजुत्तं खु से वाहरिदं ।

विदूषकः—भो पडिसिद्धवामा क्खु एसा जादी ।

9. A. एत्थ रत्तकुवलअ°... । 10. A. ओआरिअ for ओवारिअ । 11. A. कुसुमसरसहअरो । 12. A. अहिलंघेदि । 18. A. मधुकरी for भ्रमरी । 19. B. अभिआदं for अइजुत्तं । 20. A. जादा for जादी ।

राजा—( सकोपम् ) भोः न मे शासने तिष्ठसि ? श्रूयतां-तर्हि संप्रति

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद् भ्रमर प्रियाया-
5 स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २२ ॥

विदूषकः—भो एवं तिक्खदण्डस्स कधं ण भाइस्सदि ? (प्रहस्यात्मगतम्) एसो दाव उम्मत्तो। अहं पि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो। (प्रकाशम्) भो चित्तं क्खु एदं ।

राजा—कथं चित्रम् ? मया पुनर्ज्ञातं स एव कालो वर्तत इति ।

10 मिश्रकेशी—ममावि दाव अप्पा अन्तरं ण गणेदि। जाव अहं पि इदाणिं पडिबुद्धा, किं उण जधाचिन्तिदाणुभावी एसो ।

राजा—(सविषादम्) वयस्य किमिदमनुष्ठितं पौरोभाग्यम् ?

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥२३॥

( इति बाष्पं विसृजति । )

15 विदूषकः—सव्वो पुव्वावरविरुद्धो विहिणो मग्गो ।

राजा—वयस्य कथं विश्रामसुखमनुभवामि ?

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पोऽपि न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २४ ॥

---

1. A. om. संप्रति । 4. A. दशति । 6. B. एदं for एवं । B. दे कधं । B. भविस्सदि । 7. B. उन्मत्तओ for उम्मत्तो । B. सङ्गे for सङ्गेण । 8. B. om. भो । 9. B. om. मया…इति । 10. B. अहं पि दाव अत्तणो अन्तरं ण गणेमि । 16. B. एस विरहिणो मग्गो । 17. B. °दुःखं for °सुखं ।

मिश्रकेशी—सव्वधा वअस्स पमज्जिदं तए पच्चादेसदुक्खं पिअसहीए सउन्तलाए पच्चक्खं जेव सहीअणस्स ।

( प्रविश्य ) लिपिकरी—भट्टा वत्तिआकरण्डिअं गेण्हिअ इदोमुहं पत्थिदम्हि ।

5 राजा—किं ततः ?

लिपिकरी—जाव मे पिङ्गलिआदुदिआए देवीए वसुमदीए अहं जेव अज्जउत्तस्स उअणइस्सामि त्ति भणिअ सबलक्कारं गहिदो ।

विदूषकः—कधं तुमं विमुक्का ?

लिपिकरी—जाव लदाविडवलग्गं देवीए परिचारिआ अञ्चलं मोआवेदि दाव णिव्वाहिदो मए अप्पा ।

10

( नेपथ्ये ) एदु एदु भट्टिणी ।

विदूषकः—( कर्णं दत्वा ) भो अहिधावन्ती एसा अन्तेउरवग्घी मेहाविणिं मइं विअ कवलिदुं उवत्थिदा ।

राजा—वयस्य ! उपस्थिता देवी बहुमानगर्विता च । तद् भवानिमां प्रियाप्रतिकृतिं रक्षतु ।

15

विदूषकः—अत्ताणअं पि भणेहि ।

मिश्रकेशी—सहि एसा पडिकिदी वि दे पडिवक्खस्स अलंघणीआ करीअदि ।

---

1. A. अवस्स for वअस्स । B. पमिज्जिदं for पमज्जिदं । 2. A. om. सउन्तलाए । 3. A. °करण्डं for °करण्डिअं । 5. A. om. ततः । 6. B. om. जाव मे । B. पिङ्गलिआए । 7. A उअणआमि । B. om. भणिअ । 9. B. °विलव for °विडव । B पासपरिचारिआ । 10. B. अतिवाहिदो for णिव्वाहिदो । 11. B. जअदु for एदु । 12. B. अहिधावदि एसा मेधाविणिं मइं विअ कवलेइदुं उअत्थिदा अन्तेउरवग्घी । 14 B om. इमां । 16. B अत्ताणं पि । 17. B. पदिकिदी ।

विदूषकः—( चित्रफलकमादायोत्थाय च ) जइ भवं अन्तेउरकूडवासादो मुञ्चिस्सदि, तदो मं मेहच्छन्दपासादे सद्दावेसि । इदं च तहिं गोवेमि जहिं पारावदं वज्जिअ ण को वि अण्णो पेक्खदि ।

( इति द्रुतपदं निष्क्रान्तः । )

5 मिश्रकेशी—अम्मो अण्णसंकन्तहिअओ वि पढुमं सम्भावणं रक्खदि । विरसो ण हु दाणि एसो ।

(प्रविश्य पत्रहस्ता) प्रतीहारी—जअदु जअदु भट्टा ।

राजा—वेत्रवति ! न खल्वन्तरे दृष्टा देवी वसुमती ?

प्रतीहारी—दिट्ठा । पत्तहत्थं मं उण पेक्खिअ पडिणिअत्ता ।

10 राजा—समयज्ञा देवी कार्योपरोधं परिहरति ।

प्रतीहारी—देव अमच्चो विण्णवेदि–अत्थिजणस्स बहुलदाए एक्कं मए पोरकज्जं पच्चवेक्खिदं । तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति ।

राजा—इतः पत्रं दर्शय ।

( प्रतीहारी तथा करोति )

15 राजा—(वाचयति) विदितमस्तु भवताम्–धनवृद्धिनामा वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः । स चानपत्यः । तस्य चानेककोटिसंख्यं वसु । तदिदानीं राजार्थतामापद्येत । श्रुत्वा देवः प्रमाणमिति ।

---

1. B. अन्तःकूरवग्घीदो । 2. B. °पसादे for °पासादे । B. °वेदि for °वेसि । B. एदं for इदं । 3. B. पारावअं । B om. को वि । 5. A °संकत्त° । 7. B. देवो for भट्टा । 8. A. om. देवी । 9. B. °णिउत्ता for °णिअत्ता । 10. B. कालज्ञा for समयज्ञा । 12. B. पोरव for पोर° । A. °करोदु for °करेदु । 17. B. राजस्वं for राजार्थताम् । B. °पद्यते for °पद्येत ।

राजा—( सविषादमात्मगतम् ) कष्टा खल्वनपत्यता । ( चिन्तयित्वा )
वेत्रवति ! महाधनत्वाद् बहुपत्नीकेन तेन भवितव्यम् । तदन्विष्यतां
यदि कदाचिदापन्नसत्वा कापि भार्या तस्य स्यात् ।

प्रतीहारी—देव दाणिं जेव साकेदस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंस-
5 वणा तस्स जाआ सुणीअदि ।

राजा—ननु स गर्भः पित्र्यमृक्थमर्हति । ततो गत्वैवममात्यं ब्रूहि ।

प्रतीहारी—जं देवो आणवेदि । (इति प्रस्थिता ।)

राजा—एहि तावत् ।

प्रतीहारी—(प्रतिनिवृत्य) एस म्हि ।

10 राजा—अथ किमनेन संततिरस्ति नास्ति वा ?

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥२५॥

प्रतीहारी—एवं णाम घोसइदव्वं ( इति निष्क्रम्य पुनः प्रविष्टा ) देव
काले पवुट्ठं विअ सासणं अहिणन्दिदं महाजणेण देवस्स ।

15 राजा—( दीर्घं निःश्वस्य ) एवं भोः संततिविच्छेदनिरवलम्बना मूल-
पुरुषावसाने संपदः परमुपतिष्ठन्ते । ममाप्यन्ते पुरुवंशश्रिय एष
वृत्तान्तः ।

प्रतीहारी—देव पडिहदममङ्गलं ।

राजा—धिङ्मामुपस्थितश्रेयोविमानिनम् !

---

1. A. om. आत्मगतम् । 2. B. °धनत्वेन for °धनत्वात् । B. अनेन for तेन । 3. B. काचिद् for कदाचिद् । B. तस्य भार्या भवेन for कापि भार्या तस्य स्यात् । 4. B. दाणिं for इदाणिं । 6. B. om. ततो । 7. A. देओ । 9. इअम्हि । 10. B. om. अथ । B. om. वा । 14. B. अभि° for अहि° । 15-16. B. मूलसत्पुरुषा° । A. °तिष्ठन्ति for °तिष्ठन्ते ।

मिश्रकेशी—असंसअं पिअसहिं जेव हिअए कदुअ णिन्दिदो अप्पा अणेण भविस्सदि ।

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥२६॥

मिश्रकेशी—अपरिच्चत्ता दाणि दे भविस्सदि ।

लिपिकरी—(जनान्तिकम्) अज्ज एदं पत्तं पेसअन्तेण दुउणाणुतावो कदो भट्टा अमच्चेण । ता मेहच्छन्दप्पासादावत्थिदं संतावणिवारइत्तकं अज्जमाधव्वं गेण्हिअ आअच्छ ।

प्रतीहारी—सुट्ठु दे भणिदं । (इति निष्क्रान्ता ।)

राजा—अहो दुष्मन्तस्य संशयारूढाः पिण्डभाजः ।

अस्मात् परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥२७॥

मिश्रकेशी—सदि क्खु दीवे अणवभाणदोसेण अन्धआरं अणुभवदि राएसी ।

लिपिकरी—भट्टा अलं सन्तावेण । णणु णवबअत्थो ज्जेव पहू

1. B. अणेण अप्पा । 6. A. अवेक्ष्यमाणा । 8. B. परिच्चत्ता । 9. B. द्विउणा° । 10. B. मेघच्छन्दकावत्थिदं । 17 A. °शेष° for °सेक° । 18. A. अनु° for अणु° । 20. A. अपुण्णबअत्थो for णणु णवबअत्थो । B. भवं for पहू ।

अवरासुं देवीसुं अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अग्गिणो भविस्सदि । (स्वगतम्) ण मे वअणं पडिगेण्हदि भट्टा । अधवा अणुरूवं जेव ओसहं आतङ्कं णिवत्तेदि ।

राजा—(शोकावेगनाटितकेन) सर्वथा

5　　आमूलशुद्धसंतति कुलमेतत् पौरवं प्रजावन्ध्ये ।
　　मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः ॥२८॥

( इति मोहमुपगतः । )

लिपिकरी—(ससंभ्रमम्) समस्ससदु समस्ससदु भट्टा ।

मिश्रकेशी—किं इदाणिं जेव एणं णिव्वुदं करइस्सं ? अधवा सुदं मए

10　सउन्तलं धारअन्तीए देवजणणीए मुहादो जण्णभाओसुआओ देवदाओ ज्जेव तधा करइस्सन्ति जधा भट्टा तुमं अइरेण धम्मवत्तिं अहिणन्दइस्सदि त्ति । ता ण जुत्तं इमं कालं मम लंघिदुं । जाव इमिणा वुत्तन्तेण पिअसहिं सउन्तलं समस्ससामि ।

( इत्युद्भ्रान्तकेन निष्क्रान्ता । )

15　(नेपथ्ये)—अव्वम्भण्णं अव्वम्भण्णं ।

राजा—(प्रत्यागतप्राणः कर्णं दत्वा) अये माधव्यस्येवार्तनादः ।

लिपिकरी—मा णाम माधव्व-तवस्सी पिङ्गलिआमिलिदाहिं देवीहि

---

1. A. अवरासु देवीसु । 2. A. adds देवो after भविस्सदि । B. पतिगेण्हदि । 8. A. समस्सदु once. 9. B. दाणिं for इदाणिं । B. om. एणं । 10. A. सउन्तलां । 10–11. B. reads जण्णभाअस्स कदे देवदा । B. तथा for तधा । 12. B. अहिणन्दि° for अहिणन्दइ° । 12. A. om. ण । B. लंघयिदुं । 13. B. इमेण for इमिणा । B समस्सामि । 15. B. अव्वम्हण्ण° । 17. A. माणव° for मा णाम । B. पिङ्गलिआमिस्सिआवसुमदीहिं ।

चित्तफलअहत्थो पाविदो भविस्सदि ।

राजा—मेधाविनि गच्छ । मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व ।

लिपिकरी—जं देओ आणवेदि । (इति निष्क्रान्ता । )

(नेपथ्ये भूयः स एव शब्दः । )

5 राजा—परमार्थभीत इव भिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः ?

(प्रविश्य) कञ्चुकी—आज्ञापयतु देवः ।

राजा—निरूप्यतां किमेवं माधव्यो माणवकः क्रन्दतीति ।

कञ्चुकी—यावदालोकयामि । (इति निष्क्रम्य पुनः ससंभ्रमं प्रविष्टः ।)

राजा—पार्वतायन न खलु किंचिदत्याहितम् ?

10 कञ्चुकी—भो राजन् एवम् ।

राजा—तत्कुतोऽयं कम्पः ?

कञ्चुकी—किं तु—

प्रागेव जरसा कम्पः सविशेषेण संप्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥२९॥

15 तत् परित्रायतां प्रियसुहृदं महाराजः ।

राजा—कस्मात् परित्रातव्यः ?

कञ्चुकी—महतः कृच्छ्रात् ।

राजा—भिन्नार्थमभिधीयताम् ।

कञ्चुकी—देव ! योऽसौ दिगवलोककः प्रासादो मेघच्छन्दो नाम ।

---

1. A °फलहत्थ° for चित्तफलअ° । 2. B. गच्छ त्वं । B. °परिवारां for °परिजनां । 3. B. देवो । 5. A. एव for इव । 7. B. माधव्य-माणवकः । 8. B. °दवलोकयामि । 9. A. om. न खलु । 10. B. om. भो राजन् । 15. B. महा° for प्रिय° । 18. A. विभिन्नार्थक° for भिन्नार्थ° । 19. B. दिगवलोकः ।

राजा—किं तत्र ?

कञ्चुकी—

ततोऽग्रभूमेर्गृहनीलकण्ठै-

रनेकविश्रामविलंघ्यशृङ्गात् ।

5 सखा प्रकाशेतरमूर्तिना ते

केनापि सत्त्वेन निगृह्य नीतः ॥३०॥

राजा—( सहसोत्थाय ) ममापि सत्त्वैरभिभूयन्ते गृहाः ? अथवा बहु-

प्रत्यवायं नृपत्वम् ।

अहन्यहन्यात्मन एव ताव-

10 ज्ज्ञातुं प्रमादात् स्खलितं न शक्यम् ।

प्रजासु कः केन पथा प्रयाती-

त्यशेषतः कस्य पुनः प्रभुत्वम् ॥३१॥

(नेपथ्ये) विदूषकः—अहिधाव भो भो ।

राजा—(आकर्ण्य गतिभेदं परिक्रामन् ) सखे न भेतव्यं न भेतव्यम् ।

15 विदूषकः—कधं ण भाइस्सं ? एसो मं को वि पच्छापीडिअसिरोधरं

उब्बन्धिअ अत्थिभङ्गं करेदि ।

राजा—(सदृष्टिविक्षेपम्) धनुर्धनुस्तावत् ।

(प्रविश्य धनुर्हस्ता) प्रतीहारी—भट्टा एदं सरासणं वाणभाअणं च ।

( राजा सशरं धनुरादत्ते । )

---

1 B. किमत्र for किं तत्र । 4. B. °तुङ्गात् for °शृङ्गात् । 8. B. °प्रत्यवायत्वं । 10. A. प्रमादस्खलितं for प्रमादात्स्खलितं । 13. A. अभिधाव B. भो once. 18. A. देव for भट्टा । B. illegible for वाणभाअणं ।

( नेपथ्ये )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्मन्तस्तव शरणं भवत्विदानीम् ॥३२॥

राजा—( सक्रोधम् ) कथं मामेवोद्दिशति । आः तिष्ठ कुणपापसद । अयमिदानीं न भवसि ! (चापमारोप्य) पार्वतायन सोपानमार्गमादेशय ।

कञ्चुकी—इत इतो देवः । ( इति सर्वे सत्वरमुपसर्पन्ति । )

राजा—(समन्तादवलोक्य) शून्यं खल्विदम् ।

विदूषकः—अहिधाव भोः । अहं भवन्तं पेक्खामि । तुमं ण मं पेक्खसि । मज्जारगहिदो विअ उन्दुरो अणीसोम्हि संवुत्तो ।

राजा—भोः ! तिरस्करिणीविद्यागर्वितं मदीयशस्त्रं त्वां न द्रक्ष्यति ? स्थिरो भव । मा च ते वयस्यसंपर्काद् विश्वासो भूत् । एष त्वदर्थमिषुं संदधे—

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥३३॥

( इत्यस्त्रं संधत्ते । )

( प्रविश्य संभ्रान्तो विदूषकं समुत्सृज्य मातलिः विदूषकश्च । )

---

6. B. कुणपाशन for कुणपापसद । 7. A. अयमहं । 11. A. भवं for भवन्तं । 11. B अणीसम्हि । 12. B. तिरस्करिणीगर्भितं न मदीयमस्त्रं द्रक्ष्यति । 15 A रक्तं for रक्ष्यं । 18 A. om. संभ्रान्तो । A. उत्सृज्य for समुत्सृज्य ।

मातलिः—

कृता शरव्या हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
5 पतन्ति चक्षूंषि न दारुणाः शराः ॥३४॥

राजा—( ससंभ्रमं शस्त्रमुपसंहरन् ) अये मातलिः ! स्वागतं देवराज-
सारथे ।

विदूषकः—भो अहं अणेण पसुमारं मारिदो । भवं उण साअदेण
अहिणन्देदि ।

10 मातलिः—( सस्मितम् ) आयुष्मन् ! श्रूयतां यदर्थमस्मि हरिणा त्व-
त्सकाशं प्रहितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—श्रुतपूर्वो मया नारदात् ।

15 मातलिः—

सख्युस्ते स किल शतक्रतोरवध्य-
स्तस्य त्वं शरसख एव संनिहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३५॥

---

2. B. महासुराः for तवासुराः । 3. B. तेष्वकरिष्यता° for तेषु विकृष्यता° । 6. A. ससंभ्रमं संहृत्य । 7. A. स्वागतं after °सारथे । 8. B. पुण for उण । 9. B. °णन्ददि for °णन्देदि । 11. B. प्रेषितः for प्रहितः ।

स भवानात्तचाप एव इदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः संभावनया । अथ भवद्भिर्माधव्यं प्रति किमेवं प्रयुक्तम् ?

मातलिः—एतदपि कथ्यते । किंचिन्निमित्तादपि मनस्तापादायुष्मान्
5 मया विक्लवो दृष्टः । पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ?

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी चाक्षेपात् प्रायः प्रतिपद्यते तेजः ॥३६॥

राजा—(जनान्तिकम्) वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र
10 परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः ॥३७॥

विदूषकः—जं भवं आणवेदि । ( इति निष्क्रान्तः । )

मातलिः—रथमारोहत्वायुष्मान् ।

15 ( राजा तथा करोति । )

इति निष्क्रान्ताः सर्वे ।

॥ शकुन्तलाविरहो नाम षष्ठोऽङ्कः ॥



---

4. A. इदमपि for एतदपि । A. किन्निमित्ता° for किंचिन्निमित्ता° । 8. B. च क्षोभात् for चाक्षेपात् । 9. B. om. जनान्तिकम् । 11. A प्रतिपालयतु । 12. B. °मस्मिन् मे° for °मन्यस्मिन् । 1. A. om. शकुन्तलाविरहो नाम ।

# ( ७ )

( ततः प्रविशत्याकाशवर्त्मना रथारूढो राजा मातलिश्च । )

राजा—मातले ! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुप-
युक्तमिवात्मानं समर्थये ।

मातलिः—उभयत्राप्यसंतोषमवगच्छ । कुतः ?

5 प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानसंमितां भवतः सोऽपि न सत्क्रियामिमाम् ॥१॥

राजा—मा मैवम् । स खलु मनोरथानामप्यतिदूरवर्ती यो विसर्जना-
वसरे सत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य
अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।

10 प्रमृज्य वक्षो हरिचन्दनाक्तं मन्दारमाला हरिणा पिनद्धा ॥२॥

मातलिः—किमिवायुष्मानामरेश्वरादर्हति ? पश्य

सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुनायतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः ॥३॥

राजा—अत्र खलु शतक्रतोरेव महिमा । पश्य

15 सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।

---

2. B. om. मातले । B. सत्क्रियया for सत्क्रियाविशेषाद् । 4. B. °मुपगच्छतु for °मवगच्छ । 6. A. °त्युपकार° for °त्यवदान° । 10. A. °चन्दनाक्तमन्दार° । 11. B. किं नाम नायुष्मानमरे° । 16. B. तदीश्वरा° for तमीश्वरा° ।

किं वाभविष्यदरुणस्तमसां वधाय
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलिः—सदृशं तवैतत् । ( स्तोकमन्तरं गत्वा । ) आयुष्मन् ! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

5 विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु ।
संचिन्त्य गीतिक्षममर्थतत्त्वं दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

राजा—मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युरारोहता न लक्षितोऽयं प्रदेशो मया । अथ कस्मिन् पथि वर्तामहे मरुताम् ?

मातलिः—

10 त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति चक्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमपूतमेनं
वायोरधः परिवहस्य रहस्यमार्गम् ॥६॥

राजा—अतः खलु मे सबाह्यकरणोऽन्तरात्मा प्रसीदति । (रथमार्गमव-
15 लोक्य ) शङ्के मेघपदवीमवतीर्णौ स्मः ।

मातलिः—(सस्मितम्) आयुष्मन् ! कथमवगम्यते ?

राजा—

अयमरविवरेभ्यश्चातकैर्निःपतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।

---

1. B. किं प्राभवि° for किं वाभवि° । 3. B. om. इतः । 7. A. °प्रहरणौत्सुक्येन for °संप्रहारोत्सुकेन । A. °रारोहयता for °रारोहता । 8. A. प्रदेशे for पथि । 11. B. °विभक्तवान्यः for °विभक्तरश्मिः । 12. B. °पूतमेतं for °पूतमेनं । 13. B वदन्ति for रहस्य° । 14. A. मे after प्रसीदति । B. रथाङ्ग° for रथमार्ग° । 17. B. वारिलिप्तः for चानुलिप्तैः ।

गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

मातलिः—क्षणादूर्ध्वमायुष्मन्नात्माधिकारभूमौ वर्तिष्यसे ।

राजा—( अधोऽवलोक्य ) मातले वेगावतरणादाश्चर्यदर्शनः समर्थ्यते
5　　जीवलोकः । तथा हि–

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णस्रस्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
संधानं तनुभावनष्टसलिला व्यक्तं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

10 मातलिः—आयुष्मन् साधु दृष्टम् । ( सबहुमानमालोक्य ) अहो उदग्र-
रमणीया पृथ्वी !

राजा—मातले ! कतरोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी
सांध्य इव मेघपरिघः सानुमानवलोक्यते ?

मातलिः—आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वतः । अतः
15　　परं तपस्विनां सिद्धिक्षेत्रम् । पश्य–

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ॥९॥

राजा—( सादरम् ) तेन हि अनतिक्रमणीयानि श्रेयांसि । तत्

---

3. A. om मातलिः । A क्षणादूर्ध्वमवलोक्य । B. om. आयुष्मन् । B. अधित्यकाभूमौ for आत्माधिकारभूमौ । 4. A. om. राजा । 5. A. om. जीव° । 6 A. °मधिरोहतीव । A. °ण्युन्मज्जतां । 7. A. पर्ण-श्रस्तरलीनतां । B illegible. 10. B. दर्शितं for दृष्टं । B. °मवलोक्य for °मालोक्य । A. उग्र° for उदग्र° । 15. A. om. परं ।

प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः—प्रथमः कल्पः । अवतरत्वायुष्मान् । (इति रथावतारं नाटयित्वा) एताववतीर्णौ स्वः ।

राजा—(सविस्मयम्) मातले !

5 उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुध्यते
तवावतीर्णोऽपि न लक्ष्यते रथः ॥१०॥

मातलिः—आयुष्मन् ! एतावानेव शतक्रतोस्तावकस्य च रथस्य

10 विशेषः ।

राजा—मातले ! कतरस्मिन् प्रदेशे मारीचाश्रमः ?

मातलिः—(हस्तेन दर्शयन्) पश्य

वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यन्तसंपीडितः ।
15 अंसव्यापिशकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

राजा—(विलोक्य) नमोऽस्मै कष्टतपसे !

मातलिः—(संयतप्रग्रहं रथं कृत्वा) एतत्परिवर्धिमन्दारवृक्षकं प्रजापतेराश्रमपदं प्रविष्टौ स्वः ।

20 राजा—अहो स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढो-

2 B. रथावतरं । 7. A. न रुध्यते for निरुध्यते । 11. B. om. मातले । 12. A. निदर्शयन् । 14. A. कर्णे for कण्ठे । 17. B. om. विलोक्य । 18. B. एतदतिपरि° for एतत्परि° । A. °वृक्षं । 20. B. om अव° ।

ऽस्मि संवृत्तः ।

मातलिः—(रथं स्थापयित्वा) अवतरत्वायुष्मान् ।

राजा—(साभिनयमवतीर्य) भवान् कथमिदानीम् ?

मातलिः—समययन्त्रितोऽयमास्त एव रथः । तद् वयमप्यवतरामः ।

5 ( तथा कृत्वा ) इत आयुष्मन् दृश्यन्तां तत्रभवतां सिद्धमुनीनां तपोवनभूमयः ।

राजा—ननु विस्मयादुभयमप्यवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
10 ध्यानं रत्नशिलागृहासु विबुधस्त्रीसंनिधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना । ( परिक्रम्याकाशे ) वृद्ध-शाकल्य ! किंव्यापारो भगवान्मारीचः ? (आकर्ण्य) किं ब्रवीषि ? एष दाक्षायण्या पतिव्रतया व्रतमधिकृत्य पृष्टस्तस्यै महर्षिः

15 पत्नीसहितः कथयतीति ।

मातलिः—प्रतिपाल्यावसरः खलु प्रस्तावः । ( राजानमवलोक्य ) अस्यामशोकच्छायायां तावदायुष्मांस्तिष्ठतु यावत्त्वामहमिन्द्र-गुरवे निवेदयामि ।

राजा—यथा भवान्मन्यते । (मातलिर्निष्क्रान्तः । )

20 राजा—( निमित्तं सूचयित्वा )

---

5. B. इहामुष्मिन् for इत आयुष्मन् । 7. A. om. ननु । 14. B. दाक्षायिण्याः पतिव्रतायाः । B. पुण्य° for व्रत° । B. तदस्यै for तस्यै । 15. A. सपत्नीसहितः । 17–18. B. यावदहमत्र गुरवे कथयामि । 20. B. किञ्चिन्निमित्तं for निमित्तं ।

मनोरथाय नाशंसे किं बाहो स्पन्दसे मुधा ।
पूर्वावधीरितं श्रेयो दुःखेन परिवर्तते ॥१३॥

(नेपथ्ये) मा खु चवलत्तणं करेहि । कधं गदो ज्जेव्व अत्तणो पइदिं ?

राजा—( आकर्ण्य ) अभूमिरियमविनयस्य स्यात् । तत् को नु खलु
5 निषिध्यते ? ( शब्दानुसारेणावलोक्य सविस्मयम् ) अये अय-
मनुरुध्यमानस्तापसीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
विलम्बिनं सिंहशिशुं बलात्कारेण कर्षति ॥१४॥

( ततः प्रविशति यथानिर्दिष्टकर्मा बालस्तापस्यौ च । )

10 बालः—जिम्भ ले सिंहसाव आजिम्भ । दन्ताइं दे गणइस्सं ।

प्रथमा—अविणीद ! किं ति सोदरसिणेहणिव्विसेसे इमस्सिं सिंहसावए
अवरद्धो दे समारम्भो ? ठाणे क्खु इसिजणेण सव्वदमणो त्ति
किदणामधेओसि ।

राजा—(स्वगतम्) किं नु खलु बालेऽस्मिन्नौरस इव स्निह्यते मे मनः ?
15 (विचिन्त्य) आं नूनमनपत्यता मे वत्सलयति ।

द्वितीया—एसा खु सिंही तुमं लङ्घेदि जदि से पुत्तअं ण मुञ्चेसि ।

बालः—( सस्मितम् ) अम्मो बलिअं खु भीदो म्हि । ( इति अधरं

---

3. B. कधं अत्तणो पइदिं दंसेसि । 4. B. कर्णं दत्वा for आकर्ण्य B अये अभूमि° । B. om. स्यात् । 5. B. निषिध्यत एव । A. om अयं । 9. B. यथोक्त° for यथानिर्दिष्ट° । 10. A. जिम्ह् for जिम्भ । B. [illegible] for ले । A. दन्ताणि for दन्ताइं । 11. B. om. °सिणेह° । B त[illegible] वट्टदि संरम्भो for अवरद्धो etc. 13. B. कदुअदत्तणाम° for किदं etc 15. A. om मे । 16. A. इमा for एसा । B. तुह् for क्खु । B. ज[illegible] for जदि । B. पुत्तं । A. वुत्तन्तं । B. मुञ्चसि । 17. A. बलि fo[r] बलिअं । B भीदम्हि । A. om. इति ।

दशति । )

राजा—(सविस्मयम् । )

आहितं तेजसो बीजं बालोऽयं प्रतिभाति नः ।
स्फुलिङ्गावस्थया वह्निरेधःक्षय इव स्थितः ॥१५॥

5 प्रथमा—वच्छ ! मुञ्च इमं बालमइन्दअं । अण्णं दे कीलणअं देइस्सं ।

बालः—कहिं से ? देहि मे । ( इति हस्तं प्रसारयति । )

राजा—(हस्तं विलोक्य) कथं चक्रवर्तिलक्षणमनेन शिशुना धार्यते ? तथा हि—

प्रलोभिवस्तुप्रणयप्रसारितो
10 विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥१६॥

द्वितीया—सुव्वदे ! ण एसो सक्को वाआमेत्तकेण समइदुं । ता गच्छ । मम केरए उडए साअंकाअणस्स इसिकुमारस्स केरको वण्ण-
15 चित्तिदो मित्तिआमोरो चिट्ठदि । तं से उअहर ।

प्रथमा—तथा । (इति निष्क्रान्ता । )

बालः—किं दाव तेण ? इमिणा ज्जेव कीडइस्सं ।

तापसी—(सस्मितम्) मुञ्च णं ।

---

3 A. वीर्यं for बीजं । 5. A. om इमं । A. °मइन्दं for °मइन्दअं । B. कीलअं for कीलणअं । B. दइस्सं for देइस्सं । 7. B. °लक्षणं धार्यते । 12. B. नवोषया for नवोषसा । 13. B. सव्वि सुदव्वदे । 14. B केरके for केरए । A. सण्णिक्काअणस्स । B. कुमारआस्स for इसिकुमारस्स । 15. B. मेत्तिआ° for मित्तिआ° । B. उआहर for उअहर । 18. B. मुञ्च णं मुञ्च ।

राजा—(सस्पृहम्) स्पृहयामि खलु बालदुर्ललितेभ्यः। ( निःश्वस्य )

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
5 धन्यास्तदङ्गरजसा परुषीभवन्ति ॥१७॥

तापसी—( साङ्गुलितर्जनम् ) भोदु मं ण गणेसि ? ( पार्श्वानवलोकयन्ती) को एत्थ मुणिकुमारआणं ? (राजानं दृष्ट्वा) भद्दमुह एहि। मोआवेहि दाव इमिणा दुम्मोक्खहत्थग्गाहिदेण डिम्भकेण बाधीअमाणं बालमइन्दअं।

10 राजा—तथा। ( इति उपगम्य सस्मितम् ) भो महर्षिपुत्रक !

एवमाश्रमविरुद्धवृत्तिना
संयतेन किमिवात्र जन्तुना।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ॥१८॥

15 तापसी—भद्दमुह ! ण एसो मुणिकुमारओ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति। स्थानप्रत्ययात्तु वयमेवंतर्किणः। (यथाभ्यर्थितमनुतिष्ठन् बालस्पर्शमुपलभ्यात्मगतम्)

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टेषु गात्रेषु सुखं ममैवम्।

---

1. B. om. सस्पृहं। A. स्पृहयति for स्पृहयामि। 2. A. °हास्यै° for °हासै°। 8. B. मोआवेहि at the end. B. ताव णं। B. °हत्थग्गहेण for °हत्थग्गहिदेण। B. डिम्हेण for डिम्भकेण। 9. A. धारीअमाणं for बाधीअमाणं। A. मइन्दं for मइन्दअं। 10. B. °पुत्र।

कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्यायमङ्गात्कृतिनः प्ररूढः ॥१९॥

तापसी—(विलोक्य) अच्छरीअं अच्छरीअं !

राजा—(विलोक्य) किमाश्चर्यम् ।

5 तापसी—इमस्स बालअस्स असंबद्धेऽपि भद्दमुहे संवादिणी आकिदि त्ति विम्हिदम्हि । अवि अ वामसीलो वि भविअ अवरिचिदस्स वि णाम दे वअणेण पइदित्थिदो अअं संवुत्तो त्ति ।

राजा—( बालमुल्लापयन् ) आर्ये ! न चेन्मुनिकुमारकोऽयं तत् कोऽस्य व्यपदेशः ?

10 तापसी—पोरवो ।

राजा—( अपवार्य ) कथमेकान्वयो मम ? अतः खलु संवध्यते । (प्रकाशम्) अस्त्येतत् पौरवाणां कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
विहितैकमुनिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥२०॥

15 कथं पुनरात्मगत्या मानुषाणामेष विषयः ?

तापसी—जधा भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स बालअस्स जणणी इध ज्जेव देवगुरुणो तवोवणे पसूदा ।

राजा—(स्वगतम्) हन्त द्वितीयमिदमाश्वासजननम् । (प्रकाशम्) अथ

---

3. A. °रिअं । 4. A. om. विलोक्य । 6. B. विअम्हिदम्हि for विम्हिदम्हि । A. वालसीलो for वामसीलो । B. om. वि । 8. B. बालक° । B. चैतन्मुनि° । B. कोऽयमस्य । 14. B नियतैक° for विहितैक° । 15 A °रात्मशक्त्या । A. B. एव for एष । 16. B. किन्तु before अच्छरा... । 17. A. om. जणणी । A. B. om. °देव । 18. B. om. इदं । B. °स्थानं for °जननं ।

तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी—को तस्स धम्मदारपरिच्चाइणो णामं कित्तइस्सदि ?

राजा—(अपवार्य) तत् किमियं मामेव लक्षीकरोति ? यदि तावदस्य शिशोर्मातरं नामतः पृच्छेयम् । (विचिन्त्य) अथवा न न्याय्यः

5 परदारपृच्छात्मको व्यापारः ।

(प्रविश्य मृण्मयमयूरहस्ता) तापसी—सव्वदमण पेक्ख सउन्तलावण्णं ।

बालः—(सदृष्टिविक्षेपं) कहिं सा मे अज्जू ? ( उभे प्रहसिते । )

तापसी—णामसादिस्सेण उवच्छन्दिदो मादिवच्छलो ।

10 द्वितीया—वच्छ इमस्स मोरस्स रमणीअत्तणं पेक्ख त्ति भणिदो सि ।

राजा—( स्वगतम् ) कथं शकुन्तलेत्यस्य मातुराख्या ! अथवा सन्ति पुनर्नामसादृश्यानि । अपि नाम मृगतृष्णिकेवायं नाम प्रस्तावो विषादाय कल्पेत !

बालः—अत्तिके ! लोचदि मे एसे चडुले मोरके । ( क्रीडनकं समा-

15 दत्ते । )

प्रथमा—(अवलोक्य सावेगम्) अम्मो रक्खागण्डकं से मणिबन्धे ण दीसदि ।

राजा—अलमावेगेन । ननु इदमस्य सिंहशावकस्य विमर्दात् परि-

---

1. A. किमाख्यराजर्षे । 2. B. अस्स for तस्स । B. णाम for णामं । A. कित्तइस्सं । 3. B. तत्किमियं कथा । 4. B. अन्याय्यः । 5. B. °पृच्छादिव्यापारः । 6. B. मयूरपात्रहस्ता । 7. B. सदृष्टिक्षेपं । 9. A. om. तापसी । 10. B. मेत्तिआमोरस्स । B. om. सि । 14. B. चटुले मउलके । A. क्रीडनं for क्रीडनकं । 16 B. संदीसदि । 17. B. सावकविमर्दात् ।

अष्टम् । (इत्यादातुमिच्छति । )

उभे—अच्छरीअं अच्छरीअं । मा क्खु आलम्भइस्सदि । (अवलोक्य) कधं गहिदं जेव्व अणेण ? ( उभे विस्मयमापन्ने उरसि निहित-हस्ते परस्परमवलोकयतः । )

5 राजा—किमर्थमस्मि प्रतिषिद्धो भवतीभ्याम् ?

प्रथमा—सुणादु महाभाओ । एसा अवराइआ णाम परममहोसधी इमस्स णामकरणसमए भअवदा मारीएण दिण्णा । एदं किल मादापितरे अत्ताणअं च वज्जिअ अवरो भूमिपडिदं ण गेण्हदि ।

राजा—अथ गृह्णाति ?

10 द्वितीया—तदो सप्पो भविअ तं दंसेदि ।

राजा—अथ भवतीभ्यां कदाचिदेतत् प्रत्यक्षीकृतम् ?

उभे—अणेअसो ।

राजा—( सहर्षम् ) तत् किं खल्विदानीमहं परिपूर्णमात्मनो मनोरथं नाभिनन्दामि ? (बालं परिष्वजते ।)

15 द्वितीया—संजदे ! एहि इमं वुत्तन्तं णिअमवावाराए सउन्तलाए गदुअ णिवेदेम्ह । (इति निष्क्रान्ते ।)

---

1. B. om. इति । 2. B. अच्छरीअं once । A. अच्छरिअं । B. °म्भिस्सदि for °म्भइस्सदि । B. आलोक्य । 3. B. विस्मयादुरोनिहि-तहस्ते । 6. B. महाणुभाओ for महाभाओ । B. om. from णाम to इमस्स । 7. A. णामकरणे । A. मारीइणा । A एणं for एदं । B om. किल । 8. A. अत्तणं for अत्ताणअं । A. om. च । A om. अवरो । 12. B. कदाचिदपि for कदाचिदेतत् । 14. B. om. सहर्षं तत् । B. किमहं । B. परिपूर्णमनोरथमात्मानमेव । 15. A. B. परिष्वजति । 16. A. om. एहि । B. णिअमवारग्गान् । B. om. गदुअ । B. णिवेदम्ह ।

बालः—मुञ्च मुञ्च मं जाव अज्जूसआसं गमिस्सं ।

राजा—पुत्रक मयैव सार्धं मातरमभिनन्दयिष्यसि ।

बालः—दुस्मन्तो मम तादो । ण क्खु तुमं ।

राजा—( सस्मितम् ) एष विवाद एव मां प्रत्याययति ।

5 ( ततः प्रविशत्येकवेणीधरा शकुन्तला । )

शकुन्तला—विआरकाले वि पइदिट्ठिदं सव्वदमणओसहिं सुणिअ ण मे आसङ्घो अत्तणो भाअधेएसुं । अहवा जधा मे मिस्सकेसीए आअक्खिदं तधा सम्भावीअदि एदं । (इति परिक्रामति ।)

राजा—(शकुन्तलां दृष्ट्वा) अये ! कथमियमत्रभवती शकुन्तला ?

10 वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥२१॥

शकुन्तला—( राजानमवलोक्य ) ण क्खु अज्जउत्तो विअ को एसो किदरक्खामङ्गलअं दारअं मे हत्थसंसग्गेण दूसेदि ?

15 बालः—( तामुपसृत्य ) अज्जुए को वि पलके मणुस्से मं पुत्तके त्ति आलवेदि ।

राजा—अनार्यमपि मे त्वयि प्रसक्तं अनुकूलपरिणामं संवृत्तं यतोऽहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि ।

---

1. B. मुञ्च once. 3. B पिदा for तादो । 5. B. बद्धवेणिका for एकवेणीधरा । 8. B. अधवा । A om. मे । 11. B. °वेणी for °वेणिः । 14. B. को णु क्खु । 16. B. मातर° for ता° । A अज्जू । B. एहि के वि । B. पुत्तके त्ति कदुअ ।

शकुन्तला—( आत्मगतम् ) हिअअ समस्सस समस्सस । परिहरिअ णिव्वुत्तमच्छरेण अणुकम्पिद म्हि देव्वेण । अज्जउत्तो क्खु एसो ।

राजा—

5 स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगतो रोहिणीयोगः ॥२२॥

शकुन्तला—जअदु त्ति (इत्यर्धोक्तेन बाष्पं विसृजति ।)

राजा—

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
10 यत्ते दृष्टमसंस्कारात्लोलालकमिदं मुखम् ॥२३॥

बालः—अज्जुए को एसो ?

शकुन्तला—वच्छ भाअधेआइं मे पुच्छ । ( इति रोदिति । )

राजा—( प्रणिपत्य )

सुतनु हृदयात् प्रत्याख्यानव्यलीकमपैतु ते
15 किमपि मनसः संमोहो मे तदा बलवानभूत् ।
चपलमनसामेवंप्राया: शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥

शकुन्तला—उत्थेदु उत्थेदु अज्जउत्तो । णूणं मे सुहपडिवन्धकं पुराकिदं तेसु दिअसेसु परिणामविमुहं आसि, जेण साणुक्कोसो वि

1. B. समस्स twice 2 A. जं च तु मच्छरेण । 5. B. दृष्टयाभिमुखे । 7. B. °र्धोक्त एव । 11. A. अज्जू । B. के एशे । 14. A °मुपैतु for मपैतु । 18. B. उत्थेदु once B. om. मे । 19. A. विअ for वि ।

अज्जउत्तो मयि तधा संवुत्तो ।

( राजा उत्तिष्ठति । )

शकुन्तला—कधं अज्जउत्तेण सुमरिदो दुक्खभाइजणो ?

राजा—उद्धृतशल्यविषादः कथयामि ।

5 मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं विमृज्य विगतानुशयो भवामि ॥ २५॥

( मुखमुन्नमयितुं हस्तं प्रसारयति । )

10 शकुन्तला—( बाष्पं प्रमृज्य दृष्टिं दत्वा अङ्गुरीयकं विलोक्य ) अज्जउत्त णं तं इमं अङ्गुलीअअं ?

राजा—अथ किम् । अस्मादङ्गुरीयकोपलम्भनान्मया स्मृतिरुपलब्धा ।

शकुन्तला—समीहिदं खु अणेण किदं जं अज्जउत्तस्स पच्चअकरणे दुल्लहं मे आसि ?

15 राजा—तेन हि ऋतुसमागमसमयाशंसि प्रतिपद्यतां लतास्विव कुसुमम् ।

शकुन्तला—ण सेविस्सं । अज्जउत्तो ज्जेव णं धारेदु ।

( प्रविश्य ) मातलिः—दिष्टया धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन च

---

1. B. सअं for मयि । 3. B. अध कधं सुमरिदो अज्जउत्तेण अअं । 4. B. °विषादशल्यः । 7. A °कुलिन° for °कुटिल° । B. पक्ष्मसुलग्न° for पक्ष्मविलग्न° । 8. B. व्यक्तं for बाष्पं । 9. B. अवलोक्य । A. om. अज्जउत्त । A. ण इमं । 13. A. om किदं । 15. B. om. °समागम° । A. om. समा- । A is blank after °शंसि up to सेविस्सं । 18. B. om. °मुख° । B. om. च ।

आयुष्मान् वर्धते ।

राजा—सुहृत्संपादितत्वात् साधुफलो मे मनोरथः । मातले ! न खल्वविदितोऽयमाखण्डलस्यार्थः ।

मातलिः—आयुष्मन् ! किमीश्वराणां परोक्षम् ? एहि । भगवान्मारीच-
5 स्ते दर्शनमिच्छति ।

राजा—शकुन्तले ! अवलम्ब्यतां पुत्रः । त्वामेव पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकुन्तला—लज्जामि क्खु अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

राजा—अवारितमेतदभ्युदयकालेषु । एह्येहि । (इति परिक्रामति ।)

10 ( ततः प्रविशत्यदित्या सह मारीचः । )

मारीचः—( राजानं विलोक्य ) दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य गोप्ता ।
चापेन यस्य विनिवर्तितकर्मजातं
15 तत्कोटिमत्कुलिशमाभरणं मघोनः ॥२६॥

अदितिः—संभावणीआ क्खु से आकिदी ।

मातलिः—एतौ पुत्रसमेन चक्षुषा दिवौकसां पितरावायुष्मन्तमेत्राव-लोकयतः । तदुपसर्प ।

राजा—मातले !

---

3. B om. खल्वयं । A. अयं both before and after अविदितः । 4. B. °राणामपरोक्षं । B. मारीचिः every where. 8 B. समं for सह । 9. B. एहि once. । 10. B. सहचारी । 11. B. दाक्षायिणि । 14. A. विनिवारित° । 17 A. om. अव° ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे तद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥२७॥

5 मातलिः—अथ किम् ।

राजा—(उपसृत्य) उभाभ्यामपि वासवनियोज्यो दुष्मन्तः प्रणमति ।

मारीचः—वत्स चिरं पृथिवीं पालय ।

अदितिः—अप्पडिहदरधो होहि ।

शकुन्तला—भअवं दारअसहिदा पाअवन्दणं करेमि । (तथा करोति ।)

10 मारीचः—वत्से !

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीमङ्गला भव ॥२८॥

अदितिः—जाद भत्तुणो बहुमदा होहि । अअं च दीहाऊ उहअउल-णन्दणो भोदु । ता उअविसध । ( सर्वे उपविशन्ति । )

5 मारीचः—(एकैकं निर्दिश्य)

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं समुपागतम् ॥२९॥

राजा—भगवन् ! प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वोऽनु-ग्रहः । पश्यतु हि भवान्–

---

2. A. कर्तारं for भर्तारं । 4. B. तत्त्वं for द्वन्द्वं । A. °मरीच° for °मरीचि° । 8 B. अप्पतिहदरहो । 9. A. पाअपडणं for पाअवन्दणं । A. करोदि for करेमि । 13. A. दीहउ for दीहाऊ । A. चहअ° for उहअ° । B. °उलणन्दणो for °उलणन्दणो । 17. A. श्राद्धा and वृत्ति for श्रद्धा and वित्तं । B. सममागतं for समुपागतं ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधि-
स्तव प्रसादस्य पुरस्तु संपदः ॥३०॥

5 मातलिः—आयुष्मन् एवंविधाचाराः प्रसीदन्ति महान्तः ।

राजा—इमामाज्ञाकरीं वो गान्धर्वेण विधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिदौर्बल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्र-भवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादिमामङ्गुरीयकदर्शनादूढ-पूर्वामुपगतोऽस्मि । तच्चित्रमेव मे प्रतिभाति ।

10 यथा गजे साधुसमक्षरूपे
तस्मिन्नतिक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः ॥३१॥

मारीचः—वत्स अलमात्मापराधशङ्कया । संमोहोऽपि त्वय्युपपन्न

15 एव । श्रूयताम् ।

राजा—अवहितोऽस्मि ।

मारीचः—यदैवाप्सरस्तीर्थात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय दाक्षा-यणीमुपगता मेनका तदैव ध्यानादवगतवानस्मि दुर्वाससः शापा-दियं तपस्विनी धर्मचारिणी प्रत्यादिष्टा नान्यथा । स चाङ्गुरी-

20 यकदर्शनावसानः शापः ।

---

6. A. आज्ञाकारी° । A. om. वो । 17. A. अप्सरसः । B. प्रत्या-ख्यानवैक्लव्यां । 18. B. °दवगतोस्मि । 20. B. °दर्शनावधिः ।

राजा—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि ।

शकुन्तला—(अपवार्य) दिट्ठिआ अकामपच्चादेसी अज्जउत्तो । ण उण सत्तं अत्ताणअं सुमरेमि । अहवा वुत्तो भवे सुण्णहिअआए सावो जदो सहीहिं अच्चादरेण संदिट्ठं भत्तुणो अङ्गुलीअअं

5 दंसेसि ।

मारीचः—वत्से विदितार्थासि । तदिदानीं सहधर्मचारिणं प्रति त्वया मन्युर्न कर्तव्यः । पश्य—

शापादसि प्रतिहता स्मृतिलोपरौक्ष्याद्
भर्तर्यपेत चलितासि पुनः प्रभुत्वम् ।
10 छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले विमलप्रकाशा ॥३२॥

राजा—यथाह भगवान् !

मारीचः—वत्स कच्चिदभिनन्दितस्त्वया विधिवदनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ?

15 राजा—भगवन् । अत्र खलु मे वंशप्रतिष्ठा ।

मारीचः—तद् भाविनं चक्रवर्तिनमेनमवगच्छतु भवान् । पश्य—

रथेनानुद्घातस्तिमितगतिनोत्तीर्णजलधिः
पुरा सप्तद्वीपामवति वसुधामप्रतिरथः ।

---

1. प्रवचनीया° । 2. A. कारणपच्चादेसी । 3. A. सुमरेदि । B. भवे अअं । 5. B. ति ar the end । 8. A. रौक्षात B. रूक्षा । 9. B. प्रभुता तदैव for °सि पुनः प्रभुत्वं । 11. A. च for तु । A. सुलभप्रकाशा for विमलप्रकाशा । 13. B. विधिवदस्माभिरनु° । 14. A. °जातकर्मक्रियः ।

इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥३३॥

राजा—भगवत्कृतसंस्कारेऽस्मिन् सर्वमाशङ्के ।

अदितिः—इमाए दुहिदाए मणोरहसंपत्तीए कण्णो वि दाव विण्णाद-
5 वित्थरो करीअदु । मेणआ उण इध ज्जेव दुहिदिवच्छला परि-
चअन्ती सण्णिहिदा चिट्ठदि ज्जेव ।

शकुन्तला—(स्वगतम्) मम मणोगदं खु कधिदं भअवदीए ।

मारीचः—तपःप्रभावात्सर्वमेवैतत्प्रत्यक्षं तत्रभवतः कण्वस्य ।

राजा—(स्वगतम्) हन्त न ममातिक्रुद्धो गुरुः ।

10 मारीचः—(विचिन्त्य) तथापि दुहितुः सपुत्राया भर्त्रा परिग्रहः प्रिय-
तमोऽस्माभिः कण्वः श्रावयितव्यः । कः कोऽत्र भोः ?

(प्रविश्य) शिष्यः—भगवन्, अहमस्मि ।

मारीचः—गालव ! अस्मद्वचनादिदानीमेव विहायसा गत्वा तत्र-
भवते कण्वाय प्रियमावेदय—यथा तत्रभवती शकुन्तला तच्छाप-
15 निवृत्तौ स्मृतिमता दुष्मन्तेन परिगृहीतेति ।

शिष्यः—यथाज्ञापयति भगवान् । (इति निष्क्रान्तः ।)

---

3. B. भवता for भगवत्° । 4. B. दुहिदिआए । 4-5. A. णादवित्थरो for विण्णादवित्थरो । B. विण्णातविहवो । B. om. इध ज्जेव । 5. B. सम्परिचरन्ती for परिचअन्ती । 7. A. om. स्वगतं । A. om. मम । 9. A. ममापि क्रुद्धो । 10. A. om. विचिन्त्य । A. om. भर्त्रा । 11. A. प्रियमस्माभिरसौ निवेदयितव्यः । 12. B. आज्ञापयतु for अहमस्मि । 13. B. मद्° for अस्मद्° । 14. B. om. यथा । B. om. तत् । 15. A प्रतिगृहीतेति । 16. B. भवानिति । After this speech of शिष्य, B. adds शकुन्तला-अप्फाहिदम्हि ।

मारीचः—वत्स त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमास्थाय स्वराजधानीं प्रतिष्ठस्व ।

राजा—यथाज्ञापयति भगवान् ।

मारीचः—अपि च । संप्रति हि–

5 तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विहितयज्ञो वज्रिणं प्रीणयालम् ।
गुरुतरपरिवृत्तैरेवमन्योन्यकृत्यै-
र्नियतमुभयलोकानुग्रहश्लाघनीयौ ॥३४॥

अपि च–

10 क्रतुभिरुचितभागांस्त्वं सुरान् प्रीणयालं
सुरपतिरपि वृष्टिं त्वत्प्रजार्थं विधत्ताम् ।
इति सममुपचारव्यञ्जितश्रीमहिम्नो-
र्व्रजतु बहुतिथोऽयं सौहृदेनैव कालः ॥३५॥

राजा—भगवन्, अहमपि यथाशक्ति श्रेयसे यतिष्ये ।

15 मारीचः—किं ते भूयः प्रियमुपकरोमि ?

राजा—भगवन्, अतःपरमपि प्रियमस्ति ? तथापि यदि भवान् परं कर्तुमिच्छति, तदेतदस्तु–

---

3. B. भवान् । 5. B. भवतु भुवि for तव भवतु । 6. B. भावयालं for प्रीणयालम् । 7. A. परिवृत्ते । 10. B भावयालं for प्रीणयालं । 11. A. वृष्ट्या for वृष्टिं । 12. A. blank for…समुपचार… । 13. A. °तिथोऽसौ for °तिथोऽयं । 14. A. om. भगवन् । A. om. श्रेयसे । 16. B. om. भगवन् । B. om. तथापि ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः

सरस्वती श्रुतिमहतां महीयसाम् ।

ममापि च क्षपयतु नीललोहितः

पुनर्भवं परिगतभक्तिरात्मना ॥३६॥

5　मारीचः—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे । )

॥ इति शकुन्तलासंवर्धनं नाम सप्तमोऽङ्कः ॥

इति मिश्रश्रीकालिदासकृतौ

अभिज्ञानशकुन्तलं नाम नाटकं समाप्तम् ।

---

2. B. श्रुतिमहतां न हीयताम् । 2. A. om. मिश्र । 8. A. om. the name of the Act.

At the end Ms. A gives the post-colophon remark:

ल. सं. ५५८ चैत्रकृष्णपञ्चम्यां शुक्रे कवैलखग्रामे बहेराढीसं

श्रीकृष्णदेवेन लिखितमिदं पुस्तकमिति ।

There is a shloka after that:

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।

कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥

# श्लोक-सूची

❀ ❀ नमो गणेशाय ❀

अथ

# महोपाध्यायशङ्करकृता रसचन्द्रिकाटीका ।

वक्षोजद्वयकाञ्चनाचलपरीरम्भस्खलन्मुक्तिका-
लाजप्राजबुभुक्षुपन्नगफणाफूत्कारभीतां पुनः ।
वासोत्काममतिवेपमानजघनां पर्याकुलां कौतुकी
निर्यान्तीमचलात्मजामुपहसन् पञ्चाननः पातु वः ॥१॥

आशैशवं जननि वाणि पदारविन्द-
मासेवितं तव तथा प्रणिपत्य याचे ।
तत्तत्कवीश्वरशिरोमणिकालिदास-
भावप्रकाशनविधौ न यथोपहासः ॥ २ ॥

आसीत्कृती जयधरो जगति प्रसिद्धो
नानापदेन बलिआस-कुल-प्रदीपः ।
योगश्रुतिस्मृतिपुराणकथागमादि-
शास्त्राभियोगपटुताजितवादिसिंहः ॥ ३ ॥

तत्सूनुरिन्दुरुचिनिर्मलकीर्तिराशि-
रावारिराशि विदितो भुवि रुद्रनामा ।
निष्ठानसूर्गतवशिष्ठमुनिप्रतिष्ठो
वेदादिशास्त्रशतधामसहस्रधामा ॥ ४ ॥

तस्यात्मजः परमशाब्दिकचक्रवर्ती
वेदेतिहाससकलस्मृतितत्त्ववेत्ता ।

नोनेभिधानविदितो भुवि वासुदेवो
नित्यार्चनाहरिहराहरणप्रवीणः ॥ ५ ॥

तस्यात्मजो विषमतर्कनिकुञ्जसिंहो
गोविन्दचारुचरणाम्बुजलब्धबुद्धिः ।

श्रीशङ्करः शिशुमुदे भरतादि दृष्ट्वा
शाकुन्तले।वितनुते नु पदप्रकाशम् ॥ ६ ॥

निर्विघ्नेन प्रारीप्सितपरिसमाप्तिकाम आशीर्वादरूपां नान्दीं कुर्वन्नेवाभिनवारम्भेऽखण्डताण्डवकलाप्रधाननायकत्वेन सर्वथोत्कीर्तनीयस्याष्टमूर्तेरीशस्य प्रत्येकनिरुपाधिपरोपकृतिकुतूहलं स्वरूपं निर्दिशति—या सृ ष्टि रि ति । ईशः शिवस्ताभिरष्टाभिस्तनूभिर्मूर्तिभिर्वो युष्मान् रक्षतु । ईष्टे सकले प्रायेषु (?) ऐश्वर्यं करोतीतीशः । ईश ऐश्वर्ये । इगुपधादित्वात्कः । ताभिः । काभिः ? या तनूः स्रष्टुर्विधातुः प्रथमा सृष्टिः या आदौ विधात्रा विहिता सा तनूर्जलम् । तथाह मनुः—

सोभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥ इति ॥

ईशः प्रभौ महादेवे इति मेदिनी । या तनूर्हविर्घृतादि वहति हवनीयद्रव्यं वहतीत्यर्थः । किंभूतं हविः ? विधिहुतं श्रुतिकथनविधानेनाग्नौ क्षिप्तम् । सा अग्निः । साम्नाज्यं हविरग्नौ तु हुतमित्यमरः । या होत्री होमविधात्री सा ऋत्विग्रूपा । ये द्वे तनू चन्द्रादित्ये कालं समयं दिवानिशारूपं विधत्तः सृजतः । विधत्त इति डुधाञ् लट् तस् खरि चेति धस्यतः दधस्तथोश्चेति अभ्यासस्य धः । कालश्च समये वन इति विश्वः । या विश्वं व्याप्य जगदाक्रम्य स्थिता विश्रान्ता । विश्वशब्दः सर्वपर्यायः संसारवाची च । कीदृशी ? श्रुतेः कर्णस्य विषयो गोचरो गुणः शब्दो यस्याः । तादृशं विशेषणपदं दिक्कालात्मवारणाय । श्रुतिः श्रवणवेदयोरिति धरणिः । यां तनुमित्याहुः अर्थात् पुराविदो वदन्ति । इति किम् ? सर्वबीजप्रकृतिः सर्वेषां बीजानां व्रीह्यादीनां प्रकृतिर्निदानमित्यर्थः । सा पृथिवी । प्रकृतिर्निदानमन्त्रेष्विति नानार्थः । यया च प्राणिनो मानुषादयः प्राणवन्तः सा पवनः । प्राणोपान इत्यमरः । तनुभिः कीदृशीभिः ? प्रत्यक्षाभिः

योग्ययोगिज्ञानग्राह्याभिरित्यर्थः। ईशः कीदृशः? प्रसन्नः संतुष्टः। प्रसन्नो मुदितेऽक्लिष्ट इति धरणिः। तथाहि रुद्रसृष्टौ विष्णुपुराणे—

जलं सूर्यो मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः॥

केचिन्नान्दीश्लोकेन सूचनामाहुः। तथाहि—या शकुन्तला स्रष्टुराद्या सृष्टिः संभावनार्जनपरेण हृदयनिहितनिखिलजगतीरूपपरंपरेण प्रजापतिना निजवैभवविभावनयादृष्टचरसौन्दर्यशालिनी यत्नतः किलासावाद्यतः सृष्टा। अतः सकलभुवनालङ्करणायमाण-तदपूर्वरूपसंपदालोकनाश्चर्यतरलतरमानस ईशो दुष्मन्तस्तां परिणेष्यति।

यद्वा स्रष्टुर्विश्वामित्रस्य आद्या मुख्या सृष्टिः। पुरा प्रजापतिस्पर्धया विश्वामित्रोऽपरां सृष्टिं कर्तुमुद्यत इत्यागमः। इयं तु तत्प्रसूतिरिति स्वयमेवादिपर्वणि शकुन्तलैवाह—

दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत्।
सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः॥

ततः सा विधिहुतं विधिलिखितमिति विवाहादिखेदं वहति वक्ष्यति। ततश्च या होत्री विश्लेषे सति देवतापूजनादि करिष्यति। यदाह भरतः—

देवतापूजनं कुर्यात् दद्याद् बलिभुजो बलिम्।
लिखेत् कान्तप्रतिकृतिं पाठयेच्छुकसारिकाम्॥
गणयेच्चावधिदिनं गीतं गायेत्तदङ्कितम्।
एवंविधविनोदेन नयेत् कालं वियोगिनीति॥

ये द्वे प्रियंवदानुसूये कालं विधत्तः जलवितरणात् वाटिकाविटपिषु कालं वर्षां विधास्यत इत्यर्थः। कालः प्रावृषि मेचक इति। यद्वा। ये द्वे प्रियंवदानुसूये कालं विधत्तः विरहानललहरीसंतप्तायाः शकुन्तलायाः जीवातवेऽवष्टम्भवाक्येन समयातिदैर्घ्यं विधास्यत इत्यर्थः। सूचनापक्षे वर्तमानसामीप्ये लट्। या शकुन्तला विश्वं जगद् व्याप्याक्रम्य गुणेन भ्रमणेन वेत्यर्थः स्थितावस्थिता। कीदृशी श्रुतिविषयगुणा वेदविदितचरित्रेत्यर्थः। एतावतैतत्संकीर्तनमपि विपुलपुण्योपचायकमिति दर्शितम्। विश्वभ्रमणेनाकाशयानेनाप्सरसस्तां हृत्वाऽन्तरिक्ष एव स्थापयिष्यन्तीति सूचितम्। यद्वा श्रुतिविषयगुणा श्रवण-

विषयगानगुणा अतः सकलस्त्रीमध्येऽस्याः सकलसङ्गीतकलाकलापनैपुण्यं ध्वनितम्। यद्वा या शकुन्तला विश्वं व्याप्य स्थिता विरहवेदनाविदूनहृदयस्य दुष्मन्तस्य सर्वत्र तन्मयत्वेनावलोकतात्। यथाह संन्यासिकवीश्वरः—

संगमविरहवितर्के वरमिह विरहो न सङ्गमस्तस्याः।
सङ्गे सैव यदेका त्रिभुवनमपि तन्मयं विरहे॥

यां शकुन्तलामित्याहुः पुराविद इति किं सर्वबीजप्रकृतिः सर्वेषां लोकानां बीजं कारणं परिपालनकर्तृत्वात् भरतः, स च दुष्मन्तस्य चक्रवर्ती पुत्रो बभूव। तस्य प्रकृतिः कारणं शकुन्तलैव। होत्री हवनीयोट्टङ्कनेन कण्वसूचनमिति।

नान्दीरूपो गेयनामायमलङ्कारः। यदाह भोजः—

श्रव्यं तत्काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते।
श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधम्॥
आशीर्नान्दी नमस्कारो वस्तुनिर्देश इत्यपि।
आक्षिप्तिका ध्रुवा चेति गेयो ध्येयं भविष्यतीति॥

बिन्दुमनीयं नान्दी। तल्लक्षणम्—

तैलबिन्दुर्यथा तोयं स्वशक्त्या व्याप्य तिष्ठति।
तथा बिन्दुः कथाङ्गानि संदर्श्य मुखतां व्रजेत॥१॥

नान्द्यन्त इति।

देवद्विजनृपादीनामाशीर्वादपरायणा।
नन्दन्त्यस्यां सुरा यस्मात्तेन नान्दी प्रकीर्तिता॥

सूत्रधार-लक्षणं भरते—

नाटकीयकथासूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स कथ्यते॥

ननु सूत्रधारपठनीया नान्दी। सूत्रधारस्य च पाठावसरः प्रवेशानन्तरम्। तत्किमुच्यते नान्द्यन्ते सूत्रधार इति? उच्यते। सूत्रधारपदेनात्र स्थापकोऽभिमतः सूत्रधारसमानाकारत्वात्। उपचारेण सूत्रधार उच्यते। यदाह भरतः—

रङ्गपूजां विधायादौ सूत्रधारे विनिर्गते।
स्थापकः प्रविशेत् पश्चात् सूत्रधारगुणाकृतिः॥

शा त क र्णि स्तु—

सूत्रधारगुणाकारः स्थापकः प्रविशेत्ततः।
उपचारेण सोऽप्यत्र सूत्रधारोऽभिधीयते ॥

धा तु व स्तु (?) नान्दीमङ्गलपाठस्तदन्ते पठनीयं नान्दीपद्यं सूत्रधारः प्रविश्याग्रे वक्ष्यमाणं पठतीति व्याचक्षते। "सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रित" इत्यनुगमात्।

ना न्दी ल क्ष णं च

नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलंकृता।
तां षोड़शापदामेके केचिदाहुश्चतुष्पदाम् ॥

वा म दे वो ऽ प्या ह—

सुप्तिङन्तं पदं तूर्यः श्लोकांशश्चेति पक्षयोः।
न मुनेः स्वरसः किं तु गतानुगतिकादरः ॥

अतः सकलदुरितमारणक्षमा चतुष्पदेयं नान्दी।

केचित्तु यद्यपि पद्यपदापेक्षया सुप्तिङन्तपदापेक्षया च द्वादशपदाष्टपदा वा नान्दी, तत्र चोभयथापि तल्लक्षणलाघवं तथाप्यत्र परमेश्वरस्याष्टमूर्तिसंभेदेन प्राधान्यादष्टौ वाक्यार्था इति। तत्प्रतिपादकान्यष्टावेव वाक्यानि तान्येव च पदानि। य दा ह—

कर्मकर्तृक्रियायुक्तो वाक्यार्थप्रतिपादकः।
सुप्तिङन्तसमूहस्तु वाक्यं पदमिति स्मृतिः ॥

अष्टपदैवेयं नान्दीति समादधुः।

त्रिंशत्पदामाह र ङ्ग शे ख रे।

पञ्चत्रिंशत्पदा नान्दी महाभूतान्विता शुभा।
स्यान्नायकस्य च कवेर्यदि शम्भुविभूषिता ॥
देवतादेर्नमस्कार-मङ्गलारम्भ..........
नाट्यादौ शस्यते यस्तु नान्दी सा कथिता बुधैः ॥

इति वाक्यस्वरसात् सूत्रधार एव नान्दीति कश्चित्। नैवं बहुप्रामाणिकास्वीकृतत्वात्।

ननु—

प्रशस्तपदविन्यासा चन्द्रसंकीर्तनान्विता ।

आशीर्वादपरा नान्दी योज्येयं मङ्गलान्विता ॥

इति स्वरसात् नान्दी चन्द्राभिधायकपदालिङ्गिता कार्या । तर्हि कथमस्य नान्दीत्वं तद्वाचकपदानालिङ्गनात् । मैवं तज्ज्ञापकपदत्वस्यैव तन्त्रत्वात् नत्वभिधायकस्येति । ज्ञापकता च ये द्वे कालं विधत्त इति पदेनोपपद्यते । अत्रेन्दुपदस्य प्रायिकत्वनियमः । तथा ह—

नान्दी पद्मपदाङ्कापि कापि चन्द्रपदाङ्किता ।

कार्या स्वस्त्ययनार्थाय रङ्गविघ्नोपशान्तये ॥

आशीर्वादपरत्वमस्या अवत्वित्यनेनैव दर्शितमिति ॥ १ ॥

—— ❀ ——

अलमिति । अलंशब्दस्य तृतीयान्तपदसहायेनैव निष्फलाभिधायकत्वम् । यदाहुः निष्फलपर्याये पाञ्चजन्ये हरिमिश्राः । "भवति हि तृतीयान्तेन समन्वितमलमिति" । आनन्त्यात् सकलपूर्वरङ्गस्य निर्वाहयितुमशक्यत्वान्नान्दीपठनेनैवोपपत्तेः । आवश्यकत्वात् । तथा चोक्तम्—

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।

तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥

पूर्वरङ्गश्चात्र प्रत्याहरण-मार्जन-श्रवण-जर्जरपूजादयः ।

नेपथ्येति । "रङ्गाद् बहिस्तु नेपथ्य" मिति भरतः । नेपथ्याभिमुखं वीक्ष्य वदतीत्यर्थः । आर्ये यदीति । "विप्रामात्याग्रजा आर्या नटीसूत्रकृतौ मिथ" इति भरतानुशासनात् एते परस्परमार्या इत्यन्वयः ।

अवसितमिति । हे आर्ये यदि प्रसाधनक्रिया निष्पन्ना तदिहागम्यतां रङ्गभूमिप्रवेशः क्रियतामित्यर्थः । "आकल्पवेशौ नेपथ्य"मित्यमरः । अध्यवसितमिति पाठे नेपथ्येन प्रसाधनेन विधीयते इति नेपथ्यविधानं नृत्यं तत्र कृतप्रसाधनया भवत्या यद्यध्यवसितं अभ्यस्तः अध्यवसायः कृतोऽस्ति तदा नृत्यायात्रागम्यतामित्यर्थः ।

प्रविश्येति । रङ्गभूमिं प्रविश्य नटी भाषत इत्यर्थः । वचनशरीरमाह । हे आर्य हे मान्य इयमस्मि इह तिष्ठामीत्यर्थः । झीति मिमोमानामधो ह्रस्वेति

मेरधो हकारः । अस्तेर्लोप इति धातुलोपः । आज्ञापयतु आर्यः को नियोगः अनुष्ठीयतामिति । भवतो मया का आज्ञा कर्तव्या तदुच्यतामित्यर्थः ।

रसभावेति ।

> शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
> बीभत्सोऽद्भुत इत्येवमष्टौ नाट्यरसाः स्मृताः ॥
> स्थायिनः सात्त्विकाश्चैव तथान्ये व्यभिचारिणः ।
> नानारसाश्रया भावा पञ्चाशत्परिकीर्तिताः ॥

तेषां विशेषो वैलक्षण्यं तत्र दीक्षा उपदेशः तत्र गुरुरुपदेशकः तथाभूतस्य। "श्रीर्वेशरचनाशोभाभारतीशरलद्रुषु । लक्ष्यातिबहुसंपत्तौ वेशोपकरणे मता" इति विश्वः । श्रीः कान्तिर्वाणी लक्ष्मीर्वा तयोपलक्षितस्य । यद्वा श्रीशब्दः प्रकर्षार्थः पूज्ये । प्रयुज्यत इति प्रयोगः । एतावता विक्रमादित्यस्य ऐश्वर्यसौन्दर्य-चातुर्ययशांसि निगदितानि । तथा च नृत्यादिपाटवे सति तस्यानाकुञ्चनादान-शक्तिर्दर्शिता । कीदृशस्य । साहसमेवाङ्कं चिह्नं यस्य साहसक्रियया ख्यातस्य । एतावता नृत्यप्रवृत्तयोरावयोस्तालमानादिस्खलने सति झटिति शास्तिक्रिया-कारित्वं दर्शितम् । सभापतिलक्षणं च—

> शृङ्गारी शासकः श्रीमान् पारितोषिकदानवित् ।
> वाग्मी निर्मत्सरः प्राज्ञः सकलासु कलासु चेति ॥

तस्येयमभिरूपभूयिष्ठा परिषद् आर्यविदग्धमिश्रादिशृङ्गारपुरुषमाहात्म्य-प्रचुरा स्वभावतः श्रेष्ठा वा सभा । तत्तस्यां परिषदि अस्माभिर्नाटकेनोपस्थातव्यं नाटकेन सकलशृङ्गारिगोष्ठीहृदयमनुरञ्जनीयमिति भावः ।

नाटकलक्षणं च—

> देवानां क्षत्रियाणां च पूर्ववृत्तानुकीर्तनम् ।
> शरीरं यस्य तन्नाम महाकाय च नाटकम् ॥

तदुभयमपि द्विविधम् ।

> वृत्तं हि द्विविधं ख्यातं यथाभूतं च संस्कृतम् ।
> यथाभूतं च सत्यार्थं संस्कृतं परिवर्णितम् ॥

इदमस्तु सत्यार्थमिति । अन्यच्च—

देवतानां मनुष्याणां राज्ञां लोकमहात्मनाम् ।
पूर्ववृत्तानुचरितं नाटकं नाम तद् भवेत् ॥
पञ्च पञ्च चतुःषष्टिश्चतुःपञ्चैकविंशतिः ।
षड्विंशं नवतिर्यत्र तदाहुर्नाटकं बुधाः ॥
मुखं प्रतिमुखं चैव गर्भावमर्श एव च ।
तथा निर्वहणं चेति नाटके पञ्च संधयः ॥
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥

अर्थस्य नाटकस्य प्रकृतयः स्वभावाः । तत्र सन्ध्यङ्गानि चतुःषष्टिः चतुर्वृत्तिः अङ्कावतारादि पञ्चकं भावानुभावाः चतुर्वृत्तिः उपात्तं प्रतिसंस्कृतं चेति वृत्तद्वयं एतेनैकविंशतिः । षड्त्रिंशल्लक्षणानि त्रयस्त्रिंशदलङ्काराः त्रयोदश वीथ्यङ्गानि दश भाणकाङ्गानि सप्तविंशतिः शिल्पकाङ्गं सप्त भागकाङ्गानी-त्याद्यन्वितम । पञ्चादिदशपर्यन्ताङ्कं नाटकं भवति । एतच्च विस्तरेण रत्नकोषे कथितम् ।

तत् किमन्यानि पूर्वकृतनाटकानि तिरस्कृत्यात्र प्रवृत्तोऽसीत्याह । कीदृशेन ? श्रीकालिदासग्रथितवस्तुना । पूज्यत्वेन श्रीशब्दपदप्रयोगः । पूज्यता चास्य विविधवैदग्ध्यशृङ्गारादिविभावनविपुलनैपुण्याश्रयतया । तथा च कविशृङ्गा-रित्वेनास्य नाटकस्य शृङ्गाररसशालित्वमुक्तम् । युक्तं चैतत्—

शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव विपरीतश्चेत् नीरसं सर्वमेव तत् ॥

इति वचनात् । तादृशेन श्रीकालिदासेन ग्रथितं गुम्फितं शकुन्तलादुष्मन्त-संनद्धरूपं वस्तु यत्र तादृशेन । एतावता सकलजनप्रवृत्त्यौपयिकं रूपमुक्तम् । कीदृशेन ? अभिज्ञायते स्मर्यतेऽनेनेति अभिज्ञानं चिह्नं अत्राङ्गुरीयकमिति यावत् । तद्युक्ता शकुन्तला यत्र तादृशेन । नायकेन किल निजनगरगमनसमये करादाकृष्य स्वनामाङ्कितं निजाङ्गुरीयकं अस्यै दत्तमित्यभिज्ञानशकुन्तलं नाट-कस्य नामेति ।

नाटकं चेदं वस्तुनायिकासंज्ञं यदाह–

वस्तुना वस्तुनेतृभ्यां नेत्रा नायिकयापि वा।
द्वाभ्यां वा वस्तुनारीभ्यां कार्या संज्ञा तु रूपके॥

एतावता नृत्यदर्शने तदुभयविविधाश्रुतवरयशोवैदग्ध्यश्रवणजातविपुल-पुण्योपचयानां सतां सदास्था ध्वनिता। पुनः कीदृशेन? नूतनेन एतद-प्युत्कण्ठातिशयाय। तथा च भारविः—"यथोत्तरेच्छा हि गुणेषु कामिन" इति। तदिति नृत्योत्कर्षप्रसादावसाद(?) भवनयोग्यता इत्यर्थः।

तत्तस्मात् पात्रं पात्रं प्रति यत्नः क्रियताम्। यथास्मिन् द्रष्टरि साहसाङ्के नृत्येषु तालमानादिस्खलनं क्वापि न भवति तथावधानाय सकलपात्रेषु प्रयत्नः कर्तुमुच्यतामित्यर्थः। प्रतिपात्रमिति अव्ययं विभक्तीत्यादिना वीप्सायां समासः।

नटी—सुविहितप्रयोगतया आर्यस्य न कोऽपि परिहासयिष्यति। अज्जस्स इति कर्मणि षष्ठी मान्यस्येत्यर्थः। सुशिक्षितनर्त्तकतया मान्यं कोऽपि नोप-हसिष्यति। जानन्त्येव सर्वे सभासदो भवतः सङ्गीतकविविधवैदग्ध्यमित्य-भिप्रायः। यद्वा प्रयुज्यत इति प्रयोगो नाटकं सुष्ठु अकठिनोक्ति यथा भवति तथा विहितः कृतः। प्रयोगो नाटकं कालिदासकृतत्वेनातिप्रसन्नप्रयोग इति नृत्यप्रवृत्तस्य भवतो न कोऽप्युपहासको भविष्यतीत्यर्थः। यदाह

नाटकं कैर्गुणैः शस्तं ये हरन्ति सतां मनः।
क्व तेषां दृष्टमुत्थानं कालिदासकवेः कृतौ॥ इति

प्रशंसाजातप्रमोदात् सुसंगीतकप्रावीण्यातिशयाच्च स्मितमिति। यथा

ईषत्प्रफुल्लितैरोष्ठैः कटाक्षैः सौष्ठवान्वितैः।
अदृष्टदन्तकुसुमैरुत्तमानां स्मितं भवेत्॥

कथयामीति। भद्रमेव वदसीति। तथापि भूतार्थं सत्यं ते कथयामि। किं तदित्याकाङ्क्षायामाह आपरितोषादिति। विदुषां विशिष्टनृत्यादि कलान्तरविशेषविदां संतोषपर्यन्तं प्रयोगविज्ञानं नाट्यपाटवं समीचीनं न मन्ये। यावन्नाट्याशेषकलाविदः सदसि नर्त्तककलाभ्यासपाटवानन्दितनिखिलनायक-मनसं ताण्डवकर्त्तारं भद्रनाटककर्तृत्वेन नाभिनन्दयन्ति तावत्ताण्डवे पाटवं नाङ्गीकरोमीत्यर्थः। परकृतोपहासेऽपि सतां भयं यथा उत्तरचरिते "सर्वदा

व्यवहर्त्तव्ये कुतो ग्रवचनीयते"त्याह । बलवदिति क्रियाविशेषणं सातिशयं यथा स्यादित्यर्थः । अपिरत्र भिन्नक्रमः । शिक्षितानामप्यभ्यस्तानां नटानामिति यावत् । कुत आत्मनि स्वविषये चेतः अविश्वस्तं भवतीत्यर्थः अभ्यासायासाधीनां (आत्म) विद्यां यावद् विद्याविदो न स्तुवन्ति तावदात्मनोऽपीदमित्थमेवेति प्रत्ययो नैव भवतीति स्फुटार्थः । यदाह सुबन्धुः "गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति" । अर्थान्तरन्यासोऽयम । यथाह दण्डी–

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन ।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति ॥ २ ॥

नटी वदति एवं णेदं इदमित्थमेवेत्यर्थः । नृत्यकालातिक्रमो भवतीत्याकाङ्क्षायामाह अव्यवधानेन कर्त्तव्यमाज्ञापयत्वार्यः ।

सूत्रधारो वदतीत्यर्थः । आर्ये गीतादनन्तरकरणीयं किमन्यद् वर्त्तते ? अस्मिन्नवसरे गीतमेव गातुमर्हसीत्यर्थः । यथाह—"व्यञ्जकः स्वरसन्दर्भो गीतमित्यभिधीयते" । कीदृशात् गीतादस्याः परिषदः श्रुतिप्रसादहेतोः कर्णानन्दविधायिन इत्यर्थः । यदाह वादरायणः "गीतमेव हि सकलप्रयोगशोभावहमिति" । तथा हि—

विना गीतं अपूर्णो हि प्रयोगो रसकृद् भवेत् ।
नहि शीलपरित्यक्तो गुणवानपि शोभते ॥

भरतोऽपि "को यं (?) प्राणाः प्रयोगस्य सर्वथा गेयमुच्यते ।" गेयसाध्यं धर्मार्थकाममोक्षचतुष्टयम् । "श्रुतिः श्रवणवेदयो" रिति धरणिः । "स्यात्परिषद् सभासद" इत्यमरः ।

सकलसमयवर्णनाधिकारितामात्मनः कटाक्षयन्त्याह नटी कतरमिति । आदिश्यतां समयः कालः यो मया गीतेन वर्णनीय इत्यर्थः । अथ कतरं समयं गास्यामि (गाययिष्यामि) ।

सूत्रधार इति । ननु शब्दोऽत्रानुज्ञायाम् । "ननु प्रश्नेऽप्यनुनये प्रश्नानुज्ञावधारणे" इति मेदिनी । अनतिचिरोद्भूतं विविधगुणाश्रयतया उपभोगयोग्यं ग्रीष्मसमयं समाश्रित्य गीयताम् । वर्णनीयग्रीष्मसमयगुणाय नाट्यप्रसङ्गायोद्यतः स्वयमेव तत्समयगानप्रकारमुपदेशयति । सूत्रधारः स म्प्र ति ही ति । हिरत्रोपदेशे । "हि पादपूरणे हेतौ प्रश्ने हेतूपदेशयो" रिति मेदिनी । इदानीं

परिणामे अवसाने दिवसा रमणीया दृश्या भवन्तीत्यर्थः। सुभगः सुन्दरः सुखदः झटिति परिश्रमाद्यपनोदकत्वात् पानीयक्रमो येषु। पुनः कीदृशाः पाटलकुसुमस्य सम्पर्केण सम्बन्धेन सुगन्धिर्वनवातो येषु। पुनः कीदृशाः प्रकृष्टा या च्छायाः प्रच्छायं। विभाषा सेनेत्यादिना क्लीवभावः। तत्र प्रच्छाये सुलभा निद्रा येषु। ग्रीष्मे चातरुणे किरणे दिवसपरिणामे भ्रमणे जनितपरिश्रमाः कृतजलावगाहनाः सेवितविविधकुसुमसुरभिपवनाः तरुतल-निषण्णाः सुखमासादयन्तीति कालहेतुः। जातिरयमलंकारः। यदाह भोजः—

नानारम्याः प्रजायन्ते यानि रूपाणि वस्तुनः।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥ ३ ॥

नटी गायति। ऊहत पश्यत।

क्षणचुम्बितानि भ्रमरैरूहत सुकुमारकेशरशिखानि।
अवतंसयन्ति सदयं शिरीषकुसुमानि प्रमदाः ॥

तरुण्यः शिरीषकुसुमानि कर्णाभरणं विदधति सदयं यथा स्यात्। अतिपेलवत्वात् भग्नताशङ्कया दयेति। कीदृशानि सुकुमारा केशराणां किञ्ज-ल्कानां शिखा यत्र तादृशानि। पुनः कीदृशानि भृङ्गैर्मुहूर्तमालिङ्गितानीत्यर्थः। "षट्पदभ्रमरालय" इत्यमरः ॥ ४ ॥

एतद्गीतात्मनैव सूत्रधारः स्तौति। मान्ये भद्रे गीतं त्वयेत्यर्थः। यतस्त्वद्-गीतादसौ रङ्गो द्रष्टृलोकः सर्वतश्चतुर्दिशमिति यावत् आलिखित इव भित्ति-निर्मितचित्रमिव शोभते। रङ्गशब्देन मञ्चाः क्रोशन्तीतिवद् रङ्गस्थद्रष्टृ-लोकोऽभिधीयते। तेन रागापहृतेत्यादि संगच्छते। कीदृशो रङ्गः? स्वरा-कृष्टमनोव्यापारः भवद्गीतेनैव ते हृतहृदयाः सुतरां मम प्रयोगविभावनया। प्रयोगं नर्त्तनप्रयोगम्। नटी प्रथममेव आर्येण आदिष्टं अभिज्ञानशकुन्तलम-पूर्वनाटकमिति। अपूर्वत्वमस्य नाटकगुणाश्रयतया। यदाहुः—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः।
नासौ लयो न तत्कर्म नाटके यन्न दृश्यत इति ॥

यद्वा वेदार्थासञ्जनादपूर्वजनकतया अपूर्वत्वं नाट्यस्य। अत्रान्नं वै प्राणिनः प्राणा इतिवत् कार्यकारणयोरभेदः। वेदार्थासञ्जनत्वं च यदाहुः—

इहानुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्यवेदं तु पञ्चमम् ॥
ऋग्भ्यः पाठ्यमभूद् गानं सामभ्यः प्रतिपद्यते ।
यजुर्भ्योऽभिनया जाता लया जातास्त्वथर्वणः ॥

अन्यः—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्ति प्रीतिं च साधुकाव्यनिषेवणम् ॥

भरतस्तु—

यो यस्य दयितो भावः स तं नाट्ये निरीक्षते ।
अतः सर्वमनोग्राहि नाट्यं कस्य न वल्लभम् ॥

प्रजापतिश्च—

धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकृत् ।
अर्थमेषध्वमृषयस्तस्यात्मानं तु नाटकम् ॥
अपि शक्येत विद्वद्भिर्मुक्तिरस्यामकौशलात् ।
ननु नाटकविद्येयं सर्वलोकानुरञ्जिनी ॥

काव्यमीमांसाकारोऽप्याह, "धर्मार्थकाममोक्षहेतवे काव्याय नमः" ।

सामवेदादिदं गीतं संजग्राह पितामहः ।
गीतेन तृप्यते देवः सर्वज्ञः पार्वतीपतिः ॥
अपि ब्रह्मपरानन्दादिदमेकं परायणम् ।
जहार नारदादीनां चेतांसि कथमन्यथा ॥

क्वचिदभिरूपनाटकमिति पाठः । तत्राप्यभिधायकयोग्यताप्यस्योक्तरूपेणैवेति । सूत्रधारो वदतीत्यन्वयः । मान्ये । साधु बोधितोऽस्मि अस्मिन् क्षणे खलु यतो मया विस्मृतमेतत् । विस्मरणबीजमाह । तव गीतरागेण हठेन हृतोऽस्मि अस्वाधीनहृदयः कृतोऽस्मि । कीदृशेन मनोहरेण । आत्मविस्मरणव्याजेन वर्णनीयवस्तुस्वरूपसूचनीयमेवोपमयाह एष इति ।

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥ इति दशरूपके ॥

नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यत इति तत्रैव । एष दुष्मन्तो

नाम राजेव। यथा दुष्मन्तः अतिरंहसा अतिवेगवता सारङ्गेण कृष्णसारेण प्रसभं सहसैव हृतः। "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गज" इति विश्वः। "रंहस्तरसी तु रयः स्यद" इत्यमरः।" "रागानुरक्तो मात्सर्य" इति विश्वः ॥ ५ ॥

अवलगितनामायं नाट्यालंकारः। तल्लक्षणं च—

यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते।
तत्रावलगितं नाम विज्ञेयं कविभिर्यथा ॥ इति

नाट्यवस्तुसूचनं कृत्वा नटीसूत्रधारौ रङ्गभूमेर्निष्क्रान्तावन्तर्हितावित्यर्थः। यदाह–

बीजार्थयुक्तिमुक्तं च कृत्वा कार्यं यथारसम्।
निष्क्रमं ततः कुर्वीत सर्वेषां रङ्गवर्त्तिनाम् ॥

प्रस्तावना जातेत्यर्थः। प्रस्तावयतीति प्रस्तावना। लक्षणं च—

नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
आमुखं नाम तज्ज्ञेयं बुधैः प्रस्तावनापि सेति भरते ॥



ततः नटीसूत्रधारनिष्क्रमणानन्तरं मृगमनुगच्छन् रथारूढः रथे उपविष्ट इत्यर्थः। उपविष्टेनैव राज्ञा रङ्गभूमिप्रवेशः कर्त्तव्यः नृपयोगिनोरेव उपविष्टत्वेन प्रावेशिकीप्रतिपादनात्। राजा सूतश्च प्रविशति। प्रवेशलक्षणं—

ध्रुवायां संप्रयुक्तायां पटे चैवावकर्षिते।
कार्यः प्रवेशः पात्राणां नानास्वरससंभवः ॥

कीदृशो धनुर्धरः।

"धीरोन्नता धीरललिता धीरोदात्तास्तथैव च।
ज्ञेया धीरप्रशान्ताश्च चत्वार इह नायकाः ॥
देवा धीरोन्नता धीरललिताश्च नृपादयः।"

दुष्मन्तो धीरललितः गुणाश्चास्य ललितौदार्यतेजांसीति। "सूतः स्यात् सारथौ तक्ष्णी"ति मेदिनी।

सूतो राजानं मृगं चावलोक्य वदतीत्यन्वयः। आयुष्मन्निति संबोधनं प्रवेशे राज्ञः समुचितमेव मद्वचस्यवधेहि इत्यर्थः।

कृष्णसारे त्वयि च अधिज्यकार्मुके चक्षुर्दधत् प्रत्यक्षतः रुद्रमिव पश्यामि। पुरा किल यज्ञे मृगरूपेण पिनाकिनो भिया प्रत्युचिताध्वरः (?) पलायितः पिनाकी च तं हन्तुमनुसृत इति शिवपुराणवार्त्ता। तत्कालकृतसंरम्भं रुद्रमिव त्वां भावयामीत्यर्थः। कीदृशं मृगमनुसर्त्तुं शीलं यस्य तादृशं। ददिति डुदाञ् लटः शतृ नाभ्यस्ताच्छतुरिति नुम्निषेधः। "साक्षात् प्रत्यक्षतुल्ययो"रिति विश्वः। पिनाकोऽजगवं धनु रित्य म रः। चक्षुरिति जात्यभिप्रायेण॥ ६॥

राजा वदतीत्यन्वयः। सूत सूत। द्विरुक्तिरत्र विषादे रभसे वा। यदाह "विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे। प्रसादनेऽनुकम्पायां द्वित्रिरुक्तं न दुष्यति" अमुना सारङ्गेण वयं दूरमाकृष्टा आनीताः। कथमिदमवगम्यते तत्राह। इदानीं संप्रति सोऽयं परिदृश्यमानः कृष्णसार उर्व्यां भुवि स्तोकमल्पं प्रयाति वियति गगने उदग्रप्लुतत्वात् अतिशयोत्फालकारित्वात् अधिकतरं गच्छति। कीदृशः ? पश्चाद्गच्छति रथे कन्धराभङ्गसुन्दरं यथा भवत्येवं दत्तदृष्टिः प्रेरितनयनः। असत्यमशुभमिति ग्रन्थमुखे ग्रीवाभङ्गपदमभिरामपदसमभिव्याहाराद्दोषतां न यातीत्यर्थः॥ कीदृशः महता पश्चाद्देहार्धभागेन पूर्वकायमग्रिमशरीरभागं प्रविष्टो मिलितः कुतः बाणपातत्रासात्। कीदृशः अर्धोपभुक्तैः शष्पैर्नवतृणैर्व्याप्तवर्त्मा। शष्पैः कीदृशैः आयासविस्तीर्णास्यपतितैः। क्वचित् विवृतमुखभ्रंशिभिरितिपाठे श्रमव्यावृतवदनच्युतैरित्यर्थः। स्वभावोक्तिरलंकारः। यदाह दण्डी—

नानावस्थं पदार्थानां रूपं साक्षात् विवृण्वती।
स्वभावोक्तिश्च जातिश्चेति।

अत्याहितोत्फालावसरे मृगस्यायमेव स्वभावः। पूर्वकायमिति पूर्वापराधरोत्तरमित्यादिना समासः। पश्चार्धेति अर्धोत्तरपदस्य दिक्पूर्वपदस्य च

पश्चभावो वक्तव्य इत्यनेन पश्चभावः। स्तोकमल्पेऽपि दृश्यत इति विश्वः। शताङ्गः स्यन्दनो रथः। शष्पं बालतृणं घास इत्यमरः। लिह् आस्वादने क्तः। विस्मयोऽद्भुतमाश्चर्यमित्यमरः ॥ ७ ॥

कथमिति। "कथं हर्षे च गर्हायां प्रकारार्थे च संभ्रमे। प्रश्ने संभावनायां चेति मेदिनी। अनुपतत एव पश्चादागच्छत एव मुहूर्त्ताभ्यन्तर एवायं मृगो दूरावलोकनीयो जात इत्यर्थः।

सूतो वदति हे चिरजीविन् उद्घातिनो निम्नोन्नता भूमिरियमिति रथरश्मेः प्रग्रहस्य यत्संयमनं आकृष्य धारणं ततो रथवेगो मन्दीभूतः तेन हेतुना मृगः विप्रकृष्टान्तरः दूरान्तरालः संवृत्तः। सम्प्रति हि शब्दे ऽवष्टम्भे। इदानीं निम्नोन्नतरहितभूभागस्तत्र स्थितः ते तव दुरासदो दुर्लभो न भविष्यति अचिरेणैव भवद्विशिखगोचरः संपत्स्यत इति। उद्घातस्तु पुमान् पादस्खलने समुपक्रम इति मेदिनी। तेन हि स्वीकारे हेतौ वा। प्रग्रहाः परित्यज्य दीयन्तामित्यर्थः। अभीपुः प्रग्रहे भासीति रत्नकोषः।

सूतो वक्ति यथाज्ञापयति आयुष्मान्। यदाह भरतः—

रथी सूते न चायुष्मान् पूज्ये शिष्यात्मजानुजाः।
रत्न (?) तातेऽतिपूज्येऽपि सुगृहीताभिधश्च तैः॥

तथा करोमीति शेषः। पश्य पश्येति रथवेगाद् प्रमोदाधिक्याद् द्विरुक्तिः। तव अश्वा वर्त्मनि पथि धावन्ति तरन्ति नु प्लवन्ते वा। नु शब्दोऽत्र वितर्के। केषु सत्सु? रश्मिषु त्यक्तेषु सत्सु। वाजिनः कीदृशाः? निरायतो दीर्घः पूर्वकायोऽग्रिमशरीरभागो येषां तादृशाः। विस्तारभाजां स्वेषामपि निशितनिजखुरोद्भूतानामपीत्यर्थः रजसां रेणूनामलङ्घ्याः अनतिक्रमणीयाः। पुनः कीदृशाः? कम्परहिता चामरस्य शिखा अग्रं येषां तादृशाः। च्युतस्त्यक्तः कर्णभङ्गो येषां तादृशाः ऋजुश्रवणा इत्यर्थः। अयमतिशयोक्तिरलंकारः यदाह भोजः—

विवक्षा या विशेषस्य लोकसीमानुवर्त्तिनी।
असावतिशयोक्तिः स्यादलंकारोत्तमा च सा॥

तरन्तीति तॄ प्लवनतरणयोर्गुणः। वाजिवाहार्व्व इत्यमरः। किरणप्रग्रहौ रश्मी इत्यमरः ॥ ८ ॥

कथंशब्दः किंशब्दार्थः उक्तिविशेषे। किं हरयो वाजिनः। मृगमति-क्रम्य मम तुरंगा अग्रतः किं विद्यन्ते। हरिरश्वविशेषः।

"त्वक्केशबालरोमाणि सुवर्णाभानि यस्य तु।
स हरिर्नामतो वाजी पीतकौशेयसंनिभ" इति।

तथाहीति कृत्वामुमेवार्थमुपपादयति य दा लो क इति। क्षणमपि मुहूर्त्तमपि किंचिद् वस्तु न मम दूरे न वा पार्श्वे विद्यत इति शेषः। कुतः रथस्य रयो वेगस्तस्मात्। आलोके दर्शने सति यद् वस्तु सूक्ष्मं प्रतिभातमित्यर्थः सहसा हठेन तद् वस्तु विशालतां गच्छति। अतित्वरितगतागतेन भवत्ये-वायं क्रमो यन्निकटस्थं दूरस्थमालोक्यते दूरस्थं निकटमिति। अर्धे मध्ये यद् वस्तु विच्छिन्नं द्विधाभूतं तत् कृतसंधानमिव एकीभूतमिव भवति। यद् वस्तु प्रकृत्या स्वभावतः वक्रमनृजु प्रतिभातमित्यर्थः तदपि लोचनयोः समरेखमवक्रमनुभूयत इत्यर्थः। रथरयादिति हेतुः सर्वत्रानुषज्यते। अति-शयोक्तिरलंकारः। विपूर्वछिदिरद्वैधीकरणे क्तः। प्रकृतिर्मन्त्रनिसर्गयोरिति मेदिनी ॥ ९ ॥

रङ्गाद्बहिस्तु नेपथ्यम्। न हन्तव्यो न हन्तव्य इत्यार्तौ द्विरुक्तिः। सूत इति। कुत्रत्यः किं निषेध्य इति (?) स्वरइत्यादिकमाकर्ण्य विभाव्य अवलो-क्येति बाणाभ्यर्णगतः किंस्वरूपोऽयमित्यभिप्रायेण दृष्ट्वा राजानं संबोध्य वदति हे आयुष्मन् तव कृष्णसारस्य च अन्तराले मध्ये तपस्विनौ। विचार्य बाण-प्रहारः कार्य इत्यभिप्रायः। कीदृशस्य अर्थात् तव बाणपातसमवर्त्तिनः सायकपतनतुल्यदेशस्थितस्य। यद्वा बाणपात एव समवर्त्ती यमः झटिति लक्ष्यहन्तृत्वात्। एतावता राज्ञोऽस्त्रविद्योत्तीर्णत्वमुक्तम्। समवर्त्ती परेत-राडित्यमरः।

राजा संवदतीत्यर्थः। "संभ्रमं त्वरामिच्छन्ति भयमुद्वेगमादर"मिति मेदिनी। तेनहीति। हिरत्रासूयायाम्। तेन अभीषवः प्रग्रहाः अर्थाद्रथस्य आगृह्यन्तां रथः स्थिरीक्रियतामिति भावः। स्थापयति स्थिरीकरोति।

त तः प्र वि श ती ति। अत्रात्मशब्दः सजातीयेनापरेण तापसेन सह प्रविशतीत्यर्थः। राज्ञे सकलजगदनवद्यवधूरूपजित्वरश्रियः शकुन्तलायाः संनिहिताश्रमावस्थितिमावेदयितुं तपोवनमृदुहरिणव्यापादननिषेधमिषेण

प्रविशन्नाह कण्वशिष्यो राजन्निति। हस्तमुद्यम्य करमुत्तोल्य वदतीत्यर्थः। अयं भवद्बाणोद्देश्य आश्रममृगः ऋष्याश्रमहरिणोऽतो न हन्तव्यो न हन्तव्यः। द्विरुक्तिरसमञ्जसाधिक्ये वाचनिकार्थमेव वीप्सया श्लोकेनाह न खल्विति। मृदुनि अस्मिन् मृगशरीरे बाणः न खलु न खलु संनिपात्यः सर्वथा न क्षेपणीयः। कुत्र क इव? कुसुमसमूहे वह्निरिव। यथातिपेलवे कुसुमनिचये असमंजसभीरुणा वह्निर्न संनिपात्यते इदमेवोपपादयति क्व बतेति। बत खेदे अतिचपलं क्षुद्रमृगाणां जीवितं प्राणाः क्व तव तीक्ष्णप्रहारा सायकाः क्व। अल्पजीविना मृगशावकेन तवातिमर्मभेदिशरपातः कथं सहिष्यत इत्यर्थः। कीदृशाः पत्त्रनिमित-शराग्रभागः सारो दृढः श्रेष्ठो वा अतिगन्तृत्वात् पुङ्खो येषां तादृशाः। एतावतैतद्विशिखस्य झटिति लक्ष्यभेदित्वं दर्शितम्। हरिणकानामिति अल्पाख्यायां कन्। संनिपूर्वपत्लृगतौ ऋहलोर्ण्यत्। अत्यन्तासंभावनायां क्वद्वयम्। अहोबतानुकम्पायां खेदे संबोधनेऽपि चेति मेदिनी॥१०॥

यतोऽत्यन्तमृदुतरजीवस्य मर्मभेदिनो बाणस्य चोभयोरत्यन्तविरोधस्तस्मात् शीघ्रं सायकं प्रतिसंहर। किंभूतं विहितघटनं धनुषि इत्यर्थः। प्रतिसंहारोपपादकमेवाह वो युष्माकं शस्त्रं भीतरक्षणाय अनागसि निरपराधे न प्रहरणाय। भवतोऽस्त्रमार्तभयनिराकरणपरं न त्वेवंविधे निरागसि मृगशावके प्रहारायेति स्फुटार्थः।

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा॥

प्रतिपूर्वो हृञ्धातुर्लोट्। आशु त्वरितं शीघ्रमिति। शरे खड्गे च सायकः। स्यति अन्तं नयति सायकः सोऽन्तकर्मणि वुण् दन्त्यसः। क्वचित् शायकः शीङ् स्वप्ने शाययति स्वप्नयति वुण्। यथोक्तं तपस्विभाषितानुरूपं करोतीत्यर्थः। धनुषः सायकमधःकरोतीत्यर्थः॥११॥

तापसौ सहर्षं वाङ्मात्रकेणैव राज्ञोऽभिमतक्रियाकारित्वं सानन्दं वदत इत्यर्थः। वचनशरीरमाह सदृशमिति। एतद्रूपार्त्तजनवचःकर्तृत्वं सदृशमेव परंपराक्रमायातमेवेति भावः। किंभूतस्य पुरुवंशजातस्य तथा बुधः सोमाद-

जायत, बुधात् पुरूरवाः, पुरूरवसो भवानिति। यतः परंपरैव ते प्रत्येक-निरुपाधिपरोपकृतिकुतूहलिनीति। ततो झटिति मदभिलाषकरणात् सर्वथा निर्विघ्नेन सार्वभौमं पुत्रं लभस्व। एतावता भरतसूचनम् ॥ ११ ॥

गृहीतं ब्राह्मणवचः। एवं भवत्वित्यर्थः। तापसौ वदतः। आवां समिदा-हरणाय होमौपयिकपलाशादिकाष्ठानयनाय गन्तुमुद्यतौ। एष च पुरोवर्ती कण्वनाम्नो मुनेर्वसतिः स्थानं दृश्यते। कीदृशस्य, मदध्यापकस्य। एतावता आत्मनः शुद्धत्वं दर्शितम्। कुत्र, मालिनी नामधेयायाः सरितस्तीरस्य अनु समीपे। किंभूतं, शकुन्तलया कण्वकुमारिकया साधिदैवतमिव सर्वत्राश्रमे अधिष्ठात्री देवतास्ति अस्मिन्। शकुन्तलैव देवतेत्यर्थः। तत्र गते भवतो न केवलं जगदपूर्वरूपनिर्जितसुरवधूवधूलोचनगोचरा किंतु विविधतद्विहितविपुल-सत्कारपात्रता अपि भविष्यतीत्याह न चेदिति। तेन च यदि अन्यप्रयोजन-प्रत्यूहो न भवतो भवति तदा अर्थात् आश्रमपदं प्रविश्य अर्घविष्टररूपपुरस्कारो गृह्यताम्। न केवलमतिथिसत्कारग्रहणाय भवन्तमभ्यर्थयामि, तत्र गत्वा भवानपि स्वभुजरक्षितभूभागमियत्तया ज्ञास्यतीति आह धर्म्या इति। हे राजन् ज्ञास्यसि इति किं मम बाहुः कियद्भूमण्डलमविकलं महोद्दण्डेन पालयत इत्यर्थः। किं कृत्वा, तपस्विनां धर्म्याः पुण्याहाः यात्रादिक्रियाः प्रतिहतविघ्ना निराकृतदुरिताः सम्यक् प्रकारेणाभितस्तपोवनविहितविविध-पुरस्कारपरंपरं सर्वतो दृष्ट्वेति भावः। कीदृशो भुजः मौर्व्या किणः संघर्षजो व्रणविशेषः स एवाङ्कं चिह्नं यस्य तादृशः। एतावता बहुतरसमरविजयित्वमस्य दर्शितम्। मौर्वी ज्या सिञ्जिनीगुणः। कलङ्काङ्कौ लाञ्छनं चेत्यमरः। किणः-स्यात् मृतशोणितं इति विश्वः ॥ १२ ॥

अथ प्रश्ने। प्रश्नकार्येष्वथो अर्थेति विश्वः। तत्रभवान् मान्यः। कुलपतिः कुलप्रदीपः संनिहितः अव्यवहिताश्रम एव विद्यत इत्यर्थः। तापसौ वदतः सम्प्रति अभ्यागतातिथ्यकरणाय तनयामाज्ञाप्य सोमनामधेयं तीर्थं गतः। अनिन्दनवद्यामिति दुहितुर्विशेषणं तत्रानवद्यामभ्यागतसपर्याविदुषीं यद्वा व्यभिचारादिदोषरहितां वस्तुतस्तु चतुःषष्टिकामकलातरङ्गिणीं अप्सरोपत्य-त्वात्। एतावता दुष्मन्तस्योत्कटतपोवनगमनौपयिकं रूपमुक्तम्। किमर्थं

तत्र गतोस्ति तत्राह तस्या दुहितुरेव दैवं परिणयप्रतिबन्धकदुरदृष्टं अपनेतुम्।

राजा वदति यद्येवं यदेतौ कथयतः कण्वस्य तपोवनावस्थितिः तस्याश्च सकलगुणाश्रयत्वं तद्यदि स्वरूपं तदा तां कन्यां द्रक्ष्यामि तत्र भगवदसंनिधाना-न्मदनदत्तहेतुनिर्भरतत्कृताध्यक्षकटाक्षविक्षेपमविकलमनुभविष्यामीति भावः। कथमिह परोक्षविहितभक्तिस्तपोधनगोचरो भविष्यति तत्राह सैवेति। सैव मुनिकन्या अवगतकण्वविषयकमत्प्रणतिपरंपरा सती महर्षये मां निवेद-यिष्यति। तापसौ वदतः। एवं शब्दोऽङ्गीकारे। "शक्तावेवं प्रकारे स्यादङ्गी-कारेऽवधारणे" इति मेदिनी। यथा भवते रोचते तथा क्रियतामित्यभिप्रायः। साधयावस्तावदिति। 'यावत्तावत् परिच्छेद' इति शाश्वतः। गच्छाव इत्यर्थः। प्रस्तुतं समिदानयनरूपं वस्त्वानेतुमिति भावः। यदाह भरतः "गच्छेदित्यर्थे साधयेत्ततः" (?)। साधधातोर्गमनार्थता गम्यत इत्यभिप्रायः। सजातीयेनापरेण सह रङ्गभूमेरन्तर्हित इत्यर्थः।

राजा वदति सूतेत्यादि। तावदत्र परिच्छेदे। आयुष्मानिति ऋष्याश्रम-प्रवेशे साभिप्रायम्। राजा अवलोक्य अर्थात्तपोवनाकारं वदति हे सूत! यद्यपि केनापि न प्रकाशितस्तथापि ज्ञायते यथायं विस्तारस्तपोवनस्य इति। सूतः—केन प्रकारेणावगम्यत इत्यर्थः! किमत्र प्रश्ने। परिदृश्यमानमेव तपोवनाभोगं भवानवगच्छतीत्यर्थः। राजा परिचायकं रूपं सूतायोप-दर्शयन्नेव तपोवनं वर्णयति। इह हि। हिरत्र हेतूपदेशे। "प्रश्ने हेतूपदेशे ही" ति मेदिनी। इह तपोवने क्वचित् प्रदेशे तरूणामधःस्थले नीवाराः तृणधान्यानि दृश्यन्त इत्यर्थः। कथमत्र तत्प्रसङ्गस्तत्राह कीदृशाः, शुकानां कोटरे काष्ठविवरे ये अर्भकाः शिशवः तेषां मुखादाननात् भ्रष्टाः पतिताः। क्वचित् प्रदेशे स्निग्धाः चिक्कणा एव तत्कालपेषणक्रियाधारत्वादुपलाः पाषाणखण्डाः सूच्यन्त अव-लोक्यन्ते। कथमित्याह इङ्गुदी मुनिपादपस्तस्य फलं भिन्दन्ति चूर्णीकुर्वन्ति तादृशाः। मृगा हरिणा रवं शब्दं सहन्ते। कीदृशाः, अभिन्नगतयः यथास्थानं-स्थिताः। कुतः, विश्वासोपगमात् सहवासित्वाद्धरिणा (अ?) विश्वस्ता निकटे (?) भवत्कोलाहलेनापि न पलायन्त इत्यर्थः। तोयाधारपथा अपि वल्कलस्य शिखा अग्रमञ्चलमिति यावत् ततो निस्यन्दिन्यो गलदम्बुकणानां या लेखा-स्ताभिश्चिह्निता अवलोक्यन्ते। "तृणधान्यानि नीवारा" इत्यमरः। "वल्कं

वल्कलमस्त्रियामि" त्यपि। "स्निग्धो वत्सलचिक्कणावि"ति विश्वः। "अधस्तलं गभीरे स्यादि" त्यपि ॥ १३ ॥

अपरमपि आश्रमपरिचायकं रूपमाह कुल्याम्भोभिरिति। अर्वाक् शब्दोऽन्ययोऽग्रतोवाची। अर्वागग्रतः एते दृश्यमाना हरिणशिशवः लघु लघु यथा भवति एवं चरन्ति तृणानि उपचरन्ति। कुत्र, संनिहितवनभुवि। कीदृशाः, निर्भयाः। भुवि कीदृश्यां, छिन्नकुशप्ररोहायां कुल्याम्भोभिः प्रसृतिचपलैः तत्र प्रसृतानि विस्तरणशीलानि सन्ति चपलान्यस्थिराणि तादृशैः आज्यस्य हुतद्रव्यस्य यो धूमस्तस्योद्गम ऊर्ध्वगमनं तेन किसलयरुचां किसलये रुचो येषां ते वृक्षास्तेषां रागो भिन्नो लौहित्यमन्यथा भवतीत्यर्थः। अत्र श्लोकद्वयेऽनुमाननामालंकारः। यदाह "लिङ्गाद्यल्लिङ्गिनो ज्ञानमनुमानं तदिष्यते" इति। "स्यात्कुल्या कृत्रिमा सरिदि" त्यमरः। "पल्लवोऽस्त्री किसलयमि"त्यपि। विश्वासोपगमान्मन्दं मन्दमिति वीप्सायाम् ॥ १४ ॥

सर्वेति। यदाश्रमलक्षणं त्वं कथितवानसि तद् युक्तमेव सर्वमित्यर्थः। स्तोकमिति किञ्चित् परिक्रम्य वदतीत्यर्थः। दर्शनीयतपोवनतया विविधवैदग्ध्यचेष्टितो राजा तपोवनव्यसनभवनकपटेन रथादिकमाश्रमबहिर्वस्तुमाह। सूत सूतेति द्विरुक्तिः कर्तव्यनिश्चये। तपोवनबाधा मा भूत् न भवतु। माङि लुङ् कालसामान्ये लुङ्। तत्तस्मादिहैव तपोवनबहिर्भूम्यामित्यर्थः। रथं स्यन्दनं स्थिरीकुरु यावद्रथादधो भवामि। 'हयरश्मौ तुलासूत्रे प्रग्रहः सद्भिरिष्यत' इति। राजा रथादवतीर्य आत्मानमवलोक्य निर्विकाराकारप्रवेश्यस्तपोवनाश्रमस्तथा च साधारणेन मया तत्र गन्तव्यं न वेत्यभिप्रायेणात्मानं दृष्ट्वा वदतीत्यर्थः। हे सूत तपोवनानि निर्विकाराकारगन्तव्यानि। यदाह मनुः "विनीतात्मा हि नृपतिर्न विनश्यति कुत्रचित्।" तस्मात् मदीयालंकारान् धनुश्च गृह्यन्तां त्वयेत्यर्थः। उपनयति समर्पयति। हे सारथे आश्रमवासिनस्तपोधनानवलोक्य परावृत्यागमिष्यामि तावत् घोटका आर्द्रपृष्ठाः जलदानादिना पृष्ठाभिमर्दनेन च विगतश्रमा विधीयन्तामित्यर्थः। सूतो वदति यथा त्वमाज्ञापयसि तथा करोमीत्युक्त्वा निष्क्रान्तः। परिक्रम्येति किंचिद् गत्वा वदतीत्यर्थः। इदमाश्रमपदं यदग्रे दृश्यते तदेवाश्रमपदं तपोवनमित्यभिप्रायः। यावत्तावत् प्रविशामि।

प्रविष्टकः प्रवेशगतिविशेषः तेन निमित्तं कुशलं सूचयित्वा वदतीत्यर्थः। अये शब्दो निर्लक्ष्यसंबुद्धौ। "अये कोपे विषादे च संबुद्धौ स्मरणेपि चे" ति विश्वः। इदमाश्रमपदं ऋष्याश्रमस्थानं शान्तं विकृतिरहितं बाहुर्भुजोऽर्थान्मम स्फुरति स्पन्दते। च पुनरर्थे। तत्फलं वराङ्गनालाभः स इह निर्विकाराश्रमे क्व वर्त्तते अपि तु न क्वापि। यद्वा वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यदर्थे लट्। तत्फलमत्र कुतो भविष्यतीत्यर्थः। अथवा शब्दोऽत्र प्रारम्भे। अवष्टम्भे 'तथाक्षेपे पक्षान्तरेऽथवा स्मृत" (?) इति नानार्थः। भवितव्यानां विधिलिखितानामिति यावत् प्रमेयाणामित्यर्थः द्वाराणि आगमनपथाः सर्वत्र जायन्ते तथा च तत्फलयोग्यता ममात्र भवेदपीति भावः। दक्षिणभुजस्पन्दः पुंसामिष्टप्रदः तथाऽद्भुतसारे "वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक" इति। शकुनमिदं शकुन्तलालाभसूचकमिति। अत्रानुमाननामालंकारः॥ १५॥

नेपथ्य इति।

वाक्यस्यार्थतया यत्र पात्रं नैव प्रवेश्यते।
नेपथ्य इति प्राकाश्ये प्रयोज्यं तत्र नाटक इति भरतः।

इत इतः प्रियसख्यौ अत्रागच्छत इत्यर्थः। सप्तम्यर्थे तसिः। प्राकृते द्विवचनस्य बहुवचनं नित्यमिति सूत्राद् द्विवचनार्थ एव बहुवचनमिति। आकर्ण्येति। तपोवने भवदालापं श्रुत्वा वदतीत्यर्थः। अये वृक्षवाटिकाया अव्यवहितदक्षिणदेशे आलाप इति विशिष्य जानामीत्यर्थः। "आलापो भाषणं मिथ" इत्यमरः। एनबन्यतरस्यामदूरेऽपञ्चम्या इत्यनेन एनप् प्रत्ययः। अवगच्छामि कुत्रत्य आलाप इति विशिष्य जानामीत्यर्थः। अये संभ्रमे। "अये क्रोधे विषादे च संभ्रमे स्मरणेपि चे"ति मेदिनी। एतास्तपस्विकन्यका इत एवाभिवर्त्तन्ते। धातोरनेकार्थत्वादिहैवागच्छन्तीत्यर्थः। किमत्र तत्राह, सेचनघटैर्बालवृक्षेभ्यः पयो जलं दातुम्। कीदृशैः, निजबलोद्वहनयोग्यैः। "शाखी विटपी पादपस्तरुरि"त्यमरः। निरूप्य सौन्दर्यादिकमित्यर्थः। अहो "प्रशंसायां संबुद्धावप्यहो मत" इति मेदिनी। आसां तपस्विकन्यकानां दर्शनं मनोहरं यदवलोकिताखिलप्रमदारूपस्य ममापि विस्मयमुत्पादयतीति भावः। अत्र च रसस्य जन्म। "मधुरं रसे ज्ञेयं स्वादुन्यपि मनोहर" इति धरणिः।

श्लोकेनापि पुनरेतत् सौकुमार्यमेव स्तौति शुद्धान्तेति। अत्र वारंवारानुचिन्तनवाचिकव्यापारबाहुल्याद्रसानुबन्धः। इदं परिदृश्यमानं वपुः आश्रमवासिनस्तपोवनस्थायिनो जनस्य तदा खलु निश्चितं वनलताभिररण्यवल्लीभिरुद्यानलताः गुणैः सौकुमार्यादिभिर्दूरीकृतास्तिरस्कृताः। कीदृशं, अट्टालिकादुष्प्राप्यम्। अयमाशयः। सकलभुवनावरोधदुर्मिलं वपुरलंकुर्वन्त्या (?) वनलताप्रायया मुनिकन्यकया द्राक् लावण्यसौन्दर्यादिगुणैरुद्यानलताप्रायाः शुद्धान्तस्त्रियो निश्चितं तिरस्क्रियन्त इति। निदर्शननामायमलंकारः। यदाह दण्डी—

अर्थान्तरप्रवृत्तेन यत्किंचित् सदृशं फलम्।
सदसद् वा निदर्श्येत यदि तत् स्यान्निदर्शनम्॥

"पुमानाक्रीड उद्यानमि"त्यमरः। "शुद्धान्तश्चावरोधश्च" इत्यपि। "अटव्यरण्यं विपिनमि"ति॥ १६॥

प्रतिपालयामीति किं किमिह कुर्वन्तीति विभावयामीत्यर्थः। सखीभ्यां प्रियंवदानुसूयाभ्याम्। यथोक्तेति कक्षान्वितसलिलकलशा इत्यर्थः। तत्र एका सखी वदति। हलाशब्दोऽव्ययं सखीसंबोधने "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रती" त्यमरः। "स्त्रीणांतु प्राकृतं प्राय" इति भरतानुशासनात् स्त्रीणां प्राकृतभाषणमेव नियमः। संस्कृतादस्यातिश्रेष्ठत्वाच्च। यदाह भरतः— "संस्कृतात् प्राकृतं श्रेष्ठं ततोऽपभ्रंशभाषणमि"त्यादि। भाषावाचां सौरसेनी सूरसेनदेशप्रयोगोपलक्षिता नायिकानां प्रशस्ता। यदाह भरतः—"नायिकानां सखीनां च सौरसेनी प्रकीर्तिता।" सखि तवापि सकाशात् तातकण्वस्य आश्रमवृक्षकाः प्रिया इति तर्कयामि भवत्या अप्यपेक्षया च तपोवनतरुः कण्वस्य प्रीतिविषय इत्युत्पश्यामीत्यर्थः। कथं ज्ञायते तत्राह येन नवमालिकाकुसुमपरिपेलवापि त्वं एतेषु आलवालपूरणेषु नियुक्तेति येन पित्रा एतेषु तत्तरुसम्बन्धिषु इत्यर्थः अर्थात् पयोभिः। "सुमना मालती जाती सप्तला नवमल्लिके"त्यमरः। "स्यादालवालमावाप" इत्यपि। अत्र शकुन्तला श्रेष्ठा नायिका।

दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा।
चतस्रो नायिकाः श्रेष्ठाः प्रेष्याद्या मध्यमाधमाः॥

शकुन्तलेति नाम यौगिकमेव । तदाह आदिपर्वणि—

निर्जने भुवने यस्मात् शकुन्तैः परिवारिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मयेति ॥

सखि न केवलं तातकण्वस्य नियोगो ममापि एतेषु सहोदरस्नेह इति पितृवचोभिरेव पानीयं दीयते इति सत्यं किंतु एतेषु वृक्षेषु ममापि भ्रातृस्नेह इत्यर्थः । इत्युक्त्वा वृक्षसेचनं नाटयति । "तातोऽनुकम्प्ये जनक" इति मेदिनी । अनुसूयेति सखीनाम, द्वितीया प्रियंवदा नाम्नी । एते अनुनायिके । यदाह भरतः—

सखी प्रव्रजिता दासी प्रेष्या धात्रेयिका तथा ।
अन्याश्च शिल्पकारिण्यो विज्ञेयास्त्वनुनायिका इति ।

सखि शकुन्तले ग्रीष्मकाले ये आश्रमवृक्षाः कुसुमानि ददति पुष्प्यन्ति ते उदकं लम्भिताः प्रापिता एव । इदानीं संप्रति अतिक्रान्तदिवसानपि पूर्वं पुष्पितानपि ये कुसुममिदानीं न दास्यन्तीति यावत् तानपि सिञ्चामः । कथं ते सेक्तव्यास्तत्राह तेन तत्र जलदानकर्मणा एतेषु वृक्षेषु अनभिसन्धितः निरुपाधितः नोऽस्माकं गुरुतरो धर्मः पुण्यं भविष्यति । ग्रीष्मसमयदास्यत्कुसुमतरुजलवितरणे आधुनिककुसुमलब्धिरेवोपाधिः । अत्र तु कुसुमदानायोग्यत्वात् फलं महदेव भविष्यतीति भावः । अदिक्रन्तसमत्र इति समए इति सूत्रेण समस्थाने ए आदेशः (?) ।

शकुन्तला—सखि प्रियंवदे रमणीयं मन्त्रयसे भद्रं वदसि दातव्यमेवैतेषु जलमिति भावः । इत्युक्त्वा पुनरपि वृक्षसेचनमभिनयति । राजा निर्वर्ण्य, दृश्यन्ते सर्वा एव समानाकृतयः तथाप्यासां मध्ये शकुन्तला भविष्यतीति विचिन्त्येत्यर्थः । सकौतुकमात्मगतं लक्षणं च

सर्वेषां नियतस्यैव श्राव्यमश्राव्यमेव वा ।
श्राव्यं सर्वप्रकाश्यं स्यादश्राव्यं स्वगतं मतम् ॥

एतदेवात्मगतमिति । कथमत्र हर्षे । "कथं हर्षे च गर्हायामि"ति मेदिनी । इयं सा कण्वदुहिता शकुन्तला यस्याः कथा मयि तपस्विना कथितेति भावः । सविस्मयं अतिशयितसौन्दर्याभिलोचनाद् विस्मयः । "अहो विषादे विस्मयेऽप्यहो" इति नानार्थः । तत्रभवान् मान्यः कण्वः असाधुदर्शी अविज्ञः । कथमि-

त्याह यतः शकुन्तलां चीरपरिधाने आदेशयति। तत्र भूयः संस्कारपाटवा-
दादरातिशयाच्च वाचिकव्यापारबद्धसात्त्विकभावानुबन्धाच्च रसनिष्पत्तिः।
श्लोकेनापि मुनेरसाधुदर्शित्वं दर्शयन्नाह इदं किलेति। इदं वपुः तपः साध-
यितुं कर्तुं क्षमं योग्यं भविष्यति अपि तु न भविष्यति। वपुः किंभूतं,
स्वभावसुन्दरम्। ध्रुवमुत्प्रेक्षायां स मुनिः कण्वः नीलोत्पलपत्रधारया समिल्लतां
पलाशादिकाष्ठवल्लीं छेत्तुं व्यवस्यति उद्यतोऽस्तीत्यर्थः। एतावता नीलोत्पलपत्र-
धारया समिल्लताकर्तनं यदि भवति तदैतदपि वपुस्तपः साधयितुं भविष्यतीति
स्फुटार्थः। शमीलतामिति क्वचित्पाठः स तु साधीयान्। शमीलतातिदृढा भव-
तीति प्रसिद्धिः प्रकृते चातिदृढस्यैव प्रयोजकत्वादिति ॥ १७ ॥

विश्वस्तां यथा यथास्थिता किं किमाचरति तदवगच्छामीत्यर्थः। चेत्
प्रकटीभूय द्रष्टव्या तदा लज्जया किमपि रहस्यं न करिष्यतीति शाखापिहितो
भूत्वाऽऽलापमस्याः शृणोमीति भावः। शकुन्तला—सखि अनुसूये अतिपिनद्धेन
दृढपरिधानेनेत्यर्थः अमुना वल्कलेन प्रियंवदयाऽहं पीडिताऽस्मि ता तस्मा-
द्धेतोः शिथिलय तावदिदं वल्कलम्। ता तस्मादिसूत्रेण ता आदेशः।
विहस्य—विहसितलक्षणमाह

आकुञ्चिताक्षिगण्डं च सस्वनं मधुरं तथा।
कलागतं सानुरागं नृणां विहसितं भवेत् ॥

सखि अत्र तावत् आत्मनो यौवनारम्भं पयोधरयोः कुचयोः यो भारस्तस्य
विस्तारयितारं वर्द्धकं उपालभस्व। राजा वदति इयं प्रियंवदा सम्यगाह।
प्रियंवदावचनं पूरयन्नेवास्या जलवितरणसमयोचितामवस्थामाह। अस्मिन्नेव
श्लोके स्तनाभोगदर्शनादुद्दीपनविभावादुपवर्णनरूपवाचिकव्यवहाराच्च निरन्त-
रोत्पन्नसात्त्विकव्यभिचाराच्च रसस्य प्रतिपत्तिः। इदमुपेति। अस्याः
शकुन्तलाया इदं अभिनवं वपुः शरीरं कर्तृ वल्कलेन चीरेण स्वां आत्मीयां
शोभां न पुष्यति विभर्त्ति। किंभूतं, अभिनवं तारुण्यस्पृष्टम्। वल्कलेन कीदृशेन,
स्कन्धदेशे उपहिते देशे उपहितो रचितः पातित इति यावत् सूक्ष्मो ग्रन्थिर्यत्र
तादृशेन। स्तनयुगस्य परिणाह आभोगस्तं आच्छादितुं व्याप्तुं शीलं यस्य
तादृशेन। किंवत्, कुसुममिव यत्पाण्डु धूसरं यस्य पत्रं दलं तदुदरेण अभ्यन्त-

रेण पिनद्धमालिङ्गितं कुसुमं स्वां शोभां न पुष्यतीति। पुष् पुष्टौ। "अभिख्या परमा शोभे"त्यमरः। "परिणाहो विशालता"॥ १८॥

स्वोक्तमेवाक्षिपति अथवेति मयैव भद्रं नाभिहितमिति भावः। कामं निश्चितं वल्कलं कर्तृ अस्य वयसो यौवनस्य अप्रतिरू.मतुल्यरूपमपि पुनरलंकारशोभां न न पुष्यति पुष्यत्येव। द्वौ निषेधौ प्रकृत्यर्थं गमयतः। "वयो यौवनमात्रक" इति विश्वः। केचिदपरमात्मगतां काममित्याहुः (?)। "वल्कं वल्कलमस्त्रियामि"त्यमरः।

कथमप्रतिरूपसाच्छिव्येपि शोभा तत्राह सरसिजमिति। शैवलेनापि अनुविद्धं मिलितं सरसिज पद्मं रम्यं मनोहरं भवति। मलिनमपि लक्ष्म चिह्नं हिमांशोश्चन्द्रस्य लक्ष्मीं शोभां तनोति विस्तारयति। वल्कलेनापि तन्वी शकुन्तला अधिकमनोज्ञा अतिशयरूपवती दृश्यत इत्यर्थः। अत्र बीजमाह हि यतः मधुराणां निसर्गसुन्दराणामित्यर्थः आकृतीनां मण्डनमलंकरणं किमिव न अपि तु सर्वमेव शोभाविधायि भवतीत्यर्थः। तुल्ययोगितालंकारः। यदाह दण्डी—

विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित्।
कीर्तनं स्तुतिनिन्दाभ्यां सा स्मृता तुल्ययोगिता॥

"मलिनं दूषिते कृष्ण" इत्यमरः। "मण्डनं भूषणे क्लीबमि"त्यपि॥१९॥

शकुन्तला अग्रतोऽवलोक्य सख्यौ एष चूतवृक्षः मां व्याहरतीव किमपि मामालपतीव वातेन पवनेन ईरिताश्चालिता ये पल्लवास्ता एवाङ्गुल्यस्ताभिः। अन्येनापि व्यवहारः अङ्गुलिसंज्ञयैव क्रियत इति। ता तस्माद् यावद् भवतु एनं चूतवृक्षं संभावयामि समीपमस्य गत्वा जलदानेन पुरस्करोमीत्यर्थः। तथा करोति। तं संबोधयति। पल्लवाङ्गुलीहिमिति भिसोहिमितिसूत्रेण हिं आदेशः। प्रियंवदा—सखि शकुन्तले इहैव मुहूर्त्तं तिष्ठ सहकारस्यैव तले मनाक् स्थिरा भव। शकुन्तला पृच्छति कि निमित्तं किमर्थं तत्र मया स्थातव्यमित्यर्थः। प्रियंवदा निमित्तमाह त्वया समीपवर्तिन्या चूतवृक्षकः लतासनाथ इव लताद्वितीय इव प्रतिभाति। एतावता शकुन्तलायाः प्रतिसम्बन्धमनोरथः सूचितः। "मनोरथस्त्वभिप्रायस्योक्तिरन्यापदेशत" इति। शकुन्तला—

अत एव प्रियंवदेति त्वमुच्यसे यतः कौतुकेऽपि तवैवंविधव्यवहारोऽतो नामापि तव यथार्थमेवेति स्फुटार्थः ।

राजा—अवितथं स्वरूपं प्रियंवदा वदति । अवितथं सत्यम् । लतासादृश्यमेव विशदयति अधर इति । अस्या मुनितनयाया अधरः किसलयराग इव रागो यस्य तादृशः । बाहू कोमलः यो विटपः शाखा तदनुकारिणौ तत्सदृशौ । अङ्गेषु शरीरेषु संनद्धमासक्तं यौवनं तारुण्यं कुसुममिव स्पृहणीयम । "अधरस्तु पुमानोष्ठ" इति मेदिनी । "शाखा तु विटपोऽस्त्रियामि"त्यमरः । अत्रोपमालंकारः ॥ २० ॥

अनुसूया—सखि शकुन्तले इयं नवमालिका तिष्ठतीत्यर्थः । कीदृशी, सहकारस्य स्वयंवरवधूः स्वातन्त्र्यविहितवल्लभेत्यर्थः । पुनः कीदृशी, त्वया वनतोषिणीति कृतनामधेया । वने यथैनां दृष्ट्वा संतोषो भवति तथा नान्यामित्यर्थः । एतावता स्वयंवरेणैव त्वमपि वल्लभसंगता भविष्यसीति सूचना । शकुन्तला उपगम्य संनिधानं गत्वा अवलोक्य च, सखि अनुसूये रमणीये खलु काले अमुष्य पादपमिथुनस्य तरुस्त्रीपुंसयोर्व्यतिकरः संबन्धः रमणीयः संवृत्तः । कथं रमणीयस्तत्राह नवकुसुमेन नवयौवनं तारुण्यं यस्यास्तादृशीयं नवमालिका । कुसुमस्याह्लादकत्वात् यौवनसाम्यम् । अयमपि सहकारः बद्धं संबद्धं फलं यस्य स बद्धफलः तस्य भावः बद्धफलता तया उपभोगक्षमः अर्थादतियुवैव । इत्युक्त्वा पश्यन्ती तिष्ठति । ममापि यद्येवं भवतीति हृदयेन तदुभयसमागमशोभामवलोकयतीति भावः ।

प्रियंवदा—अनुसूये जानासि किं निमित्तं शकुन्तला वनतोषिणीमतिमात्रं बारं वारं प्रेक्षते पश्यति । अनुसूया—न खलु विभावयामि नाहमवगच्छामीत्यर्थः । प्रियंवदा—यथा वनतोषिणी सदृशेन अनुरूपेण पादपेन सहकारवृक्षेण संगता युक्तास्तीत्यर्थः । नाम संभावनायां । तथाहमपि एवमात्मनोऽनुरूपं वरं जामातरं लभेयं प्राप्नुयाम् । शकुन्तला-एष आत्मनस्ते चित्तगतो मनोरथः । यत् यत् स्वचेतसा त्वमभिलषसि तत्तन्मन्नाम्ना प्रकाशयसीत्यर्थः । आवर्जयति तरुसेचनाय घटं नमयतीत्यर्थः । अनुसूया—सखि शकुन्तले इयं माधवीलता त्वमिव तातकण्वेन स्वहस्तसंवर्द्धिता । "तातोऽनुकम्प्ये जनक" इति विश्वः ।

यथा त्वं हस्तस्थिता पूर्वावस्थजातादिना तेनाजन्मनः परिपालिता तथेयमपि तेन स्वहस्तविहितालवालजलदानादिना वर्द्धितेत्यर्थः। ता (?) ततः कथमेनां विस्मृतासि पानीयदाने इत्यर्थः। मतिबुद्धिपूजार्थेभ्यश्चेति चकारात्कर्त्तरि क्तः। शकुन्तला—ततः तदात्मानमप्यहं विस्मरामि। विसुमरिस्समिति उत्तमपुरुषे लृटि स्मरेर्भवयुवसा इति सूत्रेण सुमरादेशः मिनास्सं वेति मिकारेण सहइस्सं विकरणः। सहर्षमिति ममापि विवाहे एतत्कुसुमप्रकाश एव प्रतिबन्धीति हर्षः। आकस्मिकी कुसुमोत्पत्तिरित्याश्चर्यमाश्चर्यमिति द्विरुक्तिरावेगे। हे प्रियंवदे तव प्रियं प्रमोदजनकं किंचिदित्यर्थः निवेदयामि। प्रियंवदा—सखि किं मे प्रियं किं मेऽभीष्टं कथयसीत्यर्थः। शकुन्तला—असमये खलु एषा आमूलात् मुकुलिता माधवीलता विनिश्चितमप्राप्तवयस्कैव। उभे प्रियंवदानुसूये उपगम्य शीघ्रं लतानिकटं गत्वा पृच्छत इति शेषः। प्रियंवदा—सखि स्वरूपं कथयसीत्यर्थः। शकुन्तला–किमुत्प्रेक्षायाम्। अग्रत एव विद्यते किं नावलोकयथ इत्यर्थः। प्रियंवदा सहर्षं निरूप्य सानन्दमाकलय्य तेन हि प्रियं ते निवेदयामि। "हि हेताववधारणे"। तेनैव मुकुलोद्भवेनैव हेतुनेत्यर्थः। तथाहि प्रियमीप्सितं निवेदयामि। निवेद्यमाह आसन्नपाणिग्रहणासि त्वम्। शकुन्तला सासूयम्। असूया शृङ्गाररसव्यभिचारिभावः। प्रस्तुते व्याजेर्ष्या। निश्चितं आत्मगतस्ते मनोरथः। प्रियंवदा—सखि न खलु परिहासेन भणामि। खलु-शब्दो वाक्यालंकारे। प्रत्यायकं रूपमाह श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदमिति। यदा माधवीलता पुष्पिष्यति तदैवाहं शकुन्तला-विवाहं कारयिष्यामीति तातकण्वस्य वचनं श्रुतमासीत्। अनुसूया—हे प्रियंवदे अत एव शकुन्तला सस्नेहा माधवीलतां सिञ्चति। एतत्पुष्पमद्-विवाहौ सहैव भविष्यत इति त्वरा पुष्पोद्भवार्थं सस्नेहा माधवीलतां स्नपयतीत्यर्थ। शकुन्तला—यतो मे भगिनी भवति ततः किमिति न सेक्ष्यामि? अनया समं मम सहोदरव्यवस्था तस्मादेनां कथमहं न सेक्ष्यामीत्यर्थः। भोदीति भवतिरूपे भवश्च भो इति सूत्रेण भवो भो आदेशः तकारो द इति। राजा—अपि नाम एवं संभाव्यते। इयं कुलपतेः कण्वस्य सवर्णक्षेत्रं ब्राह्मणजायावधूस्तदन्यक्षेत्रं क्षत्रियादिजातीया तत्संभवा भवेत्।

यदि पुनरियं ब्राह्मण्यतिरिक्तप्रस्थितेरपत्यं भवति तथा मम सकलवाञ्छित-सिद्धिर्भवतीत्यर्थः। अपिनामेत्यव्ययसमुदायः। स्वयमेव संदेहं व्युदस्यति—वृथैव मम संदेहो भवतीत्यर्थः। असंशयं इयं मुनिकन्यका क्षत्रपरिग्रहक्षमा क्षत्रियकलत्रयोग्या। कथमिदमवगम्यत इत्याह यद् यस्माद्धेतोरार्यं समर्यादं मम मनः अस्यां शकुन्तलायां साकाङ्क्षि। यदीयं ब्राह्मणी-क्षेत्रजा भवति तदा मन एव ममास्यां न सस्पृहं भवतीत्यर्थः। कथं मनसोऽभिलाषितया संदेह-व्युदासस्तत्राह हि यतः संदेहपदेषु वस्तुषु सतां समर्यादानां मनः तस्य प्रकर्षेण वृत्तयः प्रमाणम्। वृत्तिर्व्यापारः तथा च समर्यादस्य मम मनोऽस्यामेवासक्तं भवत्येतावता निश्चितमियं क्षत्रसंभवेति। अत्र मतिरनुबन्धः। यदाह "शास्त्रो-क्तार्थानुसंधानादर्थनिर्धारणं मतिः"। अनुमाननामालंकारः। "लिङ्गाद्यल्लिङ्गिनो ज्ञानं अनुमानं तदिष्यत" इति। "इयत्तायां च हेतौ च प्रमाणं सत्यवादिनी"ति मेदिनी। तथापि यद्यपि मनोबलेनैव संशयोपनीतकल्प इत्याशयः तत्त्वतः मूलात् एनां उपलप्स्ये ज्ञास्यामीत्यर्थः॥ २१॥

"संभ्रमं त्वर्यामिच्छन्ति भयमुद्वेगमादरमि"ति कोषः। सत्रासं वदतीत्यर्थः। अम्मो आश्चर्ये। यदाह भरतः "विस्मये दुस्सहे अम्मो नित्यं स्त्रीभिः प्रयुज्यते"। मधुकरो भ्रमरः मम वदनम् अभिभवति पीड़यति सलिलसेक-संभ्रान्तः व्याकुलः। किं कृत्वा नवमालिकामुज्झित्वा त्यक्त्वा। अथवा मधुकरः-षिङ्गो नवीनमालावर्ती नायिकां त्यक्त्वेति। भ्रमरविहितबाधाम्। "पीड़ा बाधा व्यथा दुःखमि"त्यमरः। शकुन्तलायाः भ्रमर-(बाधा,)जनितचेष्टामाह यतो यत इति। अद्य इदानीं इयं त्रासात् दृष्टेर्विभ्रमं विलासं शिक्षते अभ्यस्यति अकामापि अननुभूतमनोभवबाणा अपि। कीदृशी, विवर्त्तितभ्रूः। पुनः कीदृशी, यत्र यत्र भ्रमरः अभिवर्तते ततस्ततस्तस्मात् स्थानात् प्रेरितं लोचनाञ्चलं कटाक्षो यया तादृशी। क्वचित् वामलोचनेति पाठः तत्र वामं सुन्दरम्। दृष्टिरियं शृङ्गाररसे संभवति। (अत्र युक्तिः) यथा कण्ठाभरणे—

> अयुज्यमानस्य मिथः शब्दस्यार्थस्य वा पुनः।
> योजना क्रियते चासौ युक्तिरित्युच्यते बुधैः॥

शकुन्तला संभोगव्यग्रं भ्रमरं सक्रोधमभिनिन्दयति चलापाङ्गामिति। हे

मधुकर ! खलु निश्चितं त्वं कृती कृतकृत्यः वयं तत्त्वान्वेषणात् इयं ब्राह्मणी न वेति स्वरूपार्थानुसंधानात् हेतोः हताः शोचनीयाः। अहं तत्त्वजिज्ञासया एनां न कामये त्वं पुनरेनामसंदिग्धमुपभुङ्क्ष एवेत्यर्थः। भोगप्रकारमाह। अस्याः शकुन्तलायाः दृष्टिं बहुशः स्पृशसि आमृशसि। कीदृशीं, सकम्पां चलापाङ्गां अस्थिरप्रान्ताम्। मृदु यथा स्यादेवं कर्णान्तिकचरः श्रवणसंनिधिसंचरणशीलः स्वनसि। क इव रहस्यवार्त्ताकथक इव। सोऽपि कर्णान्तिकं गत्वा तत् कथयति। अधरं पिबसि। किंभूतं, रतिनिधानम्। अस्याः किंभूतायाः, करं व्याधुन्वत्याः। अन्योऽपि नागरो लोचनचुम्बनं कर्णान्तिके लघुभाषणं अधरपानं च करोति। राज्ञोऽभिलाषरूपेयं प्रथमा कामावस्था। यदाह भरतः—"प्रथमे त्वभिलाषः स्यादि"ति। हेतुरयमलंकारः। यदाह भोजः—"क्रियायाः कारणं हेतुरि"ति। बहुश इति वीप्सायां शस् प्रत्ययः॥ २३॥

शकुन्तला—सख्यौ परित्रायेथां अमुना दुष्टमधुकरेणाभिभूयमानामिति। उभे प्रियंवदानुसूये सस्मितं ईषद्विकसितैर्गण्डैरित्यादि। के आवां परित्राणे आवयोः कोऽधिकार इत्यर्थः। परित्राणे तावत् दुष्मन्तं स्मर यतो राजरक्षितानि तपोवनानि। तपोवनदुष्टनिराकरो राजा दुष्मन्तः। तथाह मनुः "रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुरि"ति। राजा—अवसर इति। दुष्टनिवारणच्छलेनात्माभिव्यक्तौ न कचिदलौकिकबुद्धिर्भविष्यतीति भावः। एवं हीति। अस्मिन्राजोट्टङ्कनावसरे मयैव चेदैश्वर्योद्दीपकं किंचिद् वक्तव्यं तदासावेव राजेत्यासां निवेदितं भविष्यतीत्यर्थः। तत्कथमात्मप्रकाशो भविष्यतीति आह।

न एष दुर्विनीतो विरमति तस्मादन्यतो गमिष्यामीति। एतद् सु इति स्थिते एतदः सोरोत्वं वा इति सुप्रत्ययस्यौत्त्वं अन्त्यस्य हल इति दलोपः तदेतदोः सावनपुंसक इति तकारस्य सकारः। दृशौ पश्चाद् प्रक्षिप्य वदतीत्यर्थः। हाधिक् कथमत्राप्यनुसरति माम्। हाधिगित्यर्थे "हद्धी नित्यं द्विरुच्यत" इति भरतः। तस्मात् परित्रायेथाम्। राजा शकुन्तलासमीपमेत्य वदतीत्यर्थः। आः कोपे। "आः स्मरणे कोपसन्तापयोरि"ति मेदिनी। कोऽयमज्ञातस्वरूपः मुग्धासु अज्ञासु निरपराधास्विति यावत्। अविनयं दुराचारं आचरति। कस्मिन्, पुरुपुत्रे पृथिवीं रक्षति। कीदृशे, दुर्विनीतानां निवारके। अध्यवसाय-

नामालंकारः। यदाह "कार्येष्वध्यवसायो यत्तुलनागर्भितं वच" इति ॥ २४ ॥

सर्वाः शकुन्तलानुसूयाप्रियंवदाः किंचिदिवाल्पभावेन त्रस्ता अभवन्नि-त्यर्थः। सख्यौ-आर्य न खलु किंचिदत्याहितम्। "अत्याहितं महाभीतिरि" त्यमरः। तत् कथमार्तनादस्तत्राह। इयं नौ प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूतास्तीति शेषः। राजा-अयि तपो वर्धते? साभिप्रायम्। तपोधनायास्तपः-प्रश्नस्यार्हत्वात्। अनुसूया उत्तरयति। इदानीं अतिथिविशेषस्य भवतो लाभेन तपो वर्धत इति। तपसोऽपि फलमपूर्ववस्तुप्राप्तिरेवेति भावः। ·प्रियंवदा-स्वागतमार्यस्य। हला शकुन्तले गच्छ उटजात् फलमिश्रं अर्घम् उपाहर आनीय प्रयच्छ। इदमपि पादोदकं भविष्यति। वृक्षार्थं यदुदकमानीतमस्ति पादप्रक्षाल-नाय तदेव भविष्यतीत्यर्थः। "पर्णशालोटजोऽस्त्रियामि"ति। राजा विरहा सहिष्णुराह सूनृतयेति। "प्रियं सत्यं च वचनं सूनृतं" इति शाश्वतः। सत्य-मेवार्घ्याद्यानयनाय यदीयं गच्छति तदा वचनेनैव ते ममातिथ्यं निर्व्यूढमिति। किमिदानीं विधेयमित्याशङ्क्याह। अस्यां तावत् प्रच्छायशीतलायां सप्तपर्णनाम्नो वृक्षस्य तले निर्मिता या वेदिका वेदिः विश्रामस्थानमिति यावत्। तस्यामुप-विश्यार्यः श्रममपनयतु।

राजा अनेन वृक्षजलदानरूपेण। प्रियंवदा जनान्तिकं—

" हस्तेन त्रिपताकेन संज्ञया यदुदीर्यते।
बहूनां पुरतो मध्ये तज्जनान्तिकमुच्यते।" इति

सखि शकुन्तले उचितं नः अतिथिपर्युपासनं तस्मात् आगच्छ उपवि-शामः। शकुन्तला—आत्मगतं अनन्यप्रकाशं—किं नु खलु इमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता। तपोवनकन्यकाया मम विकारोऽनुचित इति। किं कुत्सायाम्। "किं शब्दः प्रश्नकुत्सयोरि"ति शाश्वतः। कथमेवं जातमिति नु शब्दो वितर्के अपूर्ववस्तुदर्शनजविकारस्य भवनयोग्य-त्वात् खलु निश्चये। सुहृदो भावः सौहार्दम्। प्रियंवदा—सखि अनुसूये क एष प्रभुत्वेन सह दाक्षिण्यं सस्नेहत्वं प्रकाशयति। कीदृशः, चटुला मनोहरा गम्भीरा आकृतिर्यस्य तादृशः। यदाह—

विकाराः सहजा यस्य हर्षक्रोधभयादिषु।
भावेषु नोपलभ्यन्ते तद् गाम्भीर्यमिति स्मृतम ॥ इति

मधुरं यथा स्यादेवमालपन्। अनुसूया—सखि ममापि कौतूहलमहमपि तदेव विवक्षुरित्यर्थः। प्रक्ष्यामि तावदेनम्। राजानम् अनुसूया प्रकाशं सश्राव्यम्। आर्यस्य भवतो मधुरालापजनितो विस्रम्भ आसक्तिः स मां मन्त्रयते इति भवन्तं प्रष्टुमिति शेषः। यद्यपि कुलस्त्रीणामस्माकमज्ञातस्वरूप-जनैः सममनुचितो विस्रम्भ. तथापि श्रीमद्वचनकौशलपेशलप्रश्रयोऽस्मान् मुहुस्तरलयतीत्यर्थः। पृच्छति, कतरः पुनरार्येण वर्णोऽलंक्रियते ? ब्राह्मणादीनां को भवान् ? कतरो वा प्रदेशः विरहपर्युत्सुकः असान्निध्यसोत्कण्ठः क्रियते ? किं निमित्तं आर्येण सुकुमारेण परिश्रमासहिष्णुना आत्मा तपोवनागमन-परिश्रमस्योपनीत इति। भवतस्तपोवनागमने किं प्रयोजनमित्यर्थः। विशिष्य तत्कथयेति भावः। शकुन्तला हृदयमाह मा उत्ताम्य ग्लानं न भव। "अमानोनाः प्रतिषेधवचनाः"। बीजमाह, यत्त्वया चिन्तितं तदनुसूया मन्त्रयते पृच्छति। कोऽयं कुतः किं प्रयोजनमत्रायात इति प्रथमं त्वयैव प्रष्टु-मुत्कण्ठितं तदनुसूयाप्रश्नेनावगन्तव्यमिति भावः।

राजा-कथमिति। आसां मध्येषु परिचयः केन कारयितव्यः प्रत्ययाय भिया सत्यं वक्तव्यमेव न, स्वरूपकथने राजत्वप्रकाशः स्यादिति भावः। तर्ह्यात्मनिह्नव एव विधीयतां तत्राह कथमिति परीहारः संगोपनं भवत्विति प्रकारान्तरेणात्मानं प्रकाशयामीत्यर्थः। स्वरूपं कथयन्नेवानुक्रमेणानुसूयाकृत-प्रश्नच्छलेन उत्तरयति। प्रकाशं सर्वश्राव्यम् भवति। हे वेदविद् ब्राह्मण इति संगोपनं राज्ञा कृतः। तत्राहमेव धर्माधिकरणिक इत्यर्थः। धर्मारण्यं तपोवनम्। किं निमित्तमित्यत्र प्रश्ने पुण्याश्रमदर्शनप्रसङ्गेन। सर्वत्र सत्य वादित्वमखण्डितमेव व्यवस्थितमिति। अनुसूया-सनाथा धर्मचारिणः। चेदार्येण तपोवनमिदमागमनेनालंकृतं तर्हि धर्मचारिणस्तपोधनाः सनाथाः। यद्वा कृतोत्तरमेनमनुस्तौति धर्मचारिण्यो वयं सनाथाः। येषां दुष्मन्तोऽवेक्षकस्ते कृतकृत्या इत्यर्थः। अथ च सूचना। अत्राश्रमिणां नाथोऽवेक्षकस्त्वमेव भविष्यसि शकुन्तलापतित्वादिति। शकुन्तला शृङ्गारकृतां लज्जां नाटयति। लक्षणं च—

> शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
> पुरुषप्रमदाभूमिः स शृङ्गार इति स्मृतः॥

स च द्विविधः । यदाह—

चेष्टा भवति पुंनार्योर्याव तन्योन्यरक्तयोः ।
संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ॥

तत्र संभोगात्मकः ऋतुमाल्यालंकारैः प्रियजनगान्धर्वसेवाभिरुपवनविहारैः शृङ्गारो नाम संभवति । सख्यौ–उभयोराकृतिं चेष्टां वा । "आकार इङ्गिताकृत्योरि"ति मेदिनी । ज्ञात्वा जनान्तिकं, राजानं वर्जयित्वा, सखि शकुन्तले यद्यद्य तात इह संनिहितो भवेत् ? शकुन्तला–ततः किं भवेत् ? संनिहितः किं कुर्यादित्यर्थः । लेशनामायमलंकारः ।

यद्वाक्यं वाक्यकुशलैः सुश्लिष्टार्थं प्रयुज्यते ।
नैपुण्यो(?)द्घाट्यते यत्र स लेशः परिकीर्तितः ॥

सख्यौ–जीवितसर्वस्वेनापि इममतिथिविशेषं जनं कृतार्थं कुर्यात् । जीवितसर्वस्वं फलमूलादिकमथ च तस्य त्वमेव । संनिहितः स त्वामस्मै परिणेष्यतीति भावः । विशेषः सौन्दर्यादिगुणसाचिव्यमिति । शकुन्तला—अपसरतां दूरं गच्छताम् । किमपि हृदये कृत्वा मन्त्रयेथाम् । न युवयोर्वचनं श्रोष्यामि । भवत्यौ मामेवोपहसतः । सखीगतं शकुन्तलाविषयकम् । आर्य अनुग्रहेऽप्यभ्यर्थना । भवता यः प्रश्नः कर्त्तव्यः सोऽनुग्रहः तत्र काभ्यर्थनेत्यर्थः । अत्रभवान् मान्यः शाश्वते सदातने तपसि वर्तते तस्य स्त्रीपरिग्रहराहित्यात् अपत्योत्पत्तिर्न भवतीति भावः । अनुसूया—शृणोत्वार्यः । अस्ति कौशिक इति कुलक्रमायातं नाम गोत्रमपि तस्य कौशिकनाम्नैव ख्यातम् । महाप्रभावो राजर्षिः ख्यातः । तं शकुन्तलायाः प्रभवं पितरं अवगच्छ जानीहि । "स्याज्जन्महेतुः प्रभव" इति शाश्वतः । उज्झितशरीरसंवर्धनायाः । त्यक्तशरीरपरिपालनेन तातकण्वः अस्याः शकुन्तलायाः पिता । जन्मावसरे मातापितृभ्यामियं त्यक्ता ततः कण्वेन पोषिता तेनास्याः स पिता इत्यर्थः । तदाह आदिपर्वणि कण्वः—

निर्जने विपिने रम्ये शकुन्तैः परिवारिता ।
आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम् ॥
शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥

एवं दुहितरं विद्धि ममापि च शकुन्तलाम्।
शकुन्तलापि पितरं मन्यात् सा मामनिन्दिता ॥

उज्झितेति कथं केन वोज्झिता सेति भावः। अनुसूया—शृणोत्वार्यः। किल प्रसिद्धौ। पुरा किल राजर्षेरुग्रे तपसि वर्त्तमानस्य कृते जातशङ्कैरिन्द्रादिपद-ग्रहणे सशङ्कैर्देवैः कथं कथमपि मेनका नाम अप्सरा अनुप्रेषिता प्रस्थापिता। किमर्थं तत्राह। कीदृशी नियमस्तपः समाधिः तस्य विघ्नकारिणी। भयात्तस्या-स्तत्रागमनानध्यवसाये कथं कथमपीति। राजा अस्त्येतदिति। अन्यसमाधि-भीरवो भवन्त्येव देवा इत्यर्थः। सख्यौ–ततो वसन्तोदाररमणीये वसन्तेन उदारो महान् दुस्सह इति यावत्, उद्दीप्तस्मरशरविलसितत्वात्, रमणीयो मनोहरो विविधकुसुमप्रकाशकत्वात, यः समयो दिनादिस्तत्र उन्मादहेतुं अधैर्यजनकं तस्या मेनकाया रूपं प्रेक्ष्य दृष्ट्वा। लज्जामिति रहस्यनिवेदने। परस्तादिति। परवृत्तान्तः अत एवास्माभिरवगम्यत इत्यर्थः। अनुसूया—अथ किं स्वीक्रियालाप इति भावः। उपपद्यते अप्सरःसंभवत्वमिति भावः। मानुषीष्विति। अस्य रूपस्य संभव उदयः मानुषीषु कथं नु स्यात् भवेत् अपि तु अप्सरसमन्तरेणानुपमस्य अस्य रूपस्य नोदय इत्यर्थः। अर्थान्तर-न्यासमाह न प्रभेति। प्रभा हि तेजसो रूपमित्यागमः। तत्तु रूपं सौरचान्द्रादि तेजस एव नान्यस्य प्रभया तरलं चपलं ज्योतिस्तेजो वसुधातलात् नोदेति किंतु गगनादेरिति। "स्वरूपानूर्द्ध्वयोस्तलमि"ति रत्नकोषः ॥ २५ ॥

हन्त हर्षे। लब्धावकाश इति असवर्णनिश्चयादिति भावः। किंतु परिहासेन सहचरीकौतुकव्याहृतेन अर्थान्माधविकासेकावसरसमये उदारं मनोहरं वरप्रार्थनं स्वाम्यभिलाषं शकुन्तलायाः श्रुत्वापि मे मम मनः व्रतेन तपस्यया सह यद्द्वैधं, एषा व्रतमेव करिष्यति उत विवाहो वास्या भविष्यतीति प्रकारेण यद्द्विप्रकारत्वं तेन कातरं क्लिष्टं। चेत् व्रतमियमाचरिष्यति तदास्या कथं (?)लाभ इति भावः। प्रियंवदा-पुनरपि वक्तुकाम आर्यः। पुनरपि भवतो विवक्षोरिवाकार इति तर्कः। शकुन्तला सखीमङ्गुल्या तर्जयति। भवत्येव क्रमः कुमारिकाया यदन्तः प्रियजनकथाशुश्रूषुरपि बहिस्तदन्यथाकथ ?,मङ्गुल्या तर्जयति। शृङ्गाराभिव्यञ्जकोऽयं ललिताख्यो भावः। यदाह कविकण्ठहारे—

भ्रूनेत्रादिक्रियाशाली सुकुमारविधानवद् ।
हस्तपादादिविन्यासस्तरुण्या ललितं मतम् ॥

राजा—सम्यक् भद्रं उपलक्षितम् । प्रियंवदा—तेन हि स्वीकारे। "तेन हि स्वीकृतौ प्रोक्तस्तथा हेतुविधानयोरि"ति विश्वः । एष शकुन्तलारूपस्तपस्विजनः अविकारनियन्त्रणानियोगः । विकाराभावेन या नियन्त्रणा अवरोधस्तत्र नियोगोऽधिकारो यस्यास्तादृशो ज्ञात एव आर्येण । मादृशो जनो विकाररहित-स्तेन च स प्रश्नः कर्त्तव्यो यो विकारासम्पर्कीति भावः । यद्वा अविचारः पुरुषेण सहालापरतत्र नियन्त्रणा निषेधस्तत्र आज्ञा यत्रेति । राजा एतदिति । अविरुद्धमेव प्रष्टव्यमित्यर्थः । यद्वा एतदग्रे वक्तव्यमिति । वैखानसमिति । अनया, विखानसो नाम मुनिः तेन कृतं प्रोक्तं वा व्रतं वैखानसं तत्तु नियतारण्यवासरूपं, वराय प्रदानपर्यन्तं किं निषेवणीयं पालयितव्यम् । किं भूतं, कामक्रियानिवारकम् । आहो विकल्पे । हरिणाङ्गनाभिः समं निवत्स्यति । सहार्थे तृतीया । किं वा मृगयुवतीभिः समं चिरमिहैव तपोवने स्थास्यतीत्यर्थः । कीदृशीभिः, अतिशयितसमाननयनमाला(?)प्रियाभिः ॥ २६ ॥

प्रियंवदा—आर्य एष जनः धर्माचरणपरवशः तपःकरणपरतन्त्रः । यद्वा धर्माचरणमेव परः शत्रुः अस्वातन्त्र्यकारित्वात् । तस्य वशः आयत्तः । यद्वा धर्माचरणे परवशः मुनेरधीनस्तेनैव तपःकरणे नियुक्तत्वादिति । गुरोः कण्वस्यानुरूपो योग्यो यो वरो जामाता तस्मै दाने संकल्प इच्छा । "संकल्पः कर्म मानसमि"त्यमरः । एतावता न चिरमरण्ये तद्वासः किन्तु विवाहावधीति । "वरो जामातरि श्रेष्ठ" इति शाश्वतः । "आयत्ततायामायत्ते प्रभुत्वं च वशं विदुरि"त्यपि । "श्रेष्ठे शत्रौ परः स्मृतः" इति कोषः । योग्यवर-प्रदेयत्वश्रवणादसवर्णजत्वनिश्चयाच्च हृष्टहृदयो राजा हृदयमुद्दिशति । हृदय साकांक्षं भव । कुतः, सम्प्रति संदेहः संशयः तस्मिन् यो निर्णयो निश्चयः स जातः । यदिदं शकुन्तलारूपं वस्तु अग्निं ब्राह्मणीजन्यात्वेन आशङ्कसे तर्कयसि तत् स्पर्शक्षमं संपर्कयोग्यं रत्नं जातमिति शेषः न त्वग्निः ॥२७॥

शकुन्तला सरोषमिव कृतककोपा वदतीत्यर्थः । रोषश्च रौद्ररसे स्थायी भावः । अनुसूये—गमिष्यामि । किं निमित्तम् ? इत्थमुपहासविधया असंबद्ध-

प्रलापिनीं प्रियंवदामार्यायै गौतम्यै गत्वा निवेदयिष्यामि। अनुसूया—सखि न युक्तं आश्रमवासिनो जनस्यातिथिविशेषसत्कारमकृत्वा स्वच्छन्दतो गमनम्। अतिथेरातिथ्यमविधायातिथेयस्यान्यत्रगमनमनुचितम्। यदाह भृगुः—

अध्वश्रान्तमविज्ञातमतिथिं क्षुत्पिपासितम्।
यो न तं पूजयेद् भक्त्या तमाहुर्ब्रह्मघातिनम्॥

जिघृक्षुर्धर्तुमिच्छुः। अहो आश्चर्यं। चेष्टाया अनुरूपिणी सदृशी वृत्तिरिच्छा। अहं हि यतो मुनितनयां शकुन्तलां गत्वेव पुनः प्रतिनिवृत्तोऽस्मि। अहं कीदृशः, स्वस्थानादचलन्नपि अगच्छन्नपि। गमनाचलनयोर्हेतुमाह। अहं कीदृशः, मुनितयया एवानुयास्यन् अनुगन्तुमिच्छन्, अतो गमनम्। सहसा हठेन विनयेन कुलमर्यादया वारितः प्रसरो गमनप्रसङ्गो यस्य तादृशः, अतोऽचलनमिति ॥२८॥

प्रियंवदा—सखि चण्डि कोपने! न लभ्यते गन्तुम्। शकुन्तला सभ्रूक्षेपम्। अत्र ललितो हावः। यदाह "सुकुमाराङ्गविन्यासो मसृणो ललितो भवेत्।" किमिति कथं मया न गन्तव्यमित्यर्थः। प्रियंवदा–द्वे मह्यं वृक्षसेचने धारयसि। पूर्वं त्वद्वचनेन घटीद्वयं पयो मयोद्धृतमित्यर्थः। ताभ्यां तावदात्मानं मोचय ततो गमिष्यसि। राजा परिश्रमाभिव्यञ्जकं रूपं स्फोरयति तथाहीति। अस्याः शकुन्तलायाः बाहू भुजौ अद्यापि जलदानानन्तरमपि स्रस्तांसौ पतितस्कन्धौ। कुतः घटोत्क्षेपणात् ऊर्ध्वं कृत्वा वितरणात्। अतिमात्रमतिशयेन लोहिततलौ अतिलोहितभुजोदरौ। क्वचिल्लोहिततराविति पाठः स तु सुगमः। प्रमाणाधिकः गुरुः श्वासः स्तनवेपथुं कम्पं जनयति। घर्माम्भसा स्वेदजलेन वदने जालवत्त्वं। जालकं समूहः। वदनं घर्मोदकैर्विन्दुकितमित्यर्थः। "जालकं कोरके हंस" इति विश्वः। किंभूतं तत्, कर्णशिरीषरोधि कर्णस्थं यत् शिरीषकुसुमं तदवरोधकं घर्मोदकेन तस्य स्थिरीकरणादिति। मूर्धजाः केशाः बन्धे स्रंसिनि मुक्ते सति पर्याकुलाः विकीर्णाः। कीदृशाः, एकेनैव हस्तेन यमिता बद्धाः। "मूर्धजः कुन्तलो वालः" इति। अनुमानालंकारः ॥२९॥

उभे नामाक्षराणि "दुष्मन्तस्य" एवं रूपाणि अनुवाच्य पठित्वा अन्योन्यं अवलोकयतः। राजनामाङ्कितमङ्गुलीयकमनेन क्व प्राप्तमथवायमेव राजा

इत्याशयेन पश्यत इति । राजा—अलं निष्फलं अन्यथा संभावनया । असावेवेति राजशङ्का न कर्त्तव्या । राजप्रतिग्रहोऽयं राज्ञा अङ्गुरीयकमिदं मयि प्रतिग्रहो दत्त इति प्रतारणा । अथ च प्रतिगृह्यत इति प्रतिग्रह राज्ञः प्रतिग्रहो राजप्रतिग्रह इति प्रकाशः । उभे-तेन हि नार्हत्यङ्गुरीयकवियोगमार्यः । आर्यस्य वचनेनैवानृणा भवतु । यन्मह्यमियं धारयति तत्तव वचसैवास्याम-स्माभिर्दूरीकृतमिति भावः । अनुसूया—सखि शकुन्तले मोचितासि अनुकम्पिना आर्येण । जनान्तिकम्—

वर्जयित्वैकमन्योन्यं द्वाभ्यां यत् खलु पठ्यते ।
जनान्तिकं तत्कर्त्तव्यं त्रिपताककरेण तु ॥

अथवा महाराजेन । प्रकाशम् । ता तस्मात् कृतार्था त्वमिदानीमसि । शकुन्तल आत्मगतमनन्यप्रकाशं न इदं विस्मरिष्यामि यद्यहमात्मनः प्रभविष्यामि । यद्वा नकारः शिरश्चालने इदं राजकृतोपकाररूपं न विस्मरिष्यामि अपि तु स्मरिष्याम्येव । प्रियंवदा—किमिदानीं न गच्छसि ? शकुन्तला—इदानीमपि आर्यकृतोपकृतेरनन्तरमपि किं तवायत्तास्मि ? यदा मे रोचते तदा गमिष्यामि । राजा—आत्मगतम् । नु शब्दो वितर्के । स्यादिति संभावनायां लिङ् । किंतु अस्यां शकुन्तलायां यथा वयमनुरागभाजस्तथेयमस्मासु सानुरागा स्यादिति । लब्धावकाशः प्राप्तसङ्केतः । अत्र हेतुमाह । इयं मुनिसुता यद्यपि वचोभिर्मम वचनं न मिश्रयति सहालापं यद्यपि न विधत्ते तथापि भाषमाणे मयि अवहिता तत्परा सती कर्णं ददाति । कामं निश्चितं मन्मुखसंमुखी न तिष्ठति दृष्टिः पुनरस्याः भूयिष्ठं सातिशयं अन्यविषया अन्यसक्ता न किंतु मदालम्बनैव । तथा चैवंविधविविधवैदग्ध्यप्रकाशादियं मदनुरक्ता ज्ञायत इति अनुमानालंकारः ॥ ३० ॥

रसान्तरमाह । नेपथ्ये । सत्त्वरक्षायै प्राणरक्षार्थं । तादर्थ्ये चतुर्थी । "सत्त्वं प्राणेषु जन्तुष्वि"ति शाश्वतः । किल व्याजे । सज्जीभवन्तु मृगयाविहारी खेलनशीलः प्रत्यासन्नः निकटवर्त्ती । हेतुमाह तुरगेति । रेणुर्धूलिः आश्रमवृक्षेषु पतति । कीदृशः, घोटकखुरोत्खातः । पुनः कीदृशः, परिणतारुणप्रकाशः । क इव शलभा पतङ्गास्तेषां समूह इव । सोऽपि परिणतारुणप्रकाशो भवति ।

द्रुमेषु किंभूतेषु, विटपः शाखा तत्र निषक्तं सुश्लिष्टं जलार्द्रं स्तिमितं बल्कलं येषु तादृशेषु ॥ ३१ ॥

राजा—स्वगतम्। धिगिति खेदे। आश्रमावरोधादालापप्रत्यूहाच्च। तीव्रेति। नोऽस्माकं गजो धर्मारण्यं तपोवनं विरुजति भनक्ति। कीदृशः, स्यन्दनालोकभीतः रथदर्शनत्रस्तः। पुनः कीदृशः तीव्राघातात् निष्ठुरताडनात् अभिमुखो यस्तरुर्वृक्षस्तस्य स्कन्धे शाखानिर्गमदेशे भग्नो द्विधाभूत एको दन्तो यस्य तादृशः। भिन्नैकदन्त इति पाठे भिन्नः संबद्धः। कीदृशः प्रौढं आकृष्टं यद् व्रततिवलयं वलयाकृतिलता तस्य यदासञ्जनं कण्ठे आश्लेषस्तेन जातो वृत्तः पाशो ग्रीवागुणो यस्य तादृशः। पुनः कीदृशः, भिन्नसारङ्गयूथः। तपस्यायाः मूर्त्तः विहितविग्रहः सविग्रहः विघ्न इव। इव यथार्थे "इववद्वायथाशब्दा" इति दण्डी। "स्यन्दनो राजरथ" इत्यमरः ॥ ३२ ॥

राजा—अपराद्धोऽभियोज्यः। प्रतिगच्छामि परावृत्य गच्छामि। सख्यौ—महाराज अमुना हस्तिसंभ्रमेण हस्तिनस्त्रासेन पर्याकुलाः स्मः। ता तस्मादनुजानीहि अनुमन्यस्व नोऽस्मानुटजगमने पर्णशालाप्रस्थाने। अनुसूया—सखि शकुन्तले पर्याकुला व्यग्रा अस्मदनुसंधाने इत्यर्थः आर्या गौतमी भविष्यति। तदेह्यागच्छ। शकुन्तला गमनाशक्तिं रूपयित्वा प्रकाश्य हाधिक् हाधिक् ऊरुस्तम्भविकलास्मि संवृत्ता। शकुन्तलादर्शनलालसो राजा आह—स्वैरं लघु गच्छन्तु भवत्यः। गमनलाघवे हेतुमाह आश्रमबाधेति। सख्यौ—महाराज अविदितभूयिष्ठोऽसि अज्ञातस्वरूपोऽसि। ननु अहो राजन्! साम्प्रतं यदुपचारमध्यस्थतया पूज्यपूजाचरणशैथिल्येन अपराद्धाः स्म सापराधा भवामः तदिदानीं मर्षयिष्यसि तदेतत् क्षन्तव्यमित्यर्थः। असंभावितसत्कारं भूयः प्रत्यवेक्षणनिमित्तं सपरिहारमार्यं विज्ञापयामः। शकुन्तला—अभिनवकुशसूचीपरिक्षतो मम चरणः। कुरवकशाखाप्रतिलग्नं च मे अञ्चलम्। ता तस्मात् प्रतिपालयत मां यावदेनं चरणं बल्कलं च मोचयामि। राजा—भवत्वहमपीति। तया विनारण्येऽत्र किं स्थातव्यमिति भावः। यावदिति। अनुयात्रिकान् सेवकान् तपोवनस्य नातिदूरे अपि तु समीप एव निवेशयामि विलम्बयामि। खलु यतः शकुन्तलाव्यापारात् शकुन्तलाविविधचेष्टितात् आत्मानं निवर्तयितुं

न प्रभुरस्मीत्यर्थः। कुतस्तत्राह। शरीरं पुरः प्रथममेव गच्छति पश्चादर्थात् शरीरस्य चेतश्चित्तं धावति शकुन्तलां लक्ष्यीकृत्येत्यर्थः। किंभूतं चेतः, असंस्थितं अव्यवस्थम्। अत्रोपमामाह। केतोर्ध्वजस्य चीनांशुकमिव। यथा प्रतिवातं वाताभिमुखं नीयमानस्य केतोश्चीनं वसनं पश्चात् धावति केतुरग्रं गच्छति इति। उपमालंकारः॥ ३३॥

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्सरः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥

× × ×

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकाया-
माद्यो गतो मुनिसुताप्रविलोकनोऽङ्कः॥



# २

ततः प्रविशति विदूषकः। तल्लक्षणं भरते—

हास्यप्रधानवाक्येन कौतुकं वितनोति यः।
नायकस्य सदा प्रीतः कथ्यते स विदूषकः॥

स च नायकस्योपनायको भवति। यदाह—

विटो विदूषकश्चैव पीठमर्दस्तथैव च।
दन्तुरः पलितः कुब्जः खञ्जश्च विकृताननः।
काव्यहास्यं प्रकुर्वीत असंबद्धप्रभाषणात्॥ इति॥

राज्ञोऽयं विदूषकः। "अन्तःपुरचरो राज्ञः किंचिद्विद्यो विदूषकः"। निःश्वस्य वदति। हीमाणहे शब्दोऽव्ययं प्राकृते खेदे। यदाह भरतः "हीमाणहे भये खेदे"। भो हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यस्य भावेन चेष्टितेन निर्विण्णः अस्वस्थः। निर्विण्णत्वे हेतुमाह। अयं मृगोऽयं वराह इति मध्यंदिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्यते। अतः संचरतो मम न च्छायोपलम्भः। पत्रसंकरकषायविरसानि पत्राणां यः संकरः शुष्कपत्रैर्यत्सांकर्यं मिलनं तेन कषायाणि अत एव विरसानि पीयन्ते खाद्यन्ते। अनियतवेलं च सोष्णमांसभूयिष्ठम् अद्यते भुज्यते अन्नमित्यर्थः। तुरगगजानां च शब्देन रात्रावपि निःशङ्केन स्वपितं नास्ति। महत्येव प्रत्यूषे दास्याःपुत्रैरामिषलुब्धैः कर्णोपघातिना श्रवणकटुना वनगमनकोलाहलेन प्रबोध्ये। एतत्सर्वं च नाशहेतुः। तथा च वैद्यके—

ग्रीष्मे न पथ्यं कटुतिक्तमुष्णं क्षाराम्बु सोष्मं भ्रमणं व्यवायः।
उन्निद्रता भास्करतप्ततोयस्नानाम्बुपानं दधितक्रमांसम्॥
अत्यम्बुपानाद् विषमाशनाच्च संधारणात् स्वप्नविपर्ययाच्च।
कालेन साम्यं गुरु चापि भुक्तमन्नं न पाकं भजते नरस्य।

दास्याःपुत्रैरिति "षष्ठ्या आक्रोशे" इति षष्ठ्या अलुक्। एतावतापि न खलु पीड़ा पर्यन्ता (संपूर्णा) न याता यतो गण्डोस्योपरि पीडिका विस्फोटिका संवृत्ता। देश्यामपि पीड़ाशब्दो विस्फोटवाचकः। "गण्डस्योपरि यो गण्डः स विस्फोटक उच्यते।" ही ही शब्दो विस्मये। यतः सर्वेष्वस्मासु अवहीनेषु पश्चात् पतितेषु तत्रभवता मान्येन मृगानुसारिणा आश्रमपदं प्रविष्टेन ममाधन्यतयाऽभाग्येन शकुन्तला नाम कापि तपस्विकन्यका दृष्टा। तां प्रेक्ष्य साम्प्रतं नगरगमनकथामपि न करोति। एतदेव चिन्तयतोऽद्य पुनः सत्यं ममाधन्यायाः पुत्रस्याक्ष्णोः सुप्रभाता रजनी। का गतिः कः प्रकारः कर्त्तव्यः। यावदेनं कृताचारं प्रियवयस्यं प्रेक्षे। एष बाणासनहस्तः। बाणोऽस्यते क्षिप्यतेऽनेनेति बाणासनं धनुः। हृदयनिहितप्रियतमः पुष्पमालाधारी इत एवागच्छति प्रियवयस्यः। भवतु, अङ्गभङ्गविकलो भूत्वा तिष्ठामि। एवं (अपि) नाम विश्रामं लभे।

यथानिर्दिष्टो धनुःपुष्पमालाधारी सखेदश्च राजा आत्मगतम्। कामं निश्चितं प्रिया शकुन्तला न सुलभा। पुनर्मम मनः तद्भावदर्शनाश्वासि तस्याः यो भावः शृङ्गारचेष्टाविर्भावस्तस्य यद्दर्शनमवलोकनं तेन समाश्वासि प्रबोधि। यदि दुर्लभैव सा तदा तल्लाभाय कथं यत्नस्तत्राह उभयप्रार्थना नायकनायिकाप्रार्थना न त्वेकप्रार्थना। यदाह—

पूर्वं नारी भवेदुत्का पुमान् पश्चात्तदिङ्गितैः।
ततः संभोगलीलेति स्वभावसुभगा स्थितिः॥
रक्तापरक्तवृत्तिश्चेन संभोगाभास एव सः। इति॥

अकृतार्थे न कृतः अर्थो मोहनादिशरव्यापारो येन तादृशेऽपि कन्दर्पे रतिरात्मीयास्मकावलोकनाद्युद्भवा प्रीतिस्तां कुरुते। कश्चित्तु रतिरुभयप्रार्थनां कुरुत इति योजयति। अत्र राज्ञस्तृतीयानुस्मृतिरूपा कामावस्था। यदाह भरतः—

मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः।
नैवाशने न शयने न हृष्यति न तिष्ठति॥

एवमिति। रतिरेव ममाभिलषितस्य निर्वाहं विधास्यतीति। य आत्मनोऽभिप्रायस्तेन संभाविता शङ्किता इष्टजनस्य मनोगतव्यक्तेश्चित्तवृत्तिर्मनोगत-

प्रकाशो येन एवंभूतः प्रार्थयिता याचकः विप्रलभ्यते प्रतार्यते। लक्षणं चैतत् मदनशरजर्जरितचेतसः यत् प्रकाशिताभिलाषस्याभिलषितजनस्यान्यपरमन्यालापमात्मपरमेवाशङ्कते। तत्रैवोपोद्लक्षणं च स्निग्धमिति ॥ किल निश्चये उत्प्रेक्षायां वा। तत् सर्वं मत्परायणं मद्विषयकम्। तत् किं ? स्निग्धं यथा स्यात् एवं वीक्षितम्। स्निग्धेयं दृक्। यथा—

सहर्षा साभिलाषा च मधुरान्तर्विकासिनी।
स्मेरभावा भवेद् दृष्टिः स्निग्धा रत्याख्यभावजा ॥

यच्च तया मन्दं लघु चलितं, कुतः, जघनगौरवेण विलासादिव, यदाह—"गतिः सधैर्या दृष्टिश्च विलासः सस्मितं वचः।" यत्तया सासूयं सकोपं उक्ता सखी। असूया हि शृङ्गारे संचारिभावः। किंभूतया, मा गाः न गच्छेः यातुं न प्राप्तव्यमिति यावत्। उपरुद्धया सख्या कृतगमनरोधया (बाधया वा)। अहो कन्दर्पः स्वतां आत्मीयतां मत्कृते एव सर्वमिदमिति कृत्वा पश्यति। अर्थान्तरन्यासः ॥ २ ॥

विदूषकः—भो राजन् मे मम हस्तौ न प्रसरति हस्तौ न ममायत्तौ इत्यर्थः। अतो वाङ्मात्रेण ज्ञाप्यते। यत् त्वन्यदा हस्तमुत्तोल्य शुभाशंसनं भवतः करोमि सम्प्रति हस्तस्यानायत्तया वचोमात्रेणैव जययुक्तः कार्यः। अत्रास्वरसो न कर्त्तव्य इति भावः। कुतः किल ? स्वयमेवाक्षिणी आकुलीकृत्य अश्रुकारणं पृच्छसि ? यथा कोऽपि कस्यचिन्नेत्रयोरङ्गुल्यादिकं प्रवेश्य पृच्छति भवतश्चक्षुषोरश्रु कथमायाति तथा त्वमपीति। भिन्नार्थं व्यक्ताक्षरेण कथ्यतामित्यर्थः। यथा वेतसलता कुब्जस्य लीलां विडम्बयति दधाति तत् किमात्मनः प्रभावेण। अथशब्दः पक्षान्तरे। नदीवेगस्य वा। तन्मयि कथयेति भावः। अत्र कुब्जश्च इति पाठे कुब्जकः "कुवलय" इति यस्य ख्यातिः। यदाह–"कुब्जेवाच्ये भवेत् सत्त्वं ना पुष्पे कुब्जवाचिनी"ति (?)। ममापि भवानिति। गात्रभङ्गे भवानेव हेतुरित्यर्थः। कारणं विशदयति। युक्तं नाम एवं चिरकालं व्याप्येति भावः। त्वया राजकार्याणि तादृशं चास्खलितपदप्रदेशं उज्झित्वा वनचरैकवृत्तिना भवितव्यम् ? किमत्र मन्त्र्यताम्। किं वक्तव्यमित्यर्थः। अहं पुनर्ब्राह्मणः श्वापदशकुनिकानुधावनैरात्मनो गात्राणामनीशः संवृत्तः। तस्मात् प्रसीद मेऽद्य।

एकाहमपि तावद् विश्राम्यतु आर्यः। निरुत्सुकतायां वीजमाह। न नमयितुमिति। इदं धनुर्मृगेषु हरिणेषु नम्रीकर्तुं न उत्सहिष्ये न संतुष्यामि (?)। किंभूतं, आहितशायकमर्पितशरम्। यैर्मृगैः सहवसतिं प्राप्य शकुन्तलायाः लोचनकान्ति-संविभाग इव कृतः। शकुन्तलानयनदैर्घ्यादिकान्तिरङ्गित्वेन विभज्य गृहीते-त्यर्थः। संविभागोऽर्धवण्टनमिति ॥ ३ ॥

विदूषकः—अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते। अरण्ये खलु मया रुदितम्। राजा—किमन्यत् कर्त्तव्यम्? तदिति। अनतिक्रमणीयत्वात् भवद्वाक्यं कर्त्तुमेवार्हत्येव विमृष्यत इति भावः। तेन हि स्वीकारे। चिरं जीव। राजा—शृणु सावशेषं वचः। अपरमपि ते कथनीयमस्तीति भावः। सहायेन द्वितीयेन। किं मोदकखादने? यदाह—

> यो येन भावेनाविष्टः सुखदेनेतरेण वा।
> स तदाहितसंस्कारः सर्वं पश्यति तन्मयम्॥ इति॥

गृहीतः प्रणयः। प्रणयो याच्ञा। "प्रणयः प्रेम्णि विश्वासे याच्ञा-विश्रम्भयोरि"ति विश्वः। कर्त्तव्यैवाज्ञा भवत इति भावः। दौवारिकः-आज्ञापयतु भर्ता। "भट्टेति सार्वभौमस्तु वाच्यः परिजनेन त्वि"ति भरतः। रैवतको दौवारिकः। मृगयाप्राशस्त्यमाह। "राजा भट्टारको देव" इत्यमरः। देवो राजा गात्रं विभर्ति मृगयाया इति शेषः। किंभूतं तत्, प्राणाः सारा यत्र तत्तथा। अपचितमपि कृशमपि व्यायतत्वात् दैर्घ्यात् अलक्ष्यं दुरूहम्। क्लेशा-लेशैरायासलवैरभिन्नं असंबद्धम्। अनवरतमनेकवारं धनुषः ज्यायाः यत् आकर्षणं तेन क्रूरः सर्वः पूर्वभागो यस्य तत्तथा। गिरिचरः पर्वतविहारशीलः नागो हस्तीव। सोऽप्येवंविधो भवतीति। "मतङ्गजो गजो नाग" इत्यमरः। हेतुरयमलंकारः ॥ ४ ॥

दौवारिकः—एत्वार्यः। एषोऽनुवचनदत्तकर्णो भर्त्ता त्वामेव प्रतिपालयति अपेक्षते। अनुवचनं प्रत्युत्तरम्। तस्मादुपसर्पत्वार्यः। जयतेरनभिधाना-दित्युत्वप्रतिषेधः (?)। प्रचर्यते गम्यते अनेनेति प्रचारः पन्थाः गृहीतो ज्ञातः। मृगस्य प्रचारो निःसरणप्रवेशनरूपः पन्था यस्य अरण्यस्य तथाभूतं सूचित-श्वापदं लक्षितव्याघ्रादिकमरण्यमिति। मृगयाप्रतिबन्धको न। विदूषकः—

अत्रभवान् मान्यो राजा प्रकृतिमापन्नः त्यक्तमृगयोद्यम इत्यर्थः। तर्हि किं कर्त्तव्यमिति सेनापतेर्हृदयमाशङ्क्याह। त्वं तावद्दास्याः पुत्रकः अटवीमरण्यं आहिण्ड्य भ्रम यावत् शृगाललोलुपस्य कस्यापि जीर्णभल्लूकस्य मुखे निपतितोसीति। "ऋक्षाच्छभल्लभल्लूका" इत्यमरः। पुत्रकेत्यत्र निन्दायां कन्। चित्तवृत्तिमिति स्वामिनोऽभिप्रायमाकलयामीति भावः। वैधेयो मूर्खः। "मूर्खवैधेयवालिशा" इत्यमरः। प्रलपत्विति। "प्रलापोऽनर्थकं वच"इति। आखेटकस्योपादेयत्वमाह मेदश्छेदेति। मृगयां व्यसनमप्रयोजनं मिथ्या असत्यं वदन्ति अर्थाज्जनाः यतः ईदृक् मृगयातुल्यो विनोद आनन्दः कुतः कस्मादपि तु न कुतोऽपीत्यर्थः। यतो मृगयायां वपुः शरीरं लघु भवति। कथं लघु, तत्राह मांसह्रासकृशोदरं दृढास्थीत्यर्थः। अत एवोत्साहयोग्यम्। भयक्रोधयोः भये क्रोधे च सत्त्वानां सिंहादीनां चित्तं मनः विकृतिमत्सविकारं लक्ष्यते। भये भीतं क्रोधे रुष्टं च दृश्यत इत्यर्थः। धनुर्धराणां स च उत्कर्षः प्रतिष्ठा यत् चलेऽस्थिरे लक्ष्ये भेद्ये इषवो बाणाः सिध्यन्ति सफला भवन्ति। अप्रस्तुतप्रशंसालंकारः। यदाह, "अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः। कुतोपि हेतोरि"त्यादि ॥ ५ ॥

राजा—नाभिनन्दामीति ऋष्याश्रमे मृगयाप्रस्तावस्याकर्त्तव्यत्वादिति भावः। प्रस्तुतसमये कर्त्तव्यतामाह। इदानीं तावत् महिषा निपानसलिलं जलाशयसमीपस्थगर्त्तजलं गाहन्ताम्। उत्सर्गतो दंशादिभिया पङ्कमयाम्भःपल्वलादिपतनशीला महिषा भवन्तीति निपानपदभावः। किंभूतं, मुहुरनेकवारं विषाणैः शृङ्गैराहतं ताडितम्। "विषाणं करिणां दन्तो विषाणं शृङ्गमुच्यते" इति शाश्वतः। मृगकुलं च रोमन्थमभ्यस्यतु। भुक्तस्य पुनराकृष्य चर्वणं रोमन्थः। पल्वले अल्पसरसि वराहपतिभिः सूकरमुख्यैर्मुस्ताक्षतिः मुस्तालुण्ठनं क्रियताम्। इदमस्मद्धनुः कार्मुकं विश्रामं लभताम्। आरण्यकहिंसादिकर्मणः स्वास्थ्यमनुभवत्विति। किंभूतं धनुः, शिथिलज्याबन्धं लम्बितपतञ्चिकमित्यर्थः। निपिबन्त्यस्मिन्निति निपानं उदकाधार उच्यते। निपानमाहाव इति सूत्रेण साधु। "आहावस्तु निपानं स्यादुपकूपजलाशय" इत्यमरः। शृङ्गैर्मुहुस्ताडितमिति जातिः। यदाह—

नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्द्विधा ।।

केचिदत्र महिषा–मृगकुलमिति प्रथमान्तेन रीतेरुपक्रमाद् वराहपतिभिरिति तृतीयया रीतिपरित्यागात् पुनर्धनुरिति पूर्वरीतिपरिग्रहात् माधुर्यव्यत्ययेन रीतिभङ्ग इति । तन्न । न ह्यत्र प्रथमान्तेन माधुर्यं प्रतीयते येन तत्परित्यागेन विवक्षितरीत्यनिर्वाहे दोषः स्यात् । अविवक्षितनिर्वाहेनापि तत्त्वेऽतिप्रसङ्गात् । न चात्र रूपेणोपादीयमानेषु कर्तृपदेषु श्रुतिसाम्यं प्रतीयत एवेति विवक्षितैव रीतिरिति वाच्यम् । तथा सति मृगा इत्येव कुर्युर्नमृगकुलमिति । तदेतदाचार्य-दत्तदूषणमपि निपुणमतिभिर्विभाव्यम् । वस्तुतस्त्वत्राभिहितानाभिहितकर्तृ-निर्देशात् क्रमभ्रंशो न दोषः कर्तृमात्रनिर्देशेनैव क्रमारम्भात् । अभिहितत्वा-नभिहितत्वयोर्विकल्पायातत्त्वे(ना)न्यथासिद्धत्वात् । यद्वा अस्त्वभिहित-कर्तारं निर्दिश्यानभिहितकर्तृनिर्देशात् क्रमभ्रंशो दोषः । किं त्वत्र क्रम एव न निष्पन्नः कुतस्तद्भ्रंशो भवेत् । बहुभिः क्रमसिद्धेर्लौकिकत्वात् तस्य चान्ततस्त्रि त्वप्रथमावधिकत्वात् । केचित्तु तृतीयचरणं पाठान्तरयन्ति "विश्रब्धा रचयन्तु कोलपतयो मुस्ताक्षतिं पल्वल" इति ।। ६ ।।

पूर्वगानग्रगान् धनुर्धरान् निवर्त्तय । सैनिकानां तपोवनपरिहारे वीजमाह शमेति । हि यतः तपोवनेषु गूढं संगुप्तं दाहक्षमं तेजोऽस्ति । कीदृशेषु, शान्ति-प्रधानेषु । तेषां बहिश्शम एवोपलभ्यते अन्तः पुनर्दहनक्षमं तेजश्च । अर्थान्तर-न्यासमाह—सूर्यकान्तमणयः स्पर्शसुखदा भवन्ति अन्यतेजसा पुनर्दहन्ति । अन्यतेजसा सूर्यतेजसा योऽभिभवः शैत्यराहित्यमतितप्तत्वापत्तिस्तया दाहं कुर्वन्तीत्यर्थः ।। ७ ।।

विदूषकः–भो उत्साहहेतो निष्क्रम । मृगयावेषः धनुःसन्नाहादिधारणरूपः । स्वनियोगं द्वारपालाधिकाररूपं अशून्यं कुरु । विदूषकः—कृतं भवता निर्मक्षिकं निर्जनं तस्मादेतस्मिन् पादपच्छायाविरचितवितानसनाथे शिलातले उपविशतु भवान् यावदहमपि सुखासीनो भवामीति । "वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकमि"ति मेदिनी । एत्वेतु भवान् । उभौ राजा विदूषकश्च । चक्षुःफलं अपूर्ववस्तुदर्शनरूपं परं श्रेष्ठम् । विदूषकः—ननु भवानेवाग्रतो मम तिष्ठति ।

भवतोऽन्यः कः परः श्रेष्ठः ? अपि तु न कोऽपि। तवालोकनेनैव द्रष्टव्यानां परं दृष्टमिति भावः। अभेदेनाह आत्मानमिति। प्रियस्य कोऽपि मन्दं न वदतीति भावः। आश्रमाभरणभूताम्। "भूषावाजिप्रभावेषु ललामं च ललाम चे" ति विश्वः। विदूषकः—भवतु नास्य प्रसरं वर्धयिष्यामि शकुन्तलामधिकृत्य अनेन सममुत्तरोत्तरं न करिष्य इत्यर्थः। भो यतस्तपस्विकन्यका अनभ्यर्थनीया तत्किं तया दृष्टया यतो दुर्लभे वस्तुनि न कोऽपि यतत इति भावः। राजा पृच्छति, मूर्ख ! जनः चन्द्रकलां केनाशयेन पश्यति तत्कथयेति भावः। ननु इन्दूदये सति वर्त्मादिप्रदर्शनप्रसङ्गः स्यात्तत्राह नवामचिरोदितां प्रकाशकरणाक्षमां निर्निमेषाभिः केवलं तत्र सौकुमार्यावलोकनसुखेन जनस्तामवलोकयति इति तद्वदिहापीति। "भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्तुषु।" समासोक्तिरलंकारः। यदाह दण्डी—

वस्तु किंचिदभिप्रेत्य न्यसनात् तत्सधर्मणः।<br>
उक्तिः संक्षेपरूपत्वात्समासोक्तिरिहेष्यते ॥ ८ ॥

परिहार्ये त्याज्ये अनुपादेय इति यावत्। उपादेयत्वमाह ललितेति। किल निश्चितं मुनेरपत्यं शकुन्तलारूपं मनोहरा या अप्सरा मेनका तद्भवम्। किंभूतं, उज्झितं त्यक्तमनन्तरमधिगतं प्राप्तं अर्थात् कण्वेन। सा शकुन्तला प्रसूय मेनकया परिहृता। अथ परमकारुणिकेन कण्वेनानन्यगतिरियमिति स्वस्थानं प्रापिता परिपालिता च तेन। तस्य सा पोषिता पुत्री क्षत्रकलत्रयोग्येति स्फुटार्थः। अत्रोपमामाह। किमिव, अर्कस्य रवेरुपरि च्युतं पतितं नवमालतीकुसुममिव। अर्कप्रायो मुनिः नवमालतीकुसुमप्राया शकुन्तला। कश्चिदर्कस्य अर्कपुष्पस्येति व्याचष्टे तत् कुव्याख्यानम्। उपमालंकारः ॥ ९ ॥

विदूषकः। विहस्य। तल्लक्षणं।

आकुञ्चिताक्षिगण्डं च सस्वनं मधुरं तथा।<br>
कालागतं सानुरागं नृणां विहसितं भवेत् ॥

भो यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिडाभिलाषो भवति तथा स्त्रीरत्नपरिभोगिनो भवत इयमभ्यर्थना। अवादीरुक्तवानसि। तत् खलु रमणीयं मनोहरं यद् भवतो विस्मयमाश्चर्यमुत्पादयति। राजा—किं बहुना ? तत्-

सौन्दर्यकला श्रोतुं परं पार्यते न निर्वक्तुमिति भावः। उत्कर्षयति चित्त इति। सा शकुन्तला मे मम अपरा द्वितीया स्त्रीरत्नसृष्टिः लक्ष्मीसृष्टिः प्रतिभाति। स्त्रीरत्नं च लक्ष्मी नाम–"जगदानन्दिनी पद्मा स्त्रीरत्नमच्युतप्रिया"। किं कृत्वा, स्रष्टुर्विधातुर्विभुत्वं सर्जनादिसामर्थ्यमिति यावत् तस्याश्च शकुन्तलायाः शरीरं जगद्विलक्षणमिति अनुचिन्त्याकलय्य। अन्यतो वैलक्षण्यमाह। चित्ते निवेश्य ध्यात्वा परिकल्पितसत्त्वयोगा आहितप्राणसंबन्धा। तथापि सृष्टस्य निश्चितकरसंपर्कत्वाद् भवत्येव किंचिद्वैसादृश्यमिति। कीदृशी, मनसा चेतसा कृता नु। विभुत्वान्मनसः सर्जने भवत्येवान्यतो वैलक्षण्यमिति। तथापि मनसो नीरूपतया कथं तस्यां तादृशरूपसंपत्तिस्तत्राह। रूपोच्चयेन कृतेत्यनुषङ्गः। तथापि यावत्तावद्रूपसंपत्त्या न तादृशरूपोत्कर्ष इति। विशेषणमेव विशेषयति—महता तादृशरूपसर्जनसमर्थेन। अत्र वितर्कस्य निष्पत्तिः। तल्लक्षणं तु "ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति।" यद्वा शकुन्तला स्त्रीरत्नसृष्टिः स्त्रीश्रेष्ठसृष्टिः प्रतिभाति। कीदृशी, अपरा न विद्यते परा श्रेष्ठा यस्यास्तादृशी यतः संभावनार्जनपरेण हृदयनिहितनिखिलजगतीरूपपरंपरेण प्रजापतिना निजवैभवविभावनायादृष्टचरसौन्दर्यशालिनी यत्नतः किल सैव सृष्टेति। उत्प्रेक्षालंकारः॥ १०॥

विदूषकः—सर्वथा प्रत्यादेश इति। प्रत्यादेशः खण्डनम्। निश्चितं तया निजसौन्दर्यमहिम्नाऽन्यरूपवतीरूपं खण्डितमित्यर्थः। जगदाभरणभूतां तपोधनतनयामालोक्य मनोभवभवाभिभवपरिभूतो राजा तदपूर्वरूपोपभोजकं जनं चिन्तयन् तामेवोत्कीर्त्तयति अनाघ्रातमिति। तस्या रूपं सौन्दर्यं कर्तृ इह भुवि संसारे कं जनं भोक्तारं समुपस्थास्यति इति नाहं जाने। सर्वं विशेषणमत्र श्लोके रूपकमेव ज्ञातव्यम्। किंभूतं तद्रूपं पुष्पं पुष्पमिव। यथातिशयितसौरभतया पुष्पं सकलजनप्रमोदकं तथातिकान्तिमत्तया तद्रूपमपि। न तावत् पुष्पं तद्रूपतुल्यं भवितुमर्हतीत्यर्थः हस्तादिस्थितकुसुमस्य प्रायशो गृह्यमाणसौरभत्वात्। इदं तु रूपं कदाचित् केनचित् किंचिन्नोपभुक्तमिति पुष्पमेव विशेषयति। किंभूतं, अनाघ्रातं अगृहीतसौरभं हस्तत्रोटितमात्रमित्यर्थः। यद्वा अतिशयितसौरभतया निखिलनायिकामध्ये तस्य पद्मिनीत्वं प्रकटयति। यदाह भरतः—

मुखं हस्तौ च पादौ च पद्मतुल्यं बिभर्ति या ।
सर्वतः पद्मगन्धाढ्या पद्मिनी सा प्रकीर्तिता ॥

तथापि त्रोटितपुष्पस्य हस्तस्थितत्वात् मलिनिमा दृश्यते न च तद्रूपे मलिनतालेशोऽस्ति इति विशेषणान्तरमाह । किंभूतं, किसलयं नवपल्लवमिव अतिकोमलत्वात् । तथापि करसंपर्कजनितमलिनिमा पल्लवेऽपि तदवस्थ एवेति विशेषणमेच विशेषयति । किंभूतं किसलयं, कररुहैरलूनं नखैरखण्डितं शाखावस्थितमात्रमित्यर्थः । तथापि पल्लवस्य नानास्थानादुद्भवात् बहूनां सुलभता न तु तद्रूपं कुत्रापि केनचित् कदाचिदासादितमिति पुनर्विशेषयति । किंभूतं तद्रूपं, रत्नमिव । यथा बहुमूल्यं रत्नं बहुभिर्दुर्लभं तथामरनगरनारीरूपादप्यतिशयितमनोरमं तद्रूपं सर्वेषामपि दुर्लभमित्यर्थः । तथापि परिभुज्यमानरत्नस्य लौहशलाकाप्रस्तरादिसंघट्टनाद् विसदृशकरणादुपहततेजस्त्वं भवति न च तद्रूपस्य कदाचित् स्वल्पतेजोनाशशङ्केत्ति विशेषणमेव विशेषयति । किंभूतं रत्नं, अनामुक्तं अपरिहितं आकरादानीतमात्रमित्यर्थः । रत्नमिवेति स्त्रीणां मध्ये तद्रूपस्योत्कृष्टत्वं प्रकटयति । तथा च परीक्षायां—"जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते ।" तथापि बहुमूल्यस्यापि रत्नस्य माधुर्यादिरसानुपलम्भान्नीरसत्वं प्रतिभासते न च तद्रूपं तादृगिति पुनर्विशेषयति । किंभूतं तद्रूपं, मधु मध्विव । यथा मधु लवणादिरसमध्ये माधुर्यमेवोद्गिरति तथा शृङ्गाररसादिमध्ये तद्रूपं शृङ्गाररसमेवोद्गिरति । तथापि पुरातने मधुनि कदाचिज्जलसंपर्कादम्लत्वमेवानुभूयते न च तद्रूपे शृङ्गारादतिरिक्तं किंचिदप्यनुभूयत इति तदेव विशेषयति । किंभूतं मधु, नवं अनास्वादितरसं न आस्वादितो रसो माधुर्यादिरसो यस्य तत्तथा । तथाप्येतावत् सकलविशेषणं तद्रूपे न युज्यये अत्र सकलविशेषणं एकैकगुणाश्रयतामात्रं तदेकस्या एव शकुन्तलाया रूपं सकलगुणाश्रयमिति विशेषयति । किंभूतं तद्रूपं पुण्यानां फलमिव नानाजन्मोपार्जितानेकसुकृतानां परिणतिभूतं फलमिव तादृग्रूपं समुत्पन्नमित्यर्थः । तथापि सुकृतानामङ्गहीनतया फलं क्वापि क्षीणं भवति, न च तद्रूपे एकदेशभङ्गलेशोऽपि । अत एव अखण्डं सम्पूर्णम् । तथापि सुकृतविपाकता क्वचिद्दुःखमिलिता दृश्यते । एकत्र पुंसि धर्माधर्मपरिणतिरवगम्यते । न तादृगिदं सुकृतिरूपं फलं अनघं प्रत्यवायहेतुरहितं केवलं विपुल-

पुण्योपार्जितमित्यर्थः। रूपकनामायमलंकारः। यदाह दण्डी—"उपमैव तिरोभूतभेदा रूपकमिष्यते।" इयं तु राज्ञश्चतुर्थी गुणकीर्तनरूपा कामावस्था। यदाह—"चतुर्थे गुणकीर्तनमि"ति ॥ ११ ॥

विदूषकः—तेन हि लघु लघु त्वरयैव परिणयतु भवान् शकुन्तलामर्थात्। त्वरायां बीजमाह मा कस्यापि इङ्गुदीतैलचिक्कणशीर्षस्य तापसस्य हस्ते पतिष्यतीति। "शीघ्रे मनोज्ञे निस्सारे लघु कृष्णागुरुद्रुम"इति शाश्वतः। तपस्विनी अनुकम्प्या। राजा—परवती पराधीना यस्य अधीना स यस्य हस्ते दास्यति तत्र गमिष्यतीति भावः। यस्याधीना तत एव किं न प्रार्थ्यते इत्याह। असंनिहितगुरुजना। अथात्र प्रश्ने। भवन्तमन्तरेण भवन्मध्ये। "अन्तरा अन्तरेण द्वितीया"। कीदृशः पुनरस्या दृष्टिरागः? अनुरागपक्षे तद्विषये यत्नः कर्त्तुमर्हतीति भावः। स्वभावादप्रगल्भाः सहजतो धैर्यशालिन्यः। यदाह "उदात्ता निभृता चैव भवेत्तु कुलजाङ्गना।" अभिमुखमिति। तया मदनो न विवृतः न प्रकाशितः न संवृतो गोपितः तथा च मध्यस्थभावं नीत इत्यर्थः। कीदृशः, अतो हेतोर्विनयेन मर्यादया वारिता वृत्तिर्व्यापारो यस्य तादृशः। यतोऽभिमुखे संमुखस्थे मयि तया ईक्षितं विलोकितं संवृतं संकुचितम्। अन्यनिमित्तकथोदयं यथाभवत्येवं हसितम्। अन्यकथाव्याजेन हासः कृतः। हसितलक्षणं—

> उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ।
> किंचिल्लक्षितदन्तं च हसितं तद् विधीयते ॥

विशिष्य नावगतमस्माभिः स्मरविलसितमुत सहजचेष्टितं तस्या इति भावः। ज्ञापकनामालंकारः। "कारकज्ञापकौ हेतू" इति ॥ १२ ॥

विदूषकः—किं नु खलु दृष्टमात्रेणैव भवतोऽङ्कमारोहतु। अङ्कारोहणस्यावश्यंभावित्वात्। खलु निश्चये। किमुक्तिविशेषे। तथा च तल्लाभाय यत्नमाचरेति भावः। अपरमप्यनुरागद्योतकं रूपमाह मिथ इति। मिथः प्रस्थाने अन्योन्यगमने एकान्ते वा। "मिथोऽन्योन्यं रहस्यपी"त्यमरः। भूयिष्ठं बहुप्रकारं प्रकाशितो भावः विविधवैदग्ध्यं विभावितमित्यर्थः। तदेव विशदयति दर्भेति। सा तन्वी कतिचिद् त्रिचतुराणि पदानि गत्वा इत्युक्त्वा अकाण्डे

अनिमित्तं स्थिता। इति किं, कुशाङ्कुरेण चरणोऽर्थान्मम क्षतः खण्डितोऽस्ति। च पुनरर्थे। पुनर्विवृत्तवदना परावृत्तमुखी आसीत् मदवलोकनायेति भावः। कीदृशी, द्रुमाणां शाखासु असक्तमलग्नमपि वल्कलं विमोचयन्ती त्याजयन्ती। तन्वीति साभिप्रायम्। व्याजादेतदस्मादनुरागेण गमनशैथिल्यं कृतवतीति भावः। तथा च भरतः—

आकारेणात्मनो भावं या नारी तु प्रकाशयेत्।
क्षिप्रमेवानुरक्ता सा प्रथमे चापि दर्शने॥

समाधिरलंकारः। "व्याजावलम्बनं यत्तु तत्समाधिरिति स्मृतः"॥ १३॥

विदूषकः—गृहीतपाथेयो भवान् कृतस्तयेति। पाथेयं प्रवासभक्ष्यद्रव्यमिति यावत्। अनुरक्तं तपोवनमिति तर्कयामि। अन्योऽपि वनानुरक्तो गृहीतपाथेयो भवति। तपोवनानुरञ्जनचिकीर्षोर्भवतः शकुन्तलायाः सरभसविविधविलाससुधैव पाथेयो भविष्यतीति भावः। अपदेशो व्याजः। विदूषकः—कोऽपरोऽपदेशः? भवान् राजा सकलद्रव्यस्य षष्ठांशग्राहकस्त्वम्। तपोवनोत्पन्ननीवारषष्ठभागहारिता विद्यत एव भवतः। तथा च तत्प्रार्थनव्याजेनैव तपोवनं प्रविशेति भावः। अबुद्धाशयो राजा पृच्छति, ततः किमिति? विदूषकः—नीवारषष्ठभागं मे तापसा उपहरन्त्विति। राजा—पुण्यभागमिति। ......पुण्यभागमेव मयि ते ददतीत्यर्थः। ननु पुण्यभागं तिरस्कृत्य नीवारभाग एव कथं न गृह्यते तत्राह यदुत्तिष्ठतीति। नृपाणां तत् फलं त्वयि अचिरसमयनाशि यद् ब्राह्मणादिभ्यो लभ्यत इत्यर्थः। "वर्णाः स्युर्ब्राह्मणादय" इति। अरण्यवासिनस्तपस्विनः अक्षय्यं अविनाशि तपःषष्ठांशं ददति प्रयच्छन्ति। तथा च तत्र गमनाय योऽपदेशो भवता रचितः स हृदयंगमो न ममेति भावः॥ १४॥

नेपथ्ये अनायासेनैव राजदर्शनं वृत्तमिति हन्त हर्षे। कृतार्थौ भवावः आवामिति शेषः। राजा—धीरो धैर्यशीलः स्वरः प्रशान्तश्च तस्मात्तपस्विभिर्भवितव्यम्। दौवारिकः—जयति जयति भर्ता। एतौ खलु द्वौ मुनिकुमारौ प्रतीहारभूम्यामवस्थितौ। प्रतीहारभूमिः राजद्वारप्रदेशः। अविलम्बं शीघ्रम्। यद्भर्ता आज्ञापयति। मुनिभ्यां सह प्रविश्य दौवारिको वदति इत इत एत-

मागच्छतम्। एको मुनिकुमारः। दीप्तिमतोऽपीति। अस्मिन् तेजस्विन्यपि विश्वास एव परमुत्पद्यत इति भावः। उपपन्नमेव विश्वसनीयत्वमिति। ऋषिकल्पत्वं विशदयति। अमुना राज्ञा सर्वभोग्ये आश्रमे गार्हस्थ्ये वसतिरध्याक्रान्ता। रक्षायोगात् परिपालनकरणात् अयं राजा तपोऽपि संचिनोति। अस्य राज्ञः वशिनः संयमिनः राजपूर्वो मुनिरिति शब्दः द्यां आकाशमास्पृशति स्वर्गेऽप्येतत्कीर्त्तिरस्तीत्यर्थः। कथं तत्र गमनप्रसङ्गस्तत्राह चारणद्वन्द्वेन गन्धर्वमिथुनेन गीतः निश्चितममरनगरनायकसदसि यशोगानावसरेऽस्य यशः स्त्रीपुंसाभ्यामुच्चारितमित्यर्थः। व्यतिरेकनामालंकारः। यदाह दण्डी—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥ १५ ॥

द्वितीयो वदति। अथ किमिति। इन्द्रसख एवायमित्यर्थः। नैतदिति। तन्न चित्रमद्भुतं यदयं राजा एकोऽद्वितीयः श्रेष्ठो वा कृत्स्नां संपूर्णां पृथिवीं भुनक्ति। उदधिरेव श्यामा सीमा यस्याः उदधिना वा आसमुद्रामित्यर्थः। राजा कीदृशः, नगरस्य अर्गलवत् प्रांशू उच्चौ भुजौ यस्य तादृशः। सुरा देवाः समितिषु संग्रामेषु अस्य दुष्मन्तस्य अधिज्ये धनुषि पौरुहूते ऐन्द्रे वज्रे विजयं आशंसन्ते प्रार्थयन्ते। कीदृशाः, दैत्यैः सह सक्तवैराः। एतदुभयमेवावष्टभ्यासुरैः सार्धममरा वैरमाचरन्तीति तथात्वमस्योचितमेवेति। दीपकालंकारः। यदाह दण्डी—

जातिक्रियागुणद्रव्यवाचिनैकत्रवर्त्तिना।
सर्ववाक्योपकारश्चेत्तमाहुर्दीपकं बुधा इति ॥ १६ ॥

इहस्थ इति। आर्येण प्रदेशोऽयमलंक्रियत इति तपस्विभिर्ज्ञातमस्तीत्यर्थः। तत्रभवतः कुलपतेः कण्वस्य। नोऽस्माकम्। राजा—अनुगृहीत इत्युभयं प्रति। विदूषकः—अपवार्य निभृतम् अयमिदानीमनुकूलो गलहस्तो भवदभिलषितानुगुण एव मुनिकुमारप्रेरणमित्यर्थः। ऋषी सहर्षम्। निवेदनमात्र एव राज्ञो मत्क्रियातत्परतेति हर्षः। उपकारिणीति। सर्वेषामुपकारिणि त्वयि इदमार्तजनखेदापनोदकत्वम् अनुरूपं युक्तमेव। खलु यतः पौरवाः पुरुकुलोद्भवाः आपद्गतानां भयत्राणे दीक्षिताः कृतप्रतिज्ञाः। "आपन्न आपत्-

प्राप्तःस्यादि"त्यमरः ॥ १७ ॥

राजा गच्छेतामित्यादि। चरणसंचरणशीलाभ्यां ऋषिभ्यां सह रथारूढस्य मम गमनमयुक्तमिति भावः। अनुपदमिदानीमेव। विदूषकः-प्रथममपरिबाधमप्रत्यूहमासीत् साम्प्रतं राक्षसवृत्तान्तेन सप्रत्यूहं सविघ्नं कुतूहलमिति शेषः। मा भैषीः। एष तव रक्षीभूतोऽस्मि। तत्र त्वं मम रक्षको भविष्यसीति भावः। दौवारिकः—सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षत इति। एष पुनर्नगरात् देवीनां सकाशात् स्थानात् करभकनामधेयः परिजन आगतः। राजा—मातृभिः प्रहितः ? अज्जूकाभिरिति पाठे आर्याभिर्मातृभिरित्यर्थः। करभको वदति, एवं देव्य आज्ञापयन्ति। आगामिचतुर्थदिवसे पुत्रपिण्डपर्युपासनो नाम उपवासो भविष्यति तत्र दीर्घायुषावश्यं वयं संभावयितव्या इति। पुत्रपिण्डपर्युपासनः पुत्रदेहपुष्टिव्रतं पुत्तराजेति यस्य ख्यातिः। "पिण्डो बले देहमात्रे निवापे ना निगद्यते" इति मेदिनी। संभावनं सहावस्थितिः। उभयमपि तपस्विकार्य-मातृपार्श्वगमनरूपम्। विदूषकः—विहस्य भोस्त्रिशङ्कुरिवान्तरा तिष्ठ। अन्तराशब्दोऽव्ययो मध्यवाचकः। तपोवननिजनगरयोर्मध्ये तिष्ठ। पुरा किल कृतबहुतरमलिनकर्मा कश्चित्त्रिशङ्कुनामा राजा चाण्डालोऽभूत्। स च पौरोहित्येन विश्वामित्रेण त्रिदिवगमनौपयिकं कर्म कारितः। भुक्ते च मर्त्यभोग्ये ऋषिणा स्वर्गगमनायाज्ञप्तः। तत्र गतो देवैरपि कृतविपुलप्रत्यवायः कथमिहागमिष्यतीति निवारितोऽलब्धोभयत्रपदो ह्यन्तरीक्ष एव स तिष्ठतीति पुराणवार्त्ता। यदाह ] "त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपी"ति। व्याहाराख्योऽयं नाट्यालंकारः। यदाह—

साकूतं सावलेपं च यद्वाक्यं हास्यलेशतः।
प्रत्यक्षानुभवारूढं व्याहारः स तु कीर्त्तितः॥

आकुलत्वमाह कृत्ययोरिति। मे मम मनश्चित्तं द्वैधीभवति कृत्यद्वयाकुलं जायते। मातृपार्श्वं गच्छामि तपस्विस्थानं वेति पक्षद्वयेन द्वैधम्। उभयानुरोधः क्रियतां तत्राह कृत्ययोर्भिन्नदेशत्वात्। यद्येकस्मिन् देशे द्वयमपि कृत्यं भवति तदा संपद्यत एवोभयानुरोधः किन्तु नानादेशे नानाकृत्यमित्येकत्रगमने नापरत्र गमनमित्यर्थः। उपमामाह। स्रोतोवहां नदीनां स्रोत इव। यथा

नदीप्रवाहः वर्त्मद्वयेन गच्छति। किंभूतं पुरोऽग्रे शैलैः प्रतिहतं प्रतिबद्धम्। द्वैधीभवतीत्यत्र अभूततद्भाव इत्यादिना च्विः। उपमालंकारः॥ १८॥

विचिन्त्य अतिचपलस्य विदूषकस्य तत्र प्रस्थापनार्हत्वमितिशेषः। पुत्र इति। यतस्तासां त्वं पोषितपुत्रो भवसि अतस्त्वमितः प्रतिनिवृत्य तत्र गतः तपोवनकृत्याकुलतामस्माकं तासु निवेद्य तत्रभवतीनां मान्यानां पुत्रराजनामधेये पर्वणि विविध-बन्धन-मोदक-वसनादिग्रहणेन पर्वविस्ताररचनेन पुत्रकृत्यं निर्वाहयितुमर्हसीति स्फुटार्थः। विदूषकः—भो मा रक्षोभीरुकं मामवगच्छ। राजा—महाब्राह्मणत्वादेव कुतस्तव राक्षसत्रास इत्यर्थः। अथ च महाब्राह्मण इति प्रयुज्यत इति स्मितम्। विदूषकः—तेन हि यथा युवराजानुरूपेण गन्तव्यं तथा गच्छामीति। युवराजगमनरीत्या यदि मां प्रस्थापयसि तदा गच्छामीति भावः। राजा—तपोवनोपरोधस्त्याज्यः। अनुयात्रिकाननुगामिनः सैन्यानीति यावत्। युवराजोऽस्मि संवृत्तः युवराजसामग्रीसाचिव्यादित्यर्थः। कदाचिदिति। इमां शकुन्तलाविषयानुसंधानकथारूपां निवेदयेत्। अन्तःपुरस्त्रीभ्यः। न खल्विति। पूर्वं कौतुकात्तवाग्रे प्रकाशितः किन्तु स्वरूपमेवं, न तापसकन्यायां मम स्पृहा। निरभिलाषत्वमेव प्रकटयति क्व वयमिति। अत्यन्तासंभावनायां क्वद्वयम्। वयं क्व मृगशावैर्हरिणशिशुभिः सह वर्धितो जनः शकुन्तलारूपः क्व। कीदृशः, परोक्षमन्मथः अगोचरकामः। वयं तावद्राज्यभोगित्वान्मनोभवभाज इति भावः। इयमरण्यवासित्वादज्ञातशृङ्गारकला। तथा चावयोर्मिलनमसंगतमिति भावः। अतो हेतोः हे सखे! मम वाक्यं पूर्वकृतालाप इति यावत् परमार्थेन स्वरूपतया न गृह्यतां न त्वया ग्राह्यमित्यर्थः। किंभूतं, कौतुकभाषितम्। एवमेव सर्वथा न तत्र प्रकाशनीयमिति भावः॥१९॥

❀ × × ❀

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकाया-
मङ्को गतो मुनिसुताविरहो द्वितीयः॥



## ३

ततः प्रविशति यजमानस्य कण्वस्य शिष्यः, वदतीत्यर्थः। कुशान् गृहीत्वा, तपोधनस्योत्सर्गतस्तस्यैवोद्वहनशीलत्वात्। विचिन्त्य, राजप्रवेशे सति तपोवनवृत्तं वृत्तान्तमित्यर्थः। तत्रभवति मान्ये राज्ञि प्रविष्टमात्र एव नोऽस्माकं कर्माणि तपोवनानि निरुपप्लवानि। उपप्लवो राक्षसादिजनितोपद्रवः। हि यतः दूरात् ज्याशब्देनैव विघ्नान् निराकरोति। कथं शरसंधानमन्तरेण विघ्नव्यपोहस्तत्राह। धनुषि बाणसंधाने का कथा अपि तु तत्र कथैव न, कार्याभावात्। अत्रोत्प्रेक्षते। धनुषो हूंकारेणेव दूरतः अपनीयत इति। उत्प्रेक्षालंकारः ॥ १ ॥

राज्ञो रसान्तरावताराय स एव शिष्योऽशरीरिरूपमालम्ब्याकाशे वदति।

दूरस्थाभाषणं यत्स्यादशरीरं निवेदनम्।
परोक्षान्तरितं वाक्यं तदाकाशं निगद्यते ॥

अपरं च— किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वैवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥

प्रियंवदे। खेदाधिक्यात् द्विरुक्तिः। त्वरया कथयेति भावः। कस्य कृते उशीरविलेपनं वीरणकन्दानुलेपनं मृणालवन्ति बिसयुक्तानि नलिनीदलानि। आतपाभिभवात् बलवदस्वस्थशरीरा शकुन्तला। तस्या वपुःस्वास्थ्याय उपचर्यतां प्रतिक्रियताम्। कथं प्रतिकार्या इत्याह। यतः सा शकुन्तला मान्यस्य कण्वस्य उच्छ्वसितं प्राणाः। एतद्व्यतिरेकसंभावनायां मुनेरपि व्यतिरेकयोग्यतेति भावः। वैतानं वितानाख्ययागसंबन्धि शान्त्युदकं अस्या एव शकुन्तलाया एव विसर्जयामि उपनयामि। निष्क्रान्तः। प्रवेशकः—

विटतापसविप्राद्यैर्मुनिकञ्चुकिभिस्तथा।
प्रवेशकमपीच्छन्ति सन्तः संस्कृतभाषिभिः ॥

वस्तुप्रयोगबाहुल्यादङ्काद्यो न समाप्यते ।
बहुवृत्तान्तान्यकथैः स विधेयः प्रवेशकैः ॥

प्रवेशक एव विष्कम्भकः ।

यतः कुतश्चिदायातः संबन्धी नोभयोरपि ।
विष्कम्भकः स विज्ञेयः कथामात्रस्य सूचकः ॥



मदनावस्थ इति राज्ञोऽत्र उद्वेगरूपा पञ्चमी कामावस्था । यदाह भरतः- "उद्वेगः पञ्चमे प्रोक्त" इति । सचिन्तमिति केनोपायेन मम शकुन्तलालाभो भविष्यतीति चिन्ता । जाने तपस इति । ननु बलेन संगोपनेन वा कथं सा नानीयत इत्याह । तपसो वीर्यमिति तपस्यासामर्थ्यमर्थात् कण्वस्य जाने वेद्मि । बलसंगोपनहरणे शापादिना नाशं विधास्यतीति भावः । ननु शकुन्तलायामेव स्वाभिलषितमावेद्य मनोरथनिर्वाहः कार्यस्तत्राह सा बाला षोडशवर्षीया । "बालेति गीयते नारी यावत् षोडशवत्सरम्" । अथ च बाला शिशुः परवती पराधीना इति मे विदितं ज्ञातमस्ति । तर्ह्यौदास्यमेवावलम्ब्यतां तत्राह । मम हृदयं पुनस्ततः शकुन्तलाया न निवर्त्तते तत्रैवासक्तं भवतीत्यर्थः । निम्नात् सलिलं यथा न निवर्त्तते तद्वत् । उपमानामायमलंकारः । "सादृश्यमुपमा भेद" इति ॥ २ ॥

अथ स्वशराग्निस्फुलिङ्गोद्दीपितसकलदिशं मन्मथमुपालभते । भगवन्मन्मथ ! कुसुमायुधस्य सतस्ते तव कुतस्तैक्ष्ण्यमेतत् ? सर्वथा पुष्पायुधत्वेन त्वमुत्कीर्तितोऽसि । कुसुमे मार्दवं गुणस्तथा च तत्प्रहारोऽपि मृदुरेव भवितुमर्हति अनुभूयते च वैपरीत्यमिति भावः । आम्, स्मरणाभिनये बुद्धमित्यर्थः । ननूत्प्रेक्षायां निश्चये वा । हरकोपाग्निः त्वच्छरीरे अद्यापि ज्वलति । अम्बुराशौ समुद्रे वडवानल इव । कथमिदमवगम्यते । अन्यथा, न यद्येवं, तदा मद्विधानां वियोगिनां त्वमेवमुपलभ्यमानप्रकारेण कथमुष्णः अतितप्तः ? कीदृशः, भस्मीभूतोऽपि सन् । यश्चिरसमयभस्मत्वापन्नो भवति स नोष्णो भवति निरग्नित्वात् । उत्प्रेक्षालंकारः—"अन्यथावस्थितं वस्त्वित्यादि" । "और्वस्तु वडवानलः" । "नूनं तर्के तु निश्चये" ॥ ३ ॥

अभिसंधीयते प्रतार्यते। अविश्वसनीयाभ्यामिति। चन्द्रः शीतकर एव, कामः कुसुमशर एव, तथा चानुद्वेजकयोर्युवयोर्विषये सर्वेषां व्यवहारः। भवन्तौ तापशोषादिकरणेन विप्रतीपमेव कर्तुमुद्यताविति भावः। वाचनिकार्थमेव श्लोकेन स्फोरयति। हे मन्मथ तव कुसुमशरत्वं इन्दोः शीतरश्मित्वं मद्विधेषु कामिजनेषु विपरीतक्रियं दृश्यते। कथमिदमित्याह। चन्द्रः स्वमयूखैर्वह्निं विसृजति त्वमपि हर्षणप्रहसनादीन् वज्रवद्दृढप्रहारान् करोषि। तथा च नो भवान् कुसुमशरः न वा स शीतकर इति।

हर्षणः प्रहसनश्चैव मोहनो मूर्च्छनस्तथा।
विकर्षणश्च कामस्य शराः पञ्च प्रकीर्त्तिताः॥ इति भरतः॥

प्रहर्तुरपि मन्मथस्योपकारकत्वमाह अनिशमिति। अनिशमहर्निशं मानसीं व्यथां आवहन्नपि विदधदपि मकरकेतुः मे मम अभिमतः अङ्गीकृतः। अत्युद्वेजक एव स कथं पुनरभिमतस्तत्राह मदिरे सुन्दरे आयते दीर्घे नयने यस्यास्तां शकुन्तलामधिकृत्य उद्दिश्य यदि प्रहरति। तदुद्देश्यकत्वेनासमशरस्य विषमबाणप्रहारोऽपि परमप्रमोदकारक इत्यर्थः। केतुपदोत्कीर्त्तनेन स्मरस्यातिदुःसहत्वमुक्तम्॥५॥

अनुक्रोशः कृपा। तथा च हे अनङ्ग संकल्पशतैरिच्छाशतैर्ध्यानपरंपराभिरिति यावत्। अजस्रं बहुशः विवृद्धिं मया वृथैव नीतोऽसि यत्तव बाणत्यागः मय्येव युक्त इति उचितः। एवकारोऽन्ययोगव्यवच्छेदार्थः नान्यस्मिन्नित्यर्थः। किं कृत्वा कर्णान्तिकं धनुरानीय। "संकल्पः कर्ममानसमि"ति॥६॥

क्व नु खल्विति। खेदस्य सर्वथा निरसनीयत्वात्। खलु निश्चये। क्व नु कस्मिन् स्थाने। तपस्विभिरिति मदागमनमत्र सर्वैरेव ज्ञातमस्ति; तथा चावश्यमेव तैर्मदनुसंधानाय यत्नः कर्त्तव्यः अतस्तदागमबहिःस्थाने आत्मा विनोदयितुमर्हतीति भावः। ऋष्याश्रमसपर्याभिः कथं नात्मविनोदनं क्रियते तत्राह प्रियादर्शनात् शकुन्तलादर्शनादृते विना अन्यत् शरणमाश्रयः रक्षकमिति यावत्। मालिनी नदी, तत्रभवती शकुन्तला। गमयति प्रेरयति। विलोक्य शकुन्तलाचरणचिह्नमिति यावत्। वदति च। अनया बालपादपवीथ्या। "वीथ्यालिरावलिः पङ्क्तिरि"त्यमरः। बालतरुपङ्क्त्या तत्रभवती शकुन्तला

न चिरं गता। तत्र हेतुमाह संमीलन्तीति। यतो बन्धनकोषा वृन्ताभ्यन्तराणि न संमीलन्ति न संकुचन्ति। "वृन्तं प्रसवबन्धनमि"त्यमरः। कीदृशाः, तया शकुन्तलया अवचितपुष्पाः त्रोटितकुसुमाः। अमी पुरोवर्त्तिनः किसलयच्छेदाः पल्लवखण्डाः क्षीरस्निग्धाः दुग्धचिक्कणाः गलद्दुग्धा इति यावत्। चिरत्रोटनेन वृन्तसंकोचिता जायते अगलद्दुग्धतापि। अत्र तु विपरीतं दृश्यते। अन्यच्च। प्रायशस्तपोधनाश्रमे वलिकर्मानर्हस्य किसलयादेः खण्डनं सकलमुनि-दुर्लभायाः(?)शकुन्तलाया ऋते नान्यतः संभवति। सैवानेन पथा गतेति अनुमानालंकारः ॥ ७ ॥

अहो प्रशंसायाम्। प्रवातः प्रशस्तवातः। शक्य इति पवनः निर्दयं यथा स्यादेवं अङ्गैरालिङ्गितुं शक्यः। कीदृशः, अरविन्दसुरभिः पद्मगन्धिः। कीदृशः, मालिनी नदी तत्तरङ्गाणां शीकरवाहकः। एतावता वायोर्गुणत्रय-मुक्तम्। अङ्गैः कीदृशैः, मन्मथसंतप्तैः ॥ ८ ॥

विलोक्य शकुन्तलाचरणचिह्नमिति शेषः। चिह्नदर्शनादत्रावस्थितिं निश्चिनोति अभ्युन्नतेति। यतोऽस्य लतामण्डपस्य द्वारे पदपङ्क्तिर्दृश्यते। ननु पुरातनाया अपि पदपङ्क्तेस्तत्रभवनयोग्यतया कथमस्या इहेदानीन्तनावस्थाना-वगमस्तत्राह अभिनवा अव्यवहितकालीया। तथापि तत्रान्यमुनिकन्यकागता-गतप्रसङ्गात् कथं पङ्क्तेस्तदीयत्वावगमस्तत्राह। कीदृशी, पुरस्तादग्रतः अभ्युन्नता उच्छ्रिता। कीदृशी, पश्चाद्भागे अवगाढा यन्त्रिता। कुतः जघन-गौरवात्। किं तु(?)तदेकविश्रान्तमप्सरःसम्भवत्वात् तथा ,चावश्यमत्र सा भविष्यतीति। द्वारे कीदृशे, पाण्डुसिकते धवलवालुके। अयमत्र भावः-असमशरसंतप्तायास्तस्याश्चरणसंपर्कजातनीरसतया वालुकायाः पाण्डुत्वं पद्धतेर्व्यक्तत्वं चेति। अनुमानालंकारः। "नूतनोऽभिनवः प्रोक्तस्तत्कालकृत-रम्ययोरि"ति विक्रमादित्यः ॥ ९ ॥

राजा तथा कृत्वा विटपान्तरेण शकुन्तलावलोकनं विधायेत्यर्थः। नेत्रे निर्वाणं नयननिर्वृतिं चक्षुःसुखं "निर्वाणमपवर्गेऽपि निर्वाणं निर्वृतिं विदु"-रिति शाश्वतः। एषा मनोरथेन इच्छया परं प्रिया न तु प्रकारान्तरेण। अत एव चाक्षुषमेव परं सुखमनुभूयत इति भावः। विस्तृतकुसुमशयनं पाषाणखण्डं

अधिशयाना अधिरूढा सखीभ्यां उपचर्यते। विश्रम्भकथितं विश्वासभाषितम्। "विश्रम्भशब्दमिच्छन्ति विश्वासे प्रणयेऽपि चे"ति शाश्वतः। सख्यौ उपवीज्य व्यजनमिति शेषः। विपूर्व इज गतौ। हला शकुन्तले अपि सुभावयति ते तव नलिनीपत्रवातः। सुखयतीति वा। शकुन्तला शून्याभिनयमबुद्धवीजनं हस्तसंज्ञमिति यथा स्यादेवम्। किं मां वीजयतः प्रियसख्यौ? भवतीभ्यां मद्वीजनं क्रियते मया तु ज्ञायत एव नेत्यर्थः। यद्वा किं लोकोक्तौ। प्रियसख्यौ मां वीजयतः मयान्यकर्तृकवीजनं ज्ञातं भवतीभ्यां वीज्यते तन्नावगच्छामीत्यर्थः। यद्वा किमर्थं प्रियसख्यौ मां वीजयतः अत्याहितं किंचिन्मयि भूत्वा पतितमस्तीत्यपि न ज्ञायत इत्यर्थः। यद्वा भवतीभ्यामायासः परं क्रियते खेदान्मम वर्तनमेव न स्यादित्यर्थः। उभे सोद्वेगम्। आवाभ्यामेतदर्थमेतावानायासः क्रियते तज्ज्ञानमपि न सख्याः किमपरमावयोरपि न परिचय इति खेदः। तत्रभवती शकुन्तला। आतपदोषः रौद्रजनितपराभवः। उत पक्षान्तरे। यथा मे मनसि यथाहं तथेयमपि। संदेहेन कृतं निष्फलम्। प्रियाया इदं वपुः तदपि कमनीयं सुन्दरं यद्यपि साबाधं सपीडं अत एव। स्तनयोर्न्यस्तमर्पितमुशीरद्रवो यत्र तथाभूतम्।

स्रजो भूषणगन्धांश्च गृहाण्युपवनानि च।
कामाग्निना च संतप्तः शीतलं वस्तु सेवते॥"

इति भरतः। पुनः किंभूतं, प्रशिथिलः अदृढः आश्रयकार्श्यात् मृणालघटित एकोऽद्वितीयः अपरवलयोद्वहनासामर्थ्यात् श्रेष्ठो वा वलयः कङ्कणं यत्र तथाभूतम्। कामं निश्चितं मनसिजनिदाघप्रसरयोः स्मरग्रीष्मप्रसङ्गयोस्तापस्तुल्य एव यतः संभवति। पुनः स्त्रीषु युवतिषु ग्रीष्मस्यापराद्धं अपराधाचरणम् एवं यथावृत्तमस्ति तथा सुभगं मनोहरं न भवति। तथा च स्मरस्यैव विलसितमिति भावः॥ १०॥

यदि ज्ञायते एव कान्दर्पोऽयं भावः कथं तर्हि तत्प्रतीकारो न क्रियते तत्राह। सखि शकुन्तले अनभ्यन्तरे आवां मदनगतस्य वृत्तान्तस्य। मनोभवभावमावां नावगच्छाव इत्यर्थः। किं तु यादृशी इतिहासकथानिबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवापीति तर्कयामि। "इतिहासः पुरावृत्तमि"त्यादि। भरतोऽपि—

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः ।
आवृतिः स्यादनालम्बा तन्मयोन्मादमूर्च्छना ॥
पूर्वानुभवजा ज्ञेया एताः स्मरदशा दश ।

तत् कथय किंनिमित्तं ते आयास इति प्रतिक्रियतां तत्राह । विकारं परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य । राजा अनुसूययापीति । मदीयस्तर्कोऽनुसूययापि ज्ञात इत्यर्थः । शकुन्तला—बली दुःसहः मे ममायासो न सहसा शक्नोमि निवेदयितुम् । प्रियंवदा—सखि सुष्ठु खल्वनुसूया भणति । प्रत्यक्ष एव त्वयि कामिजनक्रमो लक्ष्यत इति भावः । तत् किमात्मन उपद्रवं रोगं उपेक्षसे । रोगे उपेक्षा न कार्येति भावः । तत्र दोषमाह । अनुदिवसं परिहीयसे खिद्यसे । अङ्गेषु केवलं लावण्यमयी छाया त्वां न मुञ्चति । शोभामात्रं परं दधाना तिष्ठसीत्यर्थः । "छाया स्यादातपाभावे प्रभाप्रतिमयोरपी"ति विश्वः । राजा—अवितथं सत्यम् । यथैव प्रियंवदा वदति तथैवेयं वृत्तास्तीत्यर्थः । प्रियंवदोक्तमेव विशदयति क्षामेति । इयं शकुन्तला शोच्यानुकम्प्या लक्ष्यते । प्रियं दर्शनं यस्यास्तादृशी च । तत्र हेतुमाह अस्यास्तावदाननं मुखं क्षामक्षामकपोलं अतिकृशगण्डम् । "क्षामो भवति दुःखेषु फुल्लो हर्षे प्रयुज्यत" इति कपोललक्षणम् । हृदयं कठिनतया ्युक्तौ स्तनौ यत्र तत्तथा । मध्योऽवलग्नः क्षीणतरोऽतिक्षीणः । अंसौ बाहुमूले प्रकामविनतावत्यर्थनम्रौ । छविः कान्तिः पाण्डुरा धूसरा । कीदृशी, मन्मथनिश्चेष्टा । केव, पत्राणां शोषणेन मरुता पवनेन स्पृष्टा संपृक्ता माधवीलतेव । यथा माधवी निसर्गतोऽतिरूपवती भवति पत्रपातकवायुना यदा स्पृश्यते तदा शोच्या तथेयमपि निसर्गसुन्दरी कामस्पृष्टा शोच्येत्यर्थः ॥ ११ ॥

शकुन्तला कस्य वान्यस्य कथयितव्यम् यदि कथनीयं तदा भवतीभ्यामेवेति भावः । उभे—सखि अत एव आवयोर्निर्बन्धः कथन इति शेषः । हेतुमाह । विभक्तं खलु दुःखं सह्यवेदनं भवति । यदाह, "न दुःखं पञ्चभिः सहे"ति । शकुन्तलाप्रतिवचनश्रवणकातरो राजाह-पृष्टेति । समदुःखसुखेन सखीजनेन पृष्टा सती इयं बाला षोडशवर्षवयस्का आधिहेतुं मनोव्यथानिमित्तं मनोगतं हृदयस्थं न वक्ष्यति न अपि तु वक्ष्यत्येव कथयिष्यत्येव । द्वौ निषेधौ

प्रकृतमर्थं गमयत इति कोषः। अत्र प्रश्ने यदुत्तरं प्रतिवचनं तस्य यत् श्रवणं आकर्णनं तत्र या कातरता दरिद्रता तामहं गतोऽस्मि। सा सख्योरुत्तरं दास्यत्येव। परं तन्मदभिलाषमुद्दिश्यान्याभिलाषं वा इत्यत्र परमहं कातरः। यदि प्रमादतः पराभिलाषमुद्दिश्य उत्तरं दास्यतीति तदा तद्विषयकयत्न एव न कर्त्तुमर्हतीति भावः। ननु स्वविषयकस्तस्याः पाक्षिकोऽपि स्नेहः करणीयः तव (?) सतृष्णं सस्पृहं यथास्यादेवं बहुशोऽनेकधा विवृत्य परावृत्यानया दृष्टोऽपि अवलोकितोऽपि। स्त्रियाः स्निग्धदृष्टिर्भावसूचिका। यदाह भरतः—

लेखप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः।
दूतीसंप्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते॥ १२॥

शकुन्तला कथयति। सखि यतः प्रभृति स तपोवनरक्षिता राजर्षिर्मम दर्शनपथं गतो मया दृष्ट इत्यर्थः इत्यर्धोक्त एव लज्जां नाटयति। उभे प्रियंवदानुसूये—कथयतु प्रियसखी। ततः प्रभृति तद्गतेन राजर्षिगतेना-भिलाषेण एतावदवस्थास्मि संवृत्ता। राजर्षिविषयकरागानुभावात् खेदमनु-भवामीत्यर्थः। अयं वाचिको रसः। यदाह—

रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा।
नानालंकारसंयुक्तैर्वाचिको रस उच्यते॥

दिष्ट्या भाग्येन अनुरूपे योग्ये तवाभिनिवेशोऽनुरागः। अथवा सागरं वर्जयित्वा महानद्या कुत्र प्रवेष्टव्यम्। यथा महानदी समुद्रमेव प्रविशति तथा रूपवती त्वं सावष्टम्भस्मरजित्वरे दुष्मन्त एवानुरक्ता भवसीत्येतदेव समु-चितमित्यर्थः। यदाह मनुः–"विवादश्च विवाहश्च तुल्यशीलैः प्रशस्यत" इति। श्रुतं श्रोतव्यम्। यदाकाङ्क्षितमासीत्तच्छ्रुतमित्यर्थः। स्मर एवेति। मम स्मर एव तापहेतुः सन्तापकारणम्। निर्वापयिता निर्वापनकर्त्ता सुखहेतुरिति यावत्। स एव जातः। अर्थान्तरन्यासमाह। तपात्यये ग्रीष्मावसाने जीव-लोकस्य प्राणिनः दिवस इव अभ्रश्यामः अम्बुदनीलः॥ १३॥

शकुन्तला—तस्मात् यदि वोऽनुमतं यदि युवयोः स्वीकारः तदा तथा प्रवर्त्तेथां यतेथां यथा तस्य राजर्षेरनुकम्पनीया अनुग्राह्या भवामि। अन्यथा यदि युवयोरत्र न स्वरसः ततः प्रसीदतं सिञ्चतमिदानीं मे उदकं मामुद्दिश्योदकैः

सिञ्चतमित्यर्थः। अथ च मदुक्तानाचरणे तथा सान्निध्यमृतायै मह्यं जलाञ्जलिर्दातव्य इति भावः। राजा—सभयानन्दम्। कथमियदानीं मद्विरहवेदनाविदूनहृदया प्राणान् धारयिष्यतीति भयम्। खेदोऽप्यस्या: मामेवोद्दिश्येत्यानन्दः। एतदवस्था स्मरान्तिमदशापन्ना। प्रियंवदानुसूये—दूरगतमन्मथा अक्षमा खल्वियं कालहरणस्येति। अनुसूया—अत्र क उपायो भविष्यतीति। अत्र कामजनितानैरुज्ये येनोपायेन सख्या अविलम्बितं शीघ्रं निभृतं संगुप्तं मनोरथमाकाङ्क्षितं सम्पादयावः। प्रियंवदा—निभृतमिति प्रवर्त्तितव्यं शीघ्रमिति न दुष्करम्। भविष्यत्येवैतत्कार्यं शीघ्रमप्रकाशं चेत्यर्थः। कथमिव कथं तथा भविष्यतीत्यर्थः। ननु सोऽपि राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाषः एतेषु दिवसेषु प्रजागरणकृश इत्यवलक्ष्यते। प्रजागरणमुन्निद्रम्। राज्ञश्चैतस्यामनुरागो विद्यत एवेति भावः। "कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाभिधीयत" इति भरतः। राजा—इत्थंभूत एव प्रियंवदोक्तावस्थाशय (?) एव। एतदेव विशदयति अशिशिरेति। कनकवलयं स्वर्णकङ्कणं मुहुरनेकवारं प्रतिसार्यते नीयते। किंभूतं वलयं, मणिबन्धनात् स्रस्तं स्रस्तं अनेकशः करमूलादधः पतितमित्यर्थः। केचित्त्वन्यथा व्याचक्षते। हस्तभुजयोः सन्धिर्मणीनां बन्धनमस्मिन्निति बहुव्रीहिः। स्रस्तं स्रस्तं कनकवलयं मणिबन्धनात् प्रतिसार्यते। अनतिलुलितो नातिविलुप्तो ज्यायाः आघातः संघर्षः स एवाङ्कं चिह्नं किणा यत्र तादृशात्। वलयं किंभूतं, अश्रुभिर्नयनजलैर्विवर्णं सत् मलीमसं म्लानम्। कीदृशैरश्रुभिरत्युष्णैरन्तस्तापैः शकुन्तलाविरहानलवहलज्वालाभितापैः। न च हस्तस्थितवलयस्य कुतोऽश्रुसम्बन्धस्तत्राह निशि निशि प्रतिरात्रं भुजन्यस्तो योऽपाङ्गो नेत्रप्रान्तस्तस्मात् प्रवर्त्तिभिः स्खलद्भिः ॥ १४ ॥

प्रियंवदा—सखि अनुसूये मदनलेखः स्मरभावसूचको लेखोऽस्याः शकुन्तलायाः क्रियतां विधीयताम्। ननु तल्लिखनं कथं राजहस्तं यास्यति तत्राह। तं मदनलेखमहं सुमनोगोपितं कुसुमसंगुप्तं कृत्वा देवतासेवाव्यपदेशेन देवपूजार्थमिदं पुष्पमानीतमस्तीति कपटेन तस्य राज्ञो हस्तं प्रापयिष्यामि। सुमनः पुष्पम्। सखि रोचते मे सुकुमार एष प्रयोगः। स्वदत एष प्रयोगः

त्वदत एव ममैष प्रकार इत्यर्थः। किं वा शकुन्तला भणति तत् सा पृच्छ्यताम्। किंचिल्ललितपदोपनिबन्धनां किंचिन्मनोज्ञपदयुक्तां गीतिकां प्रशस्तगीतिं चिन्तय। क्वचिदात्मन उपन्यासानुरूपामिति पाठस्तत्रात्मव्याख्यानतुल्या-मित्यर्थः। पुराभवन्मधुरवचनरचनापाटवं तस्यानुभूतचरमेवास्ते अग्रेऽपि तेनैव क्रमेण गीतिं चिन्तयतः प्रहितलेखकपटशङ्का नावतरतीति भावः। शकुन्तला—अहं चिन्तयिष्यामि किन्तु अवधीरणाभीरुकं राजकृततिरस्कारत्रस्तं वेपते मे हृदयम्। राजा—अयमिति सोऽयं जनस्तव संगमोत्सुकः संभोग-लालसास्तिष्ठति। हे भीरु त्रस्ते यतो मत्तः अवधीरणां तिरस्कारं विशङ्कसे तर्कयसि। उपमानद्वारा तामुत्कर्षयति। प्रार्थयिता याचकः श्रियं लक्ष्मीं लभेत वा न वा श्रियो लक्ष्म्या ईप्सित इच्छाविषयः कथं दुरापो दुर्लभो भवेदपि तु श्रियो न याचकदरिद्रता कितु याचकस्यैव तल्लाभे संदेहः। एवं सति त्वत्त एव ममावधीरणा शङ्का न मत्तो भवत्या इति ॥ १५ ॥

रत्नं कर्तृ नान्विष्यति नानुसंधत्ते जनमित्यर्थः। तत् रत्नमेव कर्म ॥ १६ ॥

सख्यौ—आत्मगुणावमानिनि स्वगुणनिन्दके को नाम संतापनिर्वापयित्रीं संतापापनोदिकां शारदीं ज्योत्स्नां आतपत्रेण वारयिष्यति। न तादृशः सोऽविचक्षणो यस्तवैवंविधरूपादिभोगपराङ्मुखो भवतीति भावः। शकुन्तला सस्मितम्। सखीवाक्यजातावष्टम्भात् स्मितम्। नियोजितास्मि भवतीभ्यां गीतिकरण इति शेषः। युवयोरेव वाक्येन मया गीतिश्चिन्त्यते यद्यवधीरणादि-विशेषो भवति तदा भवत्कारिता नेति (?) भावः। स्थानेऽवसरे। लिखना-रम्भणौपयिकं रूपमाह। उन्नमितैकेति। अस्याः शकुन्तलाया आननं कर्तृ कपोलेन मयि अनुरागं कथयति। कीदृश्याः, उन्नमिता स्तब्धा श्रेष्ठा भ्रूलता लताप्राया भ्रूर्यत्र एवं यथा स्यात्। पदानि समुचितसंबोधनादिपदानि रच-यन्त्याः। कपोलेन कीदृशेन, पुलकव्याप्तेन। एतावता तावद्गीतादिचिन्तना-दस्याः सात्त्विकभाव उन्नीयते। यदाह—

संगमे स्मरणे चैव प्रियस्यालोकने तथा।
हेतुत्रयं समासाद्य सात्त्विकः संप्रवर्त्तते ॥
स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुविलयो इत्यष्टौ सात्त्विकाः स्मृताः ॥

अत्र शुद्धा संस्कृतजातिः । यदाह—

तत्र संस्कृतमित्यादिर्भारती जातिरुच्यते ।
सार्थौचित्यादिभिर्वाचामलंकाराय जायते ॥ १७ ॥

शकुन्तला—मया गीतिका चिन्तिता; तर्हि कथं न लिख्यते अत्राह । असन्निहितानि पुनर्लेखनसाधनानि लेखनसामग्री पुनरयोग्यदेशश्चेत्यर्थः । प्रियंवदा—शृणुवस्तावदस्या गीतिकाया अक्षराणि । ततः श्रवणानन्तरं अस्मिन् शुकोदरस्निग्धे नलिनीपत्रे पत्रच्छेदभक्त्या नखैर्लिखितवर्णां करिष्यसि गीतिकामित्यनुषङ्गः । साम्प्रतं पठ्यतां तावत् । शकुन्तला—शृणुतं तावदेनां गीतिकां विशदार्था न वेति । यदीयं न स्पष्टार्था तदान्यां व्यावृत्य लिखामीति भावः । उभे–अवहिते स्वः । शकुन्तला पठति तुज्झेति ।

तव न जाने हृदयं मम पुनर्मदनो दिवा च रात्रौ च ।
निष्कृप तपति बलिकं त्वयि युक्तमनोरथानि चाङ्गानि ॥

हे निष्करुण ! तव हृदयं न जाने मद्विषयेऽनुरक्तमननुरक्तं वेति न वेद्मि । मम पुनरङ्गानि मदनः कामः दिवारात्रौ बलिकमतिशयेन दहति । ननु कथमत्र तवोपालम्भविषयस्तत्राह । अङ्गानि कीदृशानि, त्वयि युक्तमनोरथानि त्वदधीनसौख्यानि । उत्तरोत्तराख्यमिदं लास्यम् । यदाह भरतः—

यदाविज्ञातपार्श्वस्थे प्रिये सोत्कण्ठभाषितम् ।
प्रयुज्यते नायिकया तद्भवेदुत्तरोत्तरम् ॥

शुद्धा प्राकृतजातिः । लिखनप्रस्थापनं क्रिया भावसूचकम् । यदाह भरतः–"लेखप्रस्थापनैः स्निग्धैरि"त्यादि ॥ १८ ॥

राजा लेखनोत्तरं ददद्देवात्मदशां प्रकटयति तपतीति । हे तनुगात्रि कृशाङ्गि मदनस्त्वां तपति मां पुनरहर्निशं दहत्येव भस्मैव करोति । अर्थान्तरन्यासमाह । इह प्रस्तुतयातनाप्रसङ्गे दिवसो यथा शशाङ्कं ग्लपयति अभिभवति तथा न कुमुद्वतीम् । कुमुद्वती तावच्चन्द्रविरहेण दृश्यते संतप्ता, परं भवति, चन्द्रस्तु तद्विरहेण क्षैण्याद्दिवा लोचनगोचरोऽपि न भवति । तथा संतप्तायास्तव विरहदहनदग्धोऽहं भस्मवद् भवामीति । ग्लै हर्षक्षये चुरादिगणपाठात् हेतौ(?)णिच् ॥ १९ ॥

सख्यौ प्रियंवदानुसूये विलोक्य। "पृष्ठतो दर्शनं यत्तद् विलोकितमुदाहृतमिति" भरतः। सहर्षं लेखनवचनमात्रेणैवाभीष्टसिद्धिरिति हर्षः। स्वागतं कुशलं यथाचिन्तितस्य फलस्याविलम्बितोत्प्रेक्षितनिर्वाहान्मनोरथस्य। शकुन्तला ससाध्वसम्। यदाह—

अभिलाषः स्पृहा तत्र काम्ये सर्वाङ्गसुन्दरे।
दृष्टे श्रुते वा तत्रापि विस्मयानन्दसाध्वसाः॥

अत्र साध्वसो निष्क्रियत्वम्। आत्मगतमनन्यप्रकाशम्। हृदय तथा पूर्वानुभवप्रकारेण उत्ताम्य ग्लानीभूय। तमु ग्लानौ धातुः। इदानीमपेक्षितलाभे सति किंचिदपि न प्रतिपद्यसे नाध्यवस्यसि पश्चात् अर्थात् त्वं खेदमनुभव। तल्लाभे सति निष्क्रियं भवसीति भावः। राजा—अलमायासेन नायासमाचरेति भावः। तत्र हेतुमाह। ते तव गात्राणि उपचारं विनयादिरूपं नार्हन्ति न युज्यन्ते मत्कृत इति शेषः। कीदृशानि, संदष्टं आश्लिष्टं कुसुमशयनं पुष्पशय्या यैस्तादृशानि। आशु शीघ्रं विवर्णितं म्लानीभूतं वलयं कङ्कणं येषु तादृशानि॥ २०॥

अनुसूया—इतः शिलातलैकदेशमनुगृह्णातु प्रियवयस्यः। द्वितीयार्थे तसिः। तेन इमं शकुन्तलाधिष्ठितशिलाखण्डमेवालंकरोत्वित्यर्थः। शकुन्तला पादावपसारयति संवृणोति राजोपवेशनार्थमित्यर्थः। कच्चित् कामप्रवेदने। प्रियंवदा—सस्मितं–जानन्नेवायमज्ञानं परिभावयतीति स्मितम्। लब्धौषध इदानीमुपशमं गमिष्यति श्रीमदागमने सति। औषधं तावत्तापादिकं शमयति अस्य तु तापस्य भवानेवौषधमिति भावः। अनुसूया जनान्तिकं प्रियंवदामात्रसंबोधं यथास्यादेवम्। प्रियंवदे—कालेन प्रेक्षस्व तावत् मेघवाताहतामिव ग्रीष्ममयूरीं क्षणे क्षणे मुहूर्ताभ्यन्तरेण प्रत्यागतप्राणां प्रियसखीम्। मेघपवनस्पृष्टा मुहूर्त्तादेव प्रत्युज्जीवति। अम्बुदतुल्यो राजा। शकुन्तला सलज्जा। राजविरहकर्तृकोऽयं मम तापः सकलजनो वेत्तीति लज्जा। प्रियंवदा—महाराज युवयोस्तव शकुन्तलायाश्चान्योन्यरागः परस्परानुबन्धः प्रत्यक्षः। सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति। यद्यपि नैसर्गिक एव तवास्यामनुरागस्तथापि सखीविषयकप्रणयस्तद्दार्ढ्याय मां तरलयतीत्यर्थः। अनुसूया—हे राजन् एष धर्मः

आवयोरिति शेषः। सखीनां सखीहिताचरणाय वक्तव्य मेवेति भावः। विवक्षितं वक्तुमाकाङ्क्षितम्। अस्मादुक्तात् परमन्यत् किं वक्तव्यमित्यर्थः। अनुसूया वदति, आश्रमवासिना जनेन राज्ञोऽन्तःपुरेण भवितव्यमिति न एष धर्मः। तावदप्रतिहतेच्छो राजा, इयं च तपस्विनी पराधीना, तथा च विषमशीलयोर्युवयोरासक्तिरनर्हेति भावः। अस्मात् परमिति त्वत्सखीप्रेमबद्ध एवाहमागतस्तथा च त्वया तदर्थमस्मासु किमपि न वक्तव्यमिति भावः। तेन हि इयं नः प्रियसखी त्वामेवोद्दिश्य भगवता मकरकेतुना इमामवस्थां प्रापिता। तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम्। अभ्युपपत्तिः पुरस्कारपुरस्सरस्वीकारः। राजा—हे भद्रे एष प्रणयः साधारणः उभयत्र तुल्य एव। यदा तन्निमित्तमस्मासु वदसि तदा मन्निमित्तं तस्यै वदेतिभावः। प्रणयो याञ्चा। क्वचिद् भद्रे-स्थाने उभे प्रतीति पाठः। अत्र उभे प्रियंवदानुसूये प्रति एष प्रणयः प्रणयवचनमिति। शकुन्तला सोपालम्भमाह, अलं युवयोरन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन अनुच्छन्दितेन। मदर्थमनुच्छन्देन मदिच्छा कथं क्रियते(?)। बाह्यतः परमसावनुरागं प्रकटयति हृदयमन्तःपुर एव तिष्ठतीति स्फुटार्थः। इदमनन्येति। मदिरे सुन्दरे ईषद् घूर्णिते वा ईक्षणे नयने यस्यास्तादृशि हृदयसन्निहिते नित्यं मन्मनोऽवस्थायिनि हे! ममेदं हृदयं त्वदाश्रितं अन्यथा अन्यपरायणं यदि समर्थयसे वेत्सि तदा मदनबाणहतोऽप्यहं पुनर्हतः स्यामित्यर्थः। मृतस्य मारणं सतो नोचितमिति भावः। "मदिरं सुन्दरे स्याच्च ईषद्घूर्णनशीलन" इति कोषः।

अनुसूया—औचितीमाह। महाराज बहुवल्लभा राजानो भवन्ति तद्यथा नः प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वाहयिष्यसि। राजा—किं बहुना उक्तेनेत्यनुषङ्गः। परिग्रहेति कलत्रबाहुल्येऽपि मे मम कुलस्य वंशस्य द्वे प्रतिष्ठे द्वयमेवोत्कर्षहेतुः। किं तत् द्वयं तत्राह। समुद्र एव रसना मेखला यस्याः सा समुद्रावच्छिन्ना उर्वी मही युवयोरियं सखी शकुन्तला। तत्पक्षे समुद्ररसना सचिह्नमेखला। यद्वा समुद्ररसना साङ्गुरीयकमेखला। यद्वा मुदं हर्षं राति ददाति मुद्रं हर्षदं यद्रसनं भाषणं तेन सह वर्त्तते समुद्ररसना प्रियभाषिणीत्यर्थः। क्वचित् समुद्रवसनेति पाठस्तत्र समुद्रवसना सचिह्नवस्त्रा।

यद्वा समुद्रे वसनं वसतिर्यस्याः सा लक्ष्मीरूपैवेयमित्यर्थः। रा दाने धातुः। उर्वीपक्षे, समुद्रा एव वसनानि वस्त्राणि यस्यास्तादृशी। अनुनयोऽयमलंकारः। यदाह—"वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः"। "परिग्रहः कलत्रे चे"ति शाश्वतः॥ २२॥

सख्यौ निर्वृत्ते स्वः। शकुन्तला जनान्तिकं राजानमपवार्य—सख्यौ हे! लोकपालं राजानं मर्षयतं क्षमां कारयतम्। किं निमित्तं तत्राह विसंबद्ध-प्रलापिनीभिरुपचारातिक्रमेण भणितं तत् विमृष्यतामिति। उपचारातिक्रमः अवधीरणा-निष्कृपेति वाक्यम्। सख्यौ–येन त्वया तन्मन्त्रितं स एव तन्मर्षयतु। अन्यस्य जनस्य कोऽधिकारः? शकुन्तला—हे महाराज! अर्हसि खलु इदं वचनं सोढुम्। परोक्षे वा किं न मन्त्र्यते उच्यते। राजा—इममपराधं तवस्तदा सहिष्ये मर्षयिष्यामि हे रम्भोरु कुसुमास्तरणे पुष्पशय्यायामस्या-मित्यर्थात् स्वजनत्वादयं मम स्वकीयो जन इति अवकाशं स्थानं शयनार्थ-मित्यर्थः अनुमन्यसे दातुमङ्गीकुरुषे। क्वचित् सुजनत्वादिति पाठस्तत्रात्म-वैकल्यमपि विधाय सुजनः परोपकृतिं करोतीत्यर्थः। आस्तरणस्योपादेयता-माह। तवाङ्गसङ्गसंसृष्टे। कीदृशमवकाशं, श्रमापहम्॥ २३॥

प्रियंवदा सोपहासमाह। ननु एतावन्मात्रेण तुष्टी भविष्यसि अथापर-मपि त्वयानुसंधीयतामिति भावः। शकुन्तला सखीद्वयं व्यवधित्सुरिवाह। विरम दुर्ललिते एतावदवस्थां गतयापि मया क्रीडसि त्वम्। एतदवस्थां परा-धीनताम् अथ वल्लभप्रार्थनाम्। तथा च मया सह कौतुकं कर्तुं न युज्यत इत्यर्थः। विदिताशया निर्जनं चिकीर्षुरनुसूया सव्याजमाह। प्रियंवदे एष तपस्वी मृगपोतक इतस्ततो दत्तदृष्टिर्नूनं परिभ्रष्टोऽर्थात् व्यथते पर्युत्सुक उत्कण्ठितः मातरमनुसंधत्ते। तत् संयोजयामि एनं मात्रा सहेत्यनुषङ्गः। तपस्वी अनु-कम्प्यः। बहिर्यियासुः। प्रियंवदाह—सखि चपलः खल्वयं दुर्विनीतो नै योजयितुमेकाकिनी पारयसि पारयिष्यसीत्यर्थः। भविष्यदर्थे लट्। तस्माद-हमपि सहायतां करिष्ये तवेत्यनुषङ्गः। तथा चाद्यसंगमावसरे वियोगोट्टङ्कने-नानयोरग्रे विरहः सूचितः। शकुन्तला—सख्यौ न युवयोर्गमनमनुमन्ये यतोऽ सहायिन्यस्मि। अथ च शिरश्चालने नकारः। तत्रायमर्थः। युवयोर्गमनं

नानुमन्ये अपि त्वनुमन्य एव। असहायिन्यस्मि अपि तु सहायो द्वितीयो राजैवास्तीति संमुग्धम्(?)। उभे-त्वमिदानीमसहायिनी यस्याः समीपे पृथिवी-नाथो वर्त्तते। पृथिव्या नाथो न तु तवेत्यग्रे त्यागः सूचितः। शकुन्तला—कथं गते प्रियसख्यौ मां हित्वेत्यनुषङ्गः। राजा निर्जनताभवनाभिप्रायेणाह सुन्दरीति। भावविभावनाभिप्रायेण आवेगेन सखीविषयाकूतेनालं वृथा। सखीभूमौ सखीस्थाने सखीकृत्ये वा आराधयिता परिचारकः अयं मद्रूपो जनः। सखीविधेयं ममैव तव विधेयमित्यर्थः। तदेवाह किमिति। भविष्ये–

हस्तिहस्तनिभैरामरम्भाभैः करभोपमैः।

प्राप्नुवन्त्युरुभिः शश्वत् स्त्रियः सुखमनङ्गजम्॥

हे करभोरु पद्मिनीपत्रतालव्यजनं किं संचालयामि व्यजनान्तरापेक्षया तालवृन्तस्य बहुगुणत्वं, यथा "तालवृन्तमयं वातं त्रिदोषशमनं विदुरि"ति। किंभूतं वृन्तं, आयासनिरासकैर्जलकणैरार्द्रवातं शीतलानिलम्। उत पक्षान्तरे। क्रोडे निवेश्य यथासुखं यावदिच्छं चरणौ तव संवाहयामि मर्दयामि। कीदृशौ चरणौ, पद्मवल्लोहितौ। एतेनास्याः पद्मिनीत्वं ध्वनितम्॥ २४॥

शकुन्तला-न माननीये जने त्वद्रूपे आत्मानमपराधयिष्यामि चरणयन्त्रणा-दिनेत्यर्थः। अपरिनिर्वाणः मध्याह्नत्वात्। "निर्वाणमस्तगमने निर्वृतौ गजमज्जन"इति मेदिनी। प्रचण्डचण्डरुचिमरीचिमण्डल इत्यर्थः। इयं च ते आतपासहिष्णुः शरीरावस्था। तस्मात् रौद्रे कथं गमिष्यसि त्वम्। कीदृशी, अङ्गैर्देहैरुपलक्षिता। अङ्गैः कीदृशैः, परिवाधाकोमलैः दुःखासहिष्णुभिः। "वाधा दुःखे निषेधे चे"ति नानार्थः। त्वं कीदृशी, पद्मिनीपत्रेण कल्पितं रचितं स्तनयोरावरणं पिधानं यस्यास्तादृशी॥ २५॥

शकुन्तला—मुञ्च मुञ्च मामित्यनुषङ्गः। न खल्वहमात्मनः प्रभवामि येन त्वन्मनोरथपूरणं क्रियत इति भावः। अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि। अतो यातुं देहीति बाह्यतः, हृदयन्त्वभ्युपगम एव। अथ च सखीस्वीकारेण त्वदुपेक्षितकरणेन मे दोष इति भावः। प्रस्तुते राज्ञः शैथिल्य-शङ्कां निराचिकीर्षुराह। न खलु महाराजं भणामि दैवमुपालभे आक्रुश्यामि। राजा—अनुकूल इति। नानादेशस्थयोरावयोः संनिधिकर्तृत्वात् दैवस्यानुकूल–

कारित्वम्। "दैवं भाग्यमि"त्यमरः। शकुन्तला—कथमिदानीं नोपालप्स्ये यदात्मनोऽनीश्वरीं मां परगुणैः प्रलोभयति, यतः पराधीनां मां त्वत्सौन्दर्यादि-गुणैरुत्कण्ठयतीत्यर्थः। राजा स्वगतम्-अप्यौत्सुक्ये इति। एवकारो भिन्नक्रमः। कामेन कुमार्यः स्त्रिय एवाबाध्यन्ते पीड्यन्ते इति न खलु निश्चितं किन्तु ता अपि कुमार्योऽपि मनसिजं काममाबाधन्ते पीडयन्ति। कुतः, क्षिप्तकालाः अति-क्रान्तसुरतसमयाः। यतः यूनो रहसि समये पञ्चशरस्य पीड़ा त्वरितं(?) स्वक्रियाया अनिर्वाहात्। कुमार्यः कीदृश्यः, औत्सुक्ये महत्यपि सति वल्लभाकाङ्क्षितेषु प्रतीपा विपरीतकारिण्यः व्यतिकरसुखं · संबन्धसुखं• काङ्क्षन्त्योऽपि स्वदेहार्पणे कातराः कृपणाः ॥ २६ ॥

राजा—कथमिति। यावदियं संनिहितास्ति तावत् स्वमनोरथं कथं न निर्वाहयामीत्यर्थः। शकुन्तला—पौरव रक्षाविनयमितस्ततः ऋषयः संचरन्ति। अविनयं मदञ्चलधारणादिरूपं रक्ष न विधेहि इत्यर्थः। अवहितो भूत्वा स्वकृत्यमाचरेति भावः। राजा अभये हेतुमाह नात्रेति। अत्रभवान् मान्यः कण्वः अत्रावयोर्मैथुने खेदमुपतापं नोपधास्यति। कीदृशः, विदितधर्मा ज्ञाता-स्मच्चौरिकपरिणायः। यतः दृष्टचरप्रचुरचरित्रः। तत्र बीजमाह, गान्धर्वेणेति। बह्वयो मुनिकन्यकाः गान्धर्वेण विवाहेन विवाहिताः श्रूयन्ते। अथानन्तरं ताश्च कन्यकाः पितृभिर्त्र्यम्बकप्रभृतिभिः पश्चादनुमता इत्यर्थः।

"इच्छयान्योन्यसंभूतः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुनः कामसंभवः॥"

इति स्मृतिः। तथा च भारते,

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ इष्यते।
सकामायाः सकामेन निर्मितो रहसि स्मृतः॥"

आख्याननामालंकारः, "आख्यानं यत्र दृष्टान्तात् पुरावृत्तस्य कीर्त्तन-मि"ति ॥२७॥

प्रकाशश्चत्वरम्। "प्रकाशश्चत्वरे भासी"त्यर्थः। पौरव ! अनिच्छापूरकः अभीष्टानिर्वाहकः क्षणमात्रपरिचितः मुहूर्त्तपरिशीलितोऽयं मद्रूपो जनो न विस्मर्त्तव्यः। सुन्दरीति। विभावनाभिप्रायेण त्वं दूरमपीति। दूरमपि गच्छन्ती त्वं मे हृदयं न त्यजसि। यत्र यान्त्यसि तत्र मम हृदयं गृहीत्वैव

इत्यर्थः । अत्रोपमामाह । दिनावसानछायेव सायंकालीनछाया वनस्पतेर्वृक्षस्य मूलं न जहाति । "छाया स्यादातपाभावे प्रभाप्रतिमयोरपी"ति शाश्वतः । "वृक्षमात्रे वनस्पति"रिति ॥२८॥

शकुन्तला—हा धिक् हा धिगित्यर्थः । एवं राजविनयवचनजातं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः अग्रे गन्तुं न प्रभवत इत्यर्थः । भवत्वेवं पर्यन्तकुरवकैर्निकटस्थवनलताभिरपवारितशरीरा संगोपितशरीरा प्रेक्षिष्ये द्रक्ष्यामि तावदस्य भावानुबन्धं प्रणयानुवृत्तिम् । राजा—अनुरागैकरसं प्रेमैकपरायणम् । चित्तकाठिन्यं विवृणोति अनिर्दयेति । खलु निश्चितं तव रूपस्याकृतेरिति यावत् । चेतः कठिनम् । कीदृशस्य, अनिर्दयोपभोग्यस्य । कुतः, मृदुनः । यतः प्रतिकूलभवनशङ्कया मृदु वस्तु सदयमेव भुज्यते । कश्चित्तु तव चेतः कथं कठिनम् । ते कीदृश्याः, मृदुनो रूपस्य । रूपकतया व्याख्याति शिरीषस्य बन्धनं वृन्तमिव ॥२९॥

शकुन्तला—एवं राजव्याहृतं श्रुत्वा नास्ति मे विभवो गन्तुम् । विभवः सामर्थ्यम् । राजा—अस्मिन् लतामण्डपे किं करोमि प्रयोजनाभावादित्यर्थः । विचिन्त्याश्वासप्रकारमित्यनुषङ्गः । हन्त हर्षे । व्याहतं मे गमनं न निर्वक्ष्यतीत्यर्थ । तत्र बीजमाह मणिबन्धेति । तस्याः प्रियायाः इदं परिदृश्यमानं मृणालरचितकङ्कणं मम पुरो यतः स्थितमस्तीति शेषः । किंभूतं, मणिबन्धात् करमूलाद् गलितं पतितम् । संक्रान्तः संपृक्तः उशीरस्य वीरणस्य परिमलः सौरभं यत्र तादृशम् । कथं गमने वलयं प्रतिबन्धकमत्राह किंभूतं, मम हृदयस्य निगडं शृङ्खलमिव । अन्योऽपि संमुखे निगडं दृष्ट्वा गन्तुं न प्रभवतीति ॥३०॥

सबहुमानं सपुरस्कारं तत् वलयमादत्ते गृह्णाति । शकुन्तला विलोक्य करं वलयरहितमित्यनुषङ्गः । अम्मो विस्मये । यदाह भरतः—"विस्मये त्वम्महे अम्मो नित्यं स्त्रीभिः प्रयुज्यते" । दौर्बल्यशिथिलतया कार्श्यादृढतया इदं मृणालवलयं परिभ्रष्टं पतितं मया न ज्ञातं नावगतम् । राजा—अहो आश्चर्यम् असीमप्रमोदजनको मृणालवलयस्य स्पर्श इत्यर्थः । अनेनेति । हे प्रिये ते तव अनेन लीलाभरणेन वलयरूपेण एष मद्रूपो जनः समाश्वासितः । किमत्राश्चर्यमत्राह कीदृशेन, चैतन्यरहितेनापि सता सच्चरित्रेण । यतः सतो

निरुपधिपराय विलासनिरासकुतूहलित्वं भवतीति । तु पुनस्त्वया चेतनयापि न समाश्वासित इत्यन्वयः। शकुन्तलाकरस्थत्वात्तस्य कुतो लाभस्तत्राह कीदृशेन, कान्तं सुन्दरं भुजमर्थात्तव, विहाय त्यक्त्वा अत्र ममोरसि तिष्ठता। कीदृशः, दुःखभाक् त्वद्विश्लेषक्लिष्टः। क्वचिल्लीलावलयेनेति पाठः ॥ ३१ ॥

शकुन्तला—अतोऽपरं न समर्थास्मि विलम्बितुं राज्ञो वैकल्यश्रवणादिति भावः। एतेनैवापदेशेन आत्मानं दर्शयिष्यामि। अपदेशो व्याजः। वर्त्मनि गच्छन्त्या मम पतितं मृणालवलयं, तदन्वेषयामीति कृत्वा राजसमीपं गच्छामीत्यर्थः। परिदेवितेति। निश्चितं मत्करुणवचनजातकृपो मामुपचिकीर्षुर्विधाता भूतोऽस्तीत्यर्थः। "विलापः परिदेवनमि"त्यमरः। पिपासेति। तृषाक्लिष्टगलेन चातकेन अम्बु प्रार्थितं परमित्यर्थः। अथास्य मुखे नवघनत्यक्ता धारा पतिता स्खलिता यथा तथा विलापानन्तरं मम शकुन्तलालाभ इति स्फुटार्थः ॥ ३२ ॥

शकुन्तला–"आर्यः प्रभुरिति स्त्रीभिर्वाच्योऽसौ यौवनः पति"रिति भरतः। आर्य ! अर्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते आगतास्मि। कथमत्र तत्प्रसङ्गस्तत्राह आचक्षितं कथितमिव मम हृदयेन त्वया गृहीतमिति अतस्तस्मान्निक्षिप एतं न्यासम्। न्यासः·········अदाने किं स्यात्तत्राह। आत्मानं मां च मुनिजने मा असूययिष्यसि। अदाने निश्चितं कङ्कणरहितमत्करावलोकनतः प्रश्नावगतवृत्तान्तो मुनिरावयोः कोपमाविष्करिष्यतीति भावः। अभिसन्धिरभिप्रायः। शकुन्तला—भण तमभिसन्धिमर्थात्। राजा यद्यहमिति। मद्द्वारा यदि परिधत्स इत्यर्थः। का गतिः कः प्रकारः ? एवं कुरु त्वं परिधापयेत्यन्वयः। उपसर्पति संनिदधाति राजानमभ्युपैतीत्यर्थः। राजा शकुन्तलाहस्तारविन्दव्यतिकरानन्दसंदोहमनुविन्दन् उपमानद्वारा तमेवोत्कर्षयति हरकोपाग्नीति। किंस्वित् शब्दोऽव्ययो वितर्कवाची। अयं करः कामवृक्षस्य प्ररोहोऽङ्कुरः किंस्वित्। कीदृशः, दैवेन विधात्रा संभृत उपपादितः। तस्यामृताद्दते कथं प्ररोहसंभवस्तत्राह। दैवेन कीदृशेन, हरकोपाग्निभस्मीभूतस्य आहत्य पुनर्जन्मामृतवृष्ट्यैव भवतीत्यागमसिद्धमेव। अयं चामृतप्रस्यन्दसंदोहशीतलः करः प्रत्यक्ष एवानुभूयत इति ॥ ३३ ॥

शकुन्तला—त्वरतां त्वरतां आर्यपुत्रः। आर्यपुत्रशब्दः स्वामिनि युज्यते। राजा इदानीमार्यपुत्रेति पदश्रवणानन्तरं विश्वसितः यतो भर्तुः संबोधनमेतत्। प्रकाशं, सुन्दरीति साभिप्रायः। अस्य मृणालवलयस्य संधिः परस्परभागद्वयसंबन्धप्रदेशो नातिश्लिष्टो न निबिडः। तत् तस्मात् संधिरस्यान्यथान्यप्रकारेण घटयितव्यः। शकुन्तला—यथा ते रोचते। "रुच्यर्थानां प्रीयमाणे" चतुर्थी। राजा—प्रतिमुच्य परिधाप्य वदतीत्यनुषङ्गः। हे सुन्दरि अयं निशाकरश्चन्द्रः ते तव करं उपेत्य उभयकोटिं आश्रितः उभयाश्रितभागाभ्यां संगत्य मण्डलाकृतिजातोऽस्तीत्यर्थः। तत्र प्रकारमाह। मृणालरूपेण मूर्त्या उभयोरतिधावल्यात् साम्यं, नभसि कोटिद्वयमिलनशोभा कादाचित्का इह तु सार्वदिका स्यादिति भावः। कीदृशः, उज्झितं त्यक्तमम्बरं येन तादृशः। कुतः विशेषशोभार्थं अतिशयितसौन्दर्यार्थं नभसि वक्रत्वावस्थया तथा सौन्दर्यं न भवति यथा शकुन्तलाकरमासाद्य मण्डलीभावेनेति भावः। करं कीदृशं श्यामलतामनोहरं श्यामलता सत्तल (?) इति प्रसिद्धा। निशाकर इति पदं साभिप्रायम्॥ ३४॥

शकुन्तला—न त्विदानीं तावत् मृणालवलयं अर्थान्न पश्यामि। कुतः पवनकम्पिना कर्णोत्पलरेणुना कलुषीकृता मे मम दृष्टिरस्तीत्यर्थः। राजा सस्मितम्। शकुन्तलाभिप्रायावगमात् स्मितमिति। हे सुन्दरि यदि मन्यसे तदा वदनमारुतेन एनां त्वदीयदृष्टिं विशदामनाविलां करोमि। शकुन्तला—तर्हि अनुकम्पिता भवेयमनुगृहीता स्याम्। अहं पुनस्ते तव न विश्वसिमि विश्वासं ते न करोमीत्यर्थः। तत् कुर्वन् चेदन्यदेव किंचित्त्वं करोषि तदा किं करोमीति भावः। राजा—एवं मा ब्रूहीत्यर्थः। हि यतः नवः परिजनः परिचारकः आदेशादाज्ञायाः परं न वर्त्तते न चेष्टत इत्यर्थः। यदेव तव समीहितं तावन्मात्रमेव विधेयमित्यर्थः। शकुन्तला—अयमेवात्यादरः शङ्कनीयः। परिजनातिदेशरूपव्याहारः शङ्काविषय इत्यर्थः। यन्मम वक्तुमर्हति तन्मयि त्वं भणसीति एवंरूपः समादरः। राजा संभोगलालसस्तदेव पुनराह नाहमिति। रमणीयं मनोहरं आत्मनः सेवास्थानं न शिथिलीकरिष्याम्यवसरं न शिथिलयिष्ये। यद्वा अवकाशस्थानं रमणीयमात्मनः सेवास्थानं न शिथिलीकरिष्यामि।

तवासमीहिताचरणे अविश्वासात् मम दुर्लभा स्या इत्यर्थः। इत्युक्त्वा मुख-मुत्तोलयितुं प्रवृत्तः। शकुन्तला अकामप्रतिषेधं कपटप्रतिरोधमभिनयति। इदं किलकिञ्चितं नाम शृङ्गारचेष्टा। यदाह—"क्रोधाश्रुहर्षभीत्यादेर्मिलनं किल-किञ्चितम्"। राजा—परिगताश्रुणा कान्ते सुन्दरे ईक्षणे यस्या एवंभूते हे! अस्मन्मत्तः अविनयाशङ्कयाऽलं वृथा। अविनयोऽत्र संभोगरूप एव। शकुन्तला किंचिद् दृष्ट्वा अवनतमुखी तिष्ठति। लज्जितेति दृक्। यदाह—

किंचित्कुञ्चितपक्ष्माग्रा पतितोर्ध्वपुटक्रिया।
त्रपाधोमुखभावा च लज्जिता दृष्टिरुच्यते॥

राजा—चारुणेति। अयमधरो ममानुज्ञामादेशमेव ददाति अर्थात् पाने। केन, चारुणा मनोहरेण स्फुरितेन। मम कीदृशस्य, पानं कर्त्तुमिच्छतः। कीदृशोऽधरः, न परिक्षतः अत एव कोमलः। प्रतिमुखसन्धौ नाट्यालंकारे विलासनामालंकारः। यदाह—"संभोगो रतिसंपन्नो विलास इति कीर्त्यते"॥३५॥

फूत्कारशैथिल्यादाह प्रतिज्ञामन्थरः अङ्गीकृतशिथिल इव दृश्यते आर्य-पुत्रः। चक्षुषो रजोऽपनयने या प्रतिज्ञार्यपुत्रेण कृता सा विस्मृतैवेत्यर्थः। कैशिकीभेदोऽयं नर्मस्फोटः। यदाह—

नायिकायाश्च नेतुश्च यदेकान्ते परस्परम्।
संभोगानुमतं वाक्यं नर्मस्फोटः स उच्यते॥

राजा—हे सुन्दरि! कर्णस्थं यदुत्पलं तत्सान्निध्यादीक्षणयोर्यत् सादृश्यं तेन मूढोऽस्मि किमीक्षणमुत कर्णोत्पलमेतदित्युक्त्वा मुखमारुतेन चक्षु-स्तस्याः सिञ्चति फूत्करोति। शकुन्तला—भवतु उपशाम्येत्यर्थः। प्रकृतिस्थित-दर्शनास्मि वृत्ता भद्रमेव द्रष्टुं यातीति भावः। लज्जे पुनरनुपकारिणी प्रिय-कारिण आर्यपुत्रस्य भवत इत्यर्थः। राजा—शकुन्तलाया अप्युपकारिणीत्वं विशदयति किमन्यदिति। अन्यत् किमभिधातव्यमित्यर्थः। इदमपि उपकृति पक्ष एव उपकारोपयुक्तमेव। इदं किं, यत्तव सुरभि सौरभाश्रयं मुखं आघ्रातं तावन्मात्रेणैव ममोपकारो वृत्तः। सस्मितवदनसौरभमात्रसंतुष्टोऽयमिति शकुन्तला बुद्धिनिरासायाह। भ्रमरः कमलस्य गन्धमात्रेण न तुष्यति। तथा चाहमपि मधुकरः कामुकः कमलप्रायमुखस्य सौरभमात्रेण न कृतार्थो भवामि।

तथा च देहि मे निर्भरपरीरम्भानन्दसंदोहमिति भावः ॥ ३६ ॥

शकुन्तलापि संभोगलोलुपा विहस्य वदति असंतोषे पुनः किं करोति मधुकर इत्यर्थः। राजा इदमिदमिति गाढ़ालिङ्गनाधरपानादिकमिति कृत्वा व्यवसितः यत्नं कर्त्तुमुद्यत इत्यर्थः। शकुन्तला वक्त्रं वदनं ढौकते पिधत्ते। धातोरनेकार्थत्वात्। न तु ढौक चुम्बने इति धात्वनुसारेण चुम्बतीत्यर्थः। कथमन्यथा तद्धातूपपन्न एव मृद्घटितढाकने पिधानार्थता। अन्यच्च। मुहुरङ्गुलिसंवृताधरोष्ठमित्यग्रिमश्लोके पिधानस्य ज्ञापनाद् विशिष्य चुम्बनस्याकृतत्वज्ञापनाच्चेति। केचित्तु रतिविरोधात् ढौकत इत्यस्यार्थान्तरमाहुस्तन्न। तत्र शयनाधिकरणकचुम्बनस्य निषेधान्न तु चुम्बनमात्रस्येति।

भरतस्तु—

न कार्यं शयनं रङ्गे नाट्ययोगमपेक्षता।
केनचिद् व्यपदेशेन तद्विच्छेदं च कारयेत् ॥
यदि स्वपेदर्थवशात् पुरुषः सहितः स्त्रिया।
न तत्र चुम्बनं कुर्यान्निर्व्याजालिङ्गनं न च ॥ इति ॥

नेपथ्ये यवनिकान्तरितदेशे वचनं जातमित्यर्थः। अये चक्रवाकवधु! आमन्त्रय स्वसहचरम्। ननूपस्थिता रजनी। अथ प्रकृतविघ्नकारित्वाद्रजनीप्राया आर्या गौतमी। तदागमनमन्यापदेशेन सख्यौ सूचयतः। शकुन्तला ससंभ्रमम्। वृत्तान्तोऽयं गौतमीज्ञानगोचरो भवेदिति भयम्। आकस्मिकमार्यपुत्रस्य मधुरालापो मम दुर्लभो वृत्त इत्युद्वेगः। उपजीव्यागमनमित्यादरः। "संभ्रमं त्रयमिच्छन्ति भयमुद्वेगमादरमि"ति। वदति च—आर्यपुत्र गौतमी आगता। कुतः, मम वृत्तान्तोपलम्भनिमित्तं मम नैरुज्यादिजिज्ञासार्थमित्यर्थः। ता तस्मात् विटपान्तरितो भव शाखासंगुप्तो भूत्वा मनाक् तिष्ठेति भावः। गौतमी वदति, जाते पुत्रि शान्त्युदकं मया तवानैरुज्यवार्त्ताश्रवणादानीतमस्तीत्यर्थः। कुतः कुत्र तिष्ठसि? सप्तम्यर्थे तसिः। "अत्याहितं महाभीति"रिति शाश्वतः। महाभयस्थानमित्यर्थः। अस्वस्थशरीरा सती देवतैव सहायो द्वितीयो यस्यास्तादृशी इत्यर्थः। एकाकिनां संचारो निषिद्धः। यदाह मनुः—"नैकः प्रपद्येताध्वानमि"ति। शकुन्तला—इदानीमेव अनुसूयाप्रियंवदे मालिनीनाम-

येयां नदीमवतीर्णे गते स्त इत्यर्थः। गौतमी शान्त्युदकेन शकुन्तलामभ्युक्ष्य वदति। अपि अत्र प्रश्ने। जाते पुत्रि हे! लघुसंतापानि ते अङ्गानि शान्त्युदकेनेत्यर्थः। "अपि संभावनाप्रश्नशङ्कागर्हासमुच्चय"इति मेदिनी। शकुन्तला—आर्ये अस्ति मे विशेषः। नैरुज्यं किंचिदिदानीं वृत्तमित्यर्थः। गौतमी शुभमाशंसति। तेन हि हेतुना निराबाधा निष्पीडा मे मम चिरं जीव। अभेदान्वयः। चिरसमयं वर्तस्वेति भावः। पुनराह, जाते पुत्रि! दिवसः परिणतः अवसानं गतकल्पः ता तस्मादेहि आगच्छ उटजमेव गच्छावः। शकुन्तला कथंचिदनायत्या उत्थायात्मगतं, हृदय! प्रथमं सुखोपनते मनोरथसंपादकवल्लभे इत्यर्थः। समयक्षेपं करोषि साम्प्रतं अधन्यया दुरदृष्टगृहीतया मया वर्धितस्य तव कथं न प्रतिपद्यसे तव न किमपि स्फुरतीत्यर्थः। पदान्तरे प्रतिनिवृत्य, लतागृहसंतापहारक आमन्त्रयामि त्वां पुनरपि परिभोगार्थम्। अथ चान्यापदेशेन राजानमेव संबोध्याह, लतागृहस्थित हे राजन्नित्यर्थः। तत्पक्षे लता गृहं यस्य स तथा। यद्वा लता अन्यमहादेव्यो गृहे यस्य तादृश हे! "हस्तिजातिप्रभेदेऽपि लता स्त्रीभेदवाचिकेति" धरणिः। इत्युक्त्वा उभे गौतमीशकुन्तले निष्क्रान्ते।

राजा—पूर्वस्थानं संकेतस्थानं दृष्ट्वा वदति। अहो कष्टे, प्रार्थितो योऽर्थः तस्य सिद्धयः विघ्नवत्यः प्रत्यूहयुक्ता भवन्ति। तदेव विशदयति मुहुरिति। पक्ष्मलं चारु बहु पक्ष्मयुक्तमक्षि यस्याः तादृश्याः शकुन्तलायास्तदनिर्वचनीयस्वरूपं मुखं कथमपि उन्नमितं उत्तोलितं न चुम्बितम्। कथमुन्नमितं तत्राह। कीदृशं, अङ्कविवर्त्ति क्रोडघूर्णमानम्। क्वचिदंसविवर्त्तीति पाठस्तत्र स्कन्धदेशप्रापितमित्यर्थः। पुनः किंभूतं, मुहुर्बहुधा अङ्गुलिभ्यां संवृतः पिहितोऽधरो यस्य तत्तथा। पुनः किंभूतं, उन्नमनसमये यत् प्रतिषेधः प्रतिषेधकमक्षरं न ममाधरमुन्नमयेत्यादिवर्णस्तेन यो विक्लवो व्याकुलता तया अभिरामं मनोहरम्। पक्ष्मलत्वं चक्षुषः शुभावहम् तथा च भविष्ये—

नीलोत्पलदलप्रख्यैरातास्रैश्चारुपक्ष्मभिः।
वनितानयनैरेभिर्भाग्यसौभाग्यगामिनी॥

क्वचिदङ्गुलिसंभृताधरोष्ठमिति पाठः। स न साधीयान् प्रकृतानुपयोगित्वादिति॥ ३७॥

क्व नु खल्विति । प्रियारहितमण्डपाद्गमनस्यावश्यार्हत्वात् खलु निश्चये क्व गच्छामीत्यर्थः । अथवा इहैव मण्डपे मुहूर्तं तिष्ठामि । कीदृशे, प्रियापरिभुक्ते । हेतुगर्भविशेषणमिदम् । सर्वतोऽवलोक्य वदति । तस्याः पुष्पमयीति । सहसा हठेन शून्यादपि निर्जनादपि वेतसलतामण्डपादहं बहिर्यातुं न ईशोऽस्मि । अहं कीदृशः, इति अनेन प्रकारेण सज्यमाने आरोप्यमाणे ईक्षणे यस्यार्थात् तदीयतत्तद्वस्तुनि । इति किम्, तस्या इयं शरीरलुलिता देहसंघुष्टा पुष्पमयी कुसुमरचिता शय्या शिलायामस्तीत्यर्थः । एष च नलिनीपत्रे मन्मथलेखः, कीदृशः, तस्याः प्रियाया नखैरर्पितो घटित इति यावत् । अत एव कान्तः कामनाविषयः । इदं च बिसाभरणं मृणालवलयं भ्रष्टं पतितं, कुतः, हस्तादर्थात्तस्या एवेति ॥ ३८ ॥

पुनराह । हा धिक् कष्टे । प्रियां शकुन्तलामासाद्य लब्ध्वा समयक्षेपं कुर्वता मया सम्यक् न चेष्टितम् । तन्मम मूढहृदयं मुग्धचित्तं विघ्नैः क्लिष्टं व्याकुलं सत् इति गणयति चिन्तयति । हृदयं किंभूतं, प्रियायाः शकुन्तलायाः प्रत्यक्षं संमुखे तथावृत्तं परिभोगानुभवप्रकारेण किमपि अनिर्वचनीयं कातरमिव तत्संभोगे निष्क्रियमिव । इति किमित्याह, सा सुवदना कदाचिद् यदि रह एकान्ते प्रत्यासत्तिं सहावस्थितिं यास्यति तदाकालं संभोगसमयं न हास्यामि त्यक्ष्यामि । तस्मिन्नेव समये मया संभोगः कर्त्तव्यः । कुतः, हि यस्माद्धेतोः विषयाः स्रक्चन्दनवनितादयः प्रकृतिदुरवापाः स्वभावदुर्लभा भवन्तीत्यर्थः । पश्चात्तापोऽयं नाट्यालंकारः । यदाह कविकण्ठहारे—"पश्चात्तापोऽनुतापश्च कृत्वा कार्यान्तरं भवेत्" ॥ ३९ ॥

नेपथ्ये कलकल इत्यर्थः । भो राजन् ! अवधेहीत्यर्थः ! पिशिताशनानां राक्षसानां छायाः बहुधा अनेकप्रकारेण चरन्ति । किंभूताः, भयमादधानः त्रासमुत्पादयन्त्यः सन्ध्याभ्रकूटकपिशाः सन्ध्याम्भोदपिङ्गलाः । संचरणस्थानमाह हुताशनवतीमाहिताग्निं वेदिं परितः चतुर्दिक्षु विस्तीर्णाः । "अभितः परित" इति सूत्रेण द्वितीया । संचरणसमयमाह सायंतने सन्ध्याकृत्ये सवनकर्मणि संप्रवृत्ते कर्त्तुमारब्धे सति । "आदिकर्मणि क्तः" । "सवनं त्वध्वरे स्नाने सोमनिर्गलनेऽपि चे"ति मेदिनी ॥ ४० ॥

राजा—भो भोस्तपस्विनो मुनयो मा भैष्ट। अभये बीजमाह। अयं ...न्निवारणयोग्योऽहमागत उपस्थित एवेत्युक्त्वा निष्क्रान्तः ॥

× × ×

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकाया-
मङ्को गतो रतिरसाभिनयस्तृतीयः ॥



# ४

ततः कुसुमावचयं पुष्पत्रोटनमभिनयन्त्यौ सख्यौ प्रियंवदानुसूये प्रविशतः। अत्रानुसूया वदति, हे प्रियंवदे यद्यपि गान्धर्वेण विवाहेन प्रियसखी शकुन्तला निवृत्तकल्याणा निर्व्यूढमङ्गला अनुरूपभर्तृभागिनी संगता वृत्ता इति तथापि मे मम हृदयं न निर्वृत्तं स्वस्थं जातमित्यर्थः। एतावदिदानीं चिन्तनीयं चिन्तास्थानं परम्। प्रियंवदा—किमिति, किं तत् कथयेत्यर्थः। अनुसूया—इष्टिर्यज्ञः तत्परिसमाप्तौ ऋषिभिः प्रेषितः प्रस्थापितः स राजा आत्मनो हस्तिनापुरं स्वनगरं गत्वा इमं जनं शकुन्तलारूपं स्मरिष्यति न वेति। प्रियंवदा—अत्र तावत् विश्वस्ता भव। विश्वासे हेतुमाह। हि यतस्तादृशा आकृतिविशेषा गुणविरोधिनो न भवन्ति। यदाह, "यत्राकृतिस्तत्र गुणा वसन्ती"ति। तथा च न तेन शकुन्तला विस्मरणीयेति भावः। एतावत् पुनश्चिन्तनीयम्। किं तत्राह, तादो दाणीति। तीर्थयात्रातः प्रतिनिवृत्तः प्रत्यागतस्तातः इमं वृत्तान्तं शकुन्तलायाश्चौरिकविवाहवार्त्ता श्रुत्वा न जाने किं प्रति.त्स्यते किमभिधास्यतीत्यर्थः। अनुसूया—यथा यद्यर्थे। यदि मां पृच्छसि तदा अनुमतं तातस्य कण्वस्य। कथमिव। अनुरूपस्य वरस्य हस्ते कन्यका प्रतिपादनीयेत्ययं तावत् प्रथमः कल्पः मनोरथोऽर्थात् कण्वस्य। तद्यदि दैवमेव संपादयति अर्थात्तमेव (सं) कल्पं ननु कृतार्थो गुरुस्तातः कृतकृत्यस्तत्कर्त्तव्यस्य दैवेनैव भाग्येनैव सम्पन्नत्वादित्यर्थः। वरलक्षणं च—

········कुलं विद्या वृत्तमारोग्यं स्त्रीसमीपगः।
रूपवांश्च सनाथश्च वरो नवगुणः स्मृतः॥

एवं ण्विदं एवमेतत्। अवचिदेति। "वलिः पूजोपहारयोरि"ति कोषः। खलु वाक्यालंकारे। वलिकर्मणि पर्यन्तानि यावद्भिः कुसुमैः वलिकर्म पूजाकर्म निर्वक्ष्यति तावन्ति अवचितानि त्रोटितानि। इदानीं गृहं गन्तुमर्हतीति

भावः। क्वचिद् बलिकर्मप्रशस्तानीति पाठः। अनुसूया—ननु शकुन्तलाया अपि सौभाग्यदेवताः षष्ठिकागौरीप्रभृतयः अर्चनीयाः सन्तीत्यर्थः। ता तस्माद्-पराण्यपि कुसुमानीत्यर्थः अवचिनुवः त्रोटयावः। प्रियंवदा—युज्यते अर्थाद्-परपुष्पत्रोटनम्। उभे प्रियंवदानुसूये तदेव कुसुमावचयकर्म अभिनयतः विभावयतः।

नेपथ्ये—अयमहं भोः अयमहमागतोऽस्मीत्यर्थः। अनुसूया कर्णं दत्वा तद्दिशि कर्णं पातयित्वा वदतीत्यर्थः। सखि हे! अतिथिना इव निवेदितं अतिथ्युक्तमिव श्रूयत इत्यर्थः। प्रियंवदा—ननु हे उटजः पर्णशाला तत्र शकुन्तला संनिहिता तयैव तेषामभ्युत्थानं विधेयमिति भावः। अनुसूया—विचिन्त्य तमित्यर्थः। अद्य पुनः असंनिहिता हृदयेन शून्यहृदया राजविरहेण सा उद्विग्ना वृत्तास्तीति। तत्रैव गन्तुमर्हतीति भावः। प्रियंवदा—भवतु इयद्भिः कुसुमैः प्रयोजनमिति गम्यतां, वृत्तमेवापरं कियदवचेयमिति भावः।

नेपथ्ये, आः अतिथिं पराभवसि तिरस्करोषि। मुनिरत्र वीररसाश्रयः। विचिन्तयन्तीति। स पुरुषः स्मारितोऽपि सन् त्वां न स्मरिष्यति। स कः, एकाग्रचित्ता यं पुरुषं चिन्तयन्ती तपोराशिं मामुपस्थितं न वेत्सि न विभावयसि। यद्वा सन्नपि विज्ञोऽपीत्यर्थः। "सन् सुधीः कोविदो बुध" इत्यमरः। अत्रोपमामाह प्रमत्त इव। यथा अप्रमत्ततादशायां कृतामर्थादात्सनैव प्रमत्तः कथां न स्मरति। संविधाननामा नाट्यालंकारः यदाह भरतः—

• आनुकूल्येन बीजस्य रसभावविवृद्धये।
कथायामन्यथा रूपं तत् प्रोक्तं संविधानकम्॥ १॥

उभे सख्यौ श्रुत्वाऽर्थात् तत्कृतशापं विषण्णे उद्विग्ने। प्रियंवदा—हा धिक् हा धिक्। तदेव संवृत्तम्। यदेव विमृष्टमावाभ्यां तदेवं भूत्वा पतितमिति भावः। तत् किं तत्राह। कस्मिन्नपि पूजार्हे मान्ये असंनिहितमना प्रियसखी अपराद्धा सापराधा शकुन्तला वृत्तास्तीत्यर्थः। अनुसूया—न खलु यस्मिन् कस्मिन् वा। यत्तत्शब्दस्थानं नेति भावः। किन्त्वेष परिदृश्यमानः सुलभ-क्रोधो दुर्वासा महर्षिः। सोऽयमिति कथमवगम्यते तत्राह। तथा पूर्वानुभूत-प्रकारेण अविरला निरवकाशा त्वरिता द्रुता एतादृश्यां गत्या प्रतिनिवृत्तः।

प्रियंवदा—कोऽन्यो हुतवहादग्नेर्दग्धुं प्रभवति तथा एवंविधशापकरणेऽसावेवाग्रणीर्नान्यः। ता तस्माद् गच्छ। पादयोः प्रणम्य निवर्तयैनं दुर्वाससमित्यर्थः। अहमपि अस्य अर्घ्योदकमुपकल्पयामि अर्घयोग्यं पुष्पफलसलिलादि ददामीत्यर्थः। प्रियंवदा पदान्तरे स्खलितं स्खलनक्रियां रूपयन्ती अभिनयन्ती वदतीत्यनुषङ्गः। अम्मो कष्टे! आवेगस्खलितया त्वरागमनस्खलनेन प्रभ्रष्टं पतितं अग्रहस्तादधस्ताग्रात् पुष्पभाजनं ममेत्युक्त्वा पुष्पावचयमादत्ते गृह्णाति। अवचित्य पुष्पाण्यत्र ध्रियन्त इति पुष्पावचयः पुष्पभाजनमिति। अनुसूया–सखि हे शरीरीव कोपः मूर्त इव क्रोधः स कस्यानुनयं गृह्णाति कस्यापि प्रबोधं मुनिर्न मन्यत इत्यर्थः। किंचित् पुनः सानुकम्पः कृतः। प्रियंवदा–एतदेवास्मिन् बहुतरं तस्य कृपालवोपार्जनमपि बहुतराशास्यभ्रसाधकमित्यर्थः। ता ततः कथमिदानीं त्वया स प्रसादितः। अनुसूया—यदा यस्मिन् काले कथमपि स महर्षिर्निवर्त्तितुं नेच्छति तदा पादयोः प्रणम्य विज्ञापितः। हे भगवन् प्रथमां पूर्वकृतां भक्तिमवेक्ष्य दृष्ट्वा अद्य तवाविज्ञातप्रभावपरमार्थस्य अनाकलिततेजःस्वरूपस्य दुहितृजनस्य प्रथमापराधो भगवता मर्षितव्यः सोढव्यः। ततः स भगवान् भणति, न मे वचनमन्यथा भवति किंत्वभिज्ञानाभरणदर्शनात् शापो निवर्तयिष्यते इति मन्त्रयन्नेव वदन्नेवान्तर्हितः। प्रियंवदा–सर्वमिदानीं शापान्ते सतीत्यर्थः सुसिद्धं शकुन्तलास्मरणप्रकारो भूत एवेति भावः। क्वचित् शक्यमिदानीमाश्वासितुमिति पाठस्तत्रार्थात् शकुन्तलामिति शकुन्तलाश्वासनं सुशक्यमित्यर्थः। तत्र हेतुमाह। अस्ति तेन राज्ञा निजनगरं प्रस्थितेनात्मनामाङ्कितं दुष्मन्तस्येति नाम्ना चिह्नितं स्मारकमङ्गुरीयकं स्वयमेव शकुन्तलायै पिनद्धं शकुन्तलाङ्गुलौ परिधापितमित्यर्थः। ता तस्मादस्याः स स्वाधीनः उपायो भविष्यति। अनुसूया—एहि आगच्छ। से अस्याः शकुन्तलायाः देवताकार्यं गौर्यादिपूजनं तावन्निवर्त्तयावः। प्रियंवदा—अनुसूये प्रेक्षस्व तावद् वामहस्तोपरि निहितवदनामालिखितामिव प्रियसखीं शकुन्तलाम्। भर्तृगतया चिन्तया आत्मानमपि न विभावयति किं पुनरतिथिविशेषं तादृशं सुलभक्रोधमित्यर्थः। अनुसूया—प्रियंवदे द्वयोरेव नौ आवयोर्मुखे एष वृत्तान्तः शापवृत्तान्तस्तिष्ठतु। "प्रतिक्रियायां वृत्तान्तः कार्श्यवार्त्ताविशेषयोरिति" शाश्वतः। तत्र बीजमाह

रक्षणीया खल्वतिपेलवा प्रियसखी। शापवृत्तान्तमसत्यमेनं श्रुत्वा विरह-विदूनहृदया निश्चितमियं प्राणांस्त्यक्ष्यतीति भावः। प्रियंवदा—कः सम्प्रति उष्णोदकेन नवमालिकां सिञ्चति। मालिकां मालतीं, तदुपमेन शापश्रवणेन त्वरितमियमपि नश्यतीत्यर्थः।

प्रवेशक इति।

वस्तुप्रयोगबाहुल्यादङ्केऽर्थो न समाप्यते।
बहुवृत्तान्तान्यकथैः स विधेयः प्रवेशकैः॥
अङ्कानामन्तरालेषु संक्षिप्तार्थः प्रयोक्तृभिः।
भूतवस्तु(?)कथाबन्धो विज्ञेयस्तु प्रवेशकः॥
हीनाभ्यामेव पात्राभ्यामङ्कादौ यः प्रवर्त्यते।
प्रवेशकः स विज्ञेयः सौरसेन्यादिभाषया॥

इति भाण्डिवचनात्। अत्र हीनपात्रस्य प्रवेशकत्वप्रसक्तौ कथं तापस-प्रवेशकः। उच्यते। मतान्तरमेव तत्। यदाह महाराजः—

विटतापसविप्राद्यैर्मुनिकञ्चुकिभिस्तथा।
प्रवेशकमपीच्छन्ति सन्तः संस्कृतभाषिभिः॥"

प्रवेशयतीति ण्वुलन्तात् साधु॥



प्रथमं सुप्तोऽनन्तरमुत्थितो जागृतः (जागरितः) कण्वशिष्यः प्रविश्य वदति। प्रवासात् सोमतीर्थात् प्रतिनिवृत्तेन प्रत्यागतेन कण्वेन वेलोपलक्षणार्थं कियता कालेन प्रातर्भविष्यतीति जिज्ञासार्थं आदिष्टोऽस्मि। तत्तस्मात् प्रकाशं चत्वरं निर्गत्य, बहिर्भूत्वेत्यर्थः, पश्यामि रजन्याः कियदवशिष्टं रजनी कियती तिष्ठतीति। हन्तेति प्रातर्भवनाद्धन्त हर्षे। प्रभातं वृत्तमेव। तत् सत्यं स्वरूपमेव यत् सूर्याचन्द्रमसौ अस्य जगतः संपद्विपत्त्योः अनित्यताम् अस्थैर्यमपि दर्शयत इति। यथा रविचन्द्रयोरुदयास्तगमने अनित्ये तथा जगतोऽपि संसारिणोऽपि संपद्विपत्ती अनित्ये। कदाचित् संपत् कदाचिद् विपदिति तदेवाह यात्येकत इति। तेजोद्वयस्य रविचन्द्रात्मकस्य युगपदेकदैव यद्व्यसनमस्तगमनं उदयश्च ताभ्यामात्मदशान्तरेषु स्वावस्थाभेदेषु लोको जनो

नियम्यत इव स्थिरीक्रियत इव। "लोकस्तु भुवने जन" इत्यमरः। यतः एकस्यां दिशि ओषधीनां पतिश्चन्द्रः अस्तशिखरं गच्छति रविरेकतोऽपरदिशि आविष्कृतः प्रकाशितोऽरुण एव पुरस्सरोऽग्रगन्ता येन तादृशः सन्नुदयगिरि-शिखरमध्यास्ते। उभयत्र सप्तम्यर्थे तसिः।

"विपत्तावशुभे पापे मानस्त्रीमृगयादिषु।
दैवानिष्टकलासक्तौ व्यसनं कवयो विदुः" इति॥

एतावता पतितः सौभाग्यगर्विताया: शकुन्तलाया अग्रे दुःखं भविष्यतीति सूचितम्॥ २ (मूले ४)॥

अन्यश्चान्तर्हित इति। अबलाजनेन इष्टः स्वामी तस्य प्रवासस्तेन जनितानि दुःखानि अतिमात्रमतिशयेन दुरुद्वहानि दुःसहानि भवन्ति। दृष्टान्तमाह। पूर्वं यामृतकरकलाविलासविकस्वरसकलकुलानन्दितनिखिलजनहृदासीत् संप्रति सैव कुमुद्वती शशिनि चन्द्रे अस्तमिते सति मे मम दृष्टिं न नन्दयति न तर्पयति। कीदृशी, संस्मरणीया चिन्तनीया शोभा यस्यास्तादृशी। कुमुद्वत्याः शोभा चन्द्रेऽस्तमिते स्मर्यते परं न तु दृश्यत इत्यर्थः। अन्यापदेशेन शकुन्तलायाः राजविरहः सूचितः। अन्यापदेशोऽयम्। यदाह—

अन्यस्यापदेशेन तुल्यस्यान्यस्य कीर्त्तनम्।
अन्यापदेशः कथितः कवीन्द्रैः स च पञ्चधा॥ ३ मूले ५)॥

प्रातःसूचकं रूपमाह कर्कन्धूनामिति। अग्रसन्ध्या प्रातःसन्ध्या कर्कन्धूनां बदरीणां उपरि ऊर्ध्वं तुहिनं हिमं रञ्जयति अरुणीकरोति। "कर्कन्धू बदरी कोलिरि"त्यमरः। वीतनिद्रस्त्यक्तनिद्रो मयूरः शिखी दार्भं कुशरचितं उटज-पटलं पर्णशालाच्छदिं मुञ्चति त्यजति। "प्रान्ते तु पटलं छदिरि"त्यमरः। एष च हरिणो मृग उच्चैर्भवति वर्धते। किं कुर्वन्, पश्चाद्भागेन स्वाङ्गं देहमायच्छमान आकर्षन् जृम्भयाङ्गमोटनं कुर्वाण इत्यर्थः। कीदृशः, वेदि-प्रान्तात् परिष्कृतभूमिपार्श्वात् सद्यस्तत्क्षण एव उत्थितः। कीदृशात् खुर-विलिखितात् खुरोत्खातात्। "वेदिः परिष्कृता भूमिरि"त्यमरः॥४(मूले २)॥

अपि च। पादन्यासमिति। सोऽयं चन्द्रः अल्पावशिष्टैर्मयूखैः सह लक्षितो वा गगनादाकाशात् पतति स्खलति। स कः, येन चन्द्रमसा क्षिति-

धरगुरोः पर्वतराजस्य शिरसि पादन्यासं कराधानं कृत्वा विष्णोर्मध्यमं धाम स्थान क्रान्तं आक्रान्तम्। कीदृशेन, क्षपिततमसा निर्वापिततिमिरेण। पतनहेतुमाह। महतामपि उच्चैःस्थानामपि अत्यारूढ़िर्दूरारोहः अपभ्रंशनिष्ठा पतनपर्यवसिता भवति। अथ चापभ्रंशः पातित्यं, अनतिक्रमणीयस्यातिक्रमेण अपभ्रंशः पातित्यं भवति। अत्यारूढ़िः गुरुशिरसि पादारोपणं विष्णोर्धाम्नः स्थानस्याक्रमणं सर्वमेतत् पातित्यहेतुरेव। अथान्यापदेशेन शकुन्तला झटिति दुष्मन्तचित्ताहरणरूपेणात्यारोहेण विरहाम्बुधौ पतिष्यतीति सूचितम्। "स्मृतं धाम गृहेषु चे"ति शाश्वतः॥ ५ (मूले ३)॥

अपटीक्षेपेणाकस्मादित्यर्थः। "पटीक्षेपो न कर्त्तव्यः आर्त्तराजप्रवेशयोरि"ति भरतः। अत्रार्त्तानुसूया वदति, एवमपि नाम विषयपराङ्मुखस्यामुष्य जनस्य एवं न विदितं यथा तथाविधेन राजर्षिणा शकुन्तलाया अनार्यमाचरितमिति। अनार्यं विस्मरणरूपम्। अनुसूया, ननु प्रभातवेला प्रातर्वृत्तमेवातो निद्रां परित्यजामि। अथवाक्षेपे, प्रतिबुद्धा जागृता(?)वा किमिदानीं करिष्यामि। न मे उटजादिकार्येषु प्रभातकरणीयेषु हस्तौ प्रसरतः। उटजादिकार्येषु सम्मार्जनोपलेपनपीठादिप्रक्षालनरूपम्। कचिद् भवतु, निद्रां परित्याजयामि प्रियसखीं शकुन्तलामर्थात्, अथवा प्रतिबुद्धा जागृता(?)किं करिष्यति। उचितेषु सहजेष्वपि प्रभातकरणीयेषु कुसुमत्रोटनेषु से अस्याः हस्तौ न प्रसरतः। ता तस्मादिदानीं कामः सकामः कृतार्थो भवतु येन कामेन असत्यसन्धे असत्यप्रतिज्ञे जने दुष्मन्ते शुद्धहृदया स्वच्छमना नौ आवयोः प्रियसखी पदं स्थानं कारिता। इयं तावत् स्वच्छहृदया स्वरूपभाषिणी स चासत्यप्रतिज्ञः तस्मादयोग्यसमागमघटने कन्दर्पस्य मनोरथः फलत्वित्यर्थः। "प्रतिज्ञापि च सन्धा स्यादि"ति कोषः। "वस्तुस्थानापदेशेषु पदं स्याद् वाक्यशब्दयोरि"ति शाश्वतः। अथवा आक्षेपे। तस्य राजर्षेर्दुष्मन्तस्य नापराधः यतः दुर्वाससः शापः खल्वेष प्रभवति। तत्सामर्थ्यादेनां न स्मरतीत्यर्थः। अन्यथा कथं तादृशः समर्यादो राजर्षिस्तादृशानि नगरगमनमात्रेणैव तवान्तिकं मनुष्यं प्राहेष्यामीति मन्त्रयित्वा निवेद्य एतावतोऽपि कालस्य वार्त्तामात्रमपि न विसर्जयति। विचिन्त्यार्थात् स्मरणप्रकारं, वदति च। इदानीं से तस्या अभिज्ञानाङ्गुरीयकं विसर्ज-

यामि। तदवलोकनावधिः शापस्तेनैव त्यक्ष्यतीति भावः। अथवा आक्षेपे। दुःखशीले दुःखिते तपस्विजने कोऽभ्यर्थ्यतां कस्य वान्यस्याभिज्ञानदानाया-भ्यर्थना कर्त्तव्या त्वमेव गच्छेति भावः। तथापि परस्मै विनिवेद्यताम्। स किं वदतीत्याशङ्क्याह। ननु सखीगामी दोष इति कृत्वा व्यवसितुमपि न पारयावः। शकुन्तलानिष्ठो वृत्तान्तोऽयमिति यत्र तत्र प्रकाशयितुमपि न यातीत्यर्थः। तर्हि स्वाधीनविश्वचरिताय क्षतिलाभभाविने कण्वाय एव कथ्यताम्? तातकण्वस्य वा दुष्मन्तपरिणीतामापन्नसत्त्वामपि शकुन्तलां निवेदितुं न पारयावः इत्यनुषङ्गः। अपिरत्र भिन्नक्रमे। आपन्नसत्त्वां तां श्रुत्वा मुनेरुत्साहो भवितुमर्हति तथापि निश्चितं तैरभिधातव्यं यत् शकुन्तला तत्र नीत्वा भवतीभ्यां धर्षितेति तत् क्रोधशङ्कया तस्याप्यग्रे निवेदयितुं व्यवसायोऽपि कर्त्तुं न शक्यत इत्यर्थः। अत्रेदानीं किं नु खल्वस्माभिः करणीयं तत् कथयेति भावः।

प्रियंवदा—त्वरस्व त्वरस्व सखि, शकुन्तलायाः प्रस्थानकौतुकानि क्रियन्तामिति। अनुसूया सविस्मयम्। आकस्मिकोऽयमुद्यम इति विस्मयः। कथमिव। प्रियंवदे! किमर्थं शकुन्तलायाः प्रस्थानकौतुकं कर्त्तव्यमित्यर्थः। प्रियंवदा—सखि शृणु। इदानीमेव सुखसुप्तिकाप्रश्ननिमित्तं शकुन्तलायाः समीपं गतास्मि; सखि शकुन्तले अद्य सुखेन सुप्तं निद्राद्य जातेति प्रष्टुं तत्संनिधिं गतास्मि। यावदिति लोकोक्तौ। यदा यामि तदा पश्यामि किमित्यर्थः। लज्जावनतमुखीमेनां परिष्वज्य तातकण्व एवमभिनन्दति एवं प्रकारेण तां स्तौतीत्यर्थः। वत्से पुत्रि दिष्ट्या भाग्येन धूमोपरुद्धदृष्टेर्धूमव्याकुललोचनस्यापि मत्परोक्षेऽपि गान्धर्वविवाहस्तव भूतस्तथाप्यनुरूपेण वरेणैव त्वं परिणीतेति भाग्यमेवात्मनो मन्येऽहमिति भावः। अत्र पावकप्रायो राजा आहुतिप्राया शकुन्तला इति। ता तस्मादद्यैव त्वामृषिपरिवृतां कृत्वा भर्तुः सकाशं विसर्जयामि। अनुसूया—सखि केन पुनराचक्षितस्तातकण्वस्यायं वृत्तान्त इति। वृत्तान्तोऽयमावयोरेव ज्ञानगोचरः। अस्मदादिद्वारा प्रकाश एव न क्वापि तथा च न जानीवः कथमयं तातकण्वस्य ज्ञानविषय इति भावः। प्रियंवदा—नूनं तर्कयामि। "शरणं गृहरक्षित्रोरि"त्यमरः। अग्निशरणं अग्न्यागारं प्रविष्टस्य

तातकण्वस्य स्वच्छन्दवत्या वाचा आचक्षित इत्यनुषङ्गः। आकाशे सरस्वत्या निवेदित इत्यर्थः। अनुसूया—कथमिव केन प्रकारेणेत्यर्थः। प्रियंवदा संस्कृतमाश्रित्य पठति दुष्मन्तेनेति। हे ब्रह्मन् दुष्मन्तेन राज्ञा आहितमर्पितं तेजः दधानां बिभ्रतीं तनयां शकुन्तलामित्यर्थः अवेहि जानीहि। किमर्थं, भुवः पृथिव्या भूतये समृद्धयै। कामिव, अग्निगर्भां अभ्यन्तरावस्थिताग्निं शमीमिव। एतावता शमीप्रायायाः शकुन्तलाया अग्निसमः पुत्रो भविष्यतीति सूचितम्। "शुक्रं तेजो रेतसीचे"त्यमरः ॥ ६ ॥

अनुसूया प्रियंवदामाश्लिष्य वदति सखि हे! प्रियं मे प्रियमिष्टं कथयसि त्वमित्यर्थः। किंतु शकुन्तला अद्यैव नीयते पतिगृहं प्राप्यते इत्युत्कण्ठासाधारणमिदानीं परितोषमनुभवामि। उत्कण्ठा भवति परितोषश्चेत्यर्थः। आवां उत्कण्ठां विनोदयिष्यावः, सा तपस्विनी वराकी स्वस्थचित्ता भवतु। तेन ह्यस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके। "समुद्गकः संपुटक" इत्यमरः। नारिकेलसंपुटे तन्निमित्तमेव निक्षिप्ताः कालान्तरक्षमाः विरलकालस्थायिनः केशरचूर्णास्तिष्ठन्ति। केशरो बकुलस्तच्चूर्णादीनि स्त्रीणामुद्वर्तनानि क्रियन्त इति प्रसिद्धिः। ता तस्मात्त्वं नलिनीपत्रगतान् कुरु चूर्णानित्यर्थः। यावदस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि च मङ्गलसमालम्भनं विरचयामि।

नेपथ्ये वदत्यर्थात् कण्वः। हे गौतमि आदेशय शार्ङ्गरव—शारद्वतमिश्रान् शिष्यानित्यर्थः। प्रयोजनमाह :शकुन्तलां नेतुं सज्जीभवन्तु भवन्तः। शकुन्तलाद्य श्वश्रूगृहं यास्यति तत्समाजेन भवद्भिरपि गन्तव्यमित्यतो गमनौपयिकरूपमवलम्बयन्तु भवन्त इत्यर्थः। प्रियंवदा- अनुसूये त्वरस्व त्वरस्व। एते खलु हस्तिनापुरगामिनो मुनयः शब्दायन्ते अर्थात् ये ये शकुन्तलासमाजेन यास्यन्ति ते आहूयन्त इत्यर्थः। एषा सूर्योदय एव सुखमज्जिता प्रतीष्टनीवारभाजनाभिस्तपस्विनीभिरभिनन्द्यमाना कृतशुभाशंसना शकुन्तला। तामुपसर्पावः। तथा कुरुतः उपसर्पणं कुरुत इत्यर्थः। शकुन्तला—भगवत्यः वन्दे नमस्करोमि। गौतमी—वत्से भर्त्तुर्बहुमानपूर्वकं देवीशब्दमधिगच्छ। अपरास्तापस्यः शुभमाशंसन्ति। वत्से वीरप्रसविनी भव। सख्यौ—सखि सुखमज्जनं सुखस्नानं ते भवतु। शकुन्तला स्वागतं कुशलं प्रियसख्योरिति निवेदितं

अत्रोपविशतमित्यर्थः। सख्यौ उपविश्य वदतः, हला सखि ऋजुका भव मत्संमुखीभूयोपविशेत्यर्थः। होहीति भू सत्तायां भुवो हो आदेशः। यावत्ते तव मङ्गलसमालम्भनं कुर्वः। शकुन्तला उचितमेवैतद् बहु मन्तव्यम्, तावत् कृत्येऽपि त्वत्कृते बहुबुद्धिरद्य भवतीत्यर्थः। अत्र बीजमाह, दुर्लभमिदानीं पुनः सखीमण्डनं भविष्यति अद्यारभ्य सखीकर्तृकप्रसाधनं मम दुर्लभं भविष्यतीत्युक्त्वा वाष्पं विसृजति। सखि न युक्तमस्मिन् काले रोदितुम्। उत्साहकालोऽयमतः किमर्थं रुद्यत इत्यर्थः। नाट्येन प्रसाधयतः मण्डयतः इत्यर्थः। अहो कष्टे आभरणार्हं से अस्या रूपं आश्रमसुलभैः प्रसाधनैः विप्रलभ्यते। कनकाभरणयोग्यमेतद्गात्रं दूर्वाकिसलयादिभिः प्रतार्यत इत्यर्थः।

ततः प्रविशत आभरणहस्तौ मुनिकुमारकौ। तत्रैको वदति इदमिदमलंकरणजातम्। इदं सौवर्णं राजतं माणिक्यमाभरणमस्तीत्यर्थः। अलंक्रियतां आयुष्मती। विलोक्य आभरणजातमित्यनुषङ्गः। गौतमी वदति–वत्स हारीत कुत इदमासादितम्? हारीतः–तातकण्वप्रभावात्। गौतमी–किं मानसी सिद्धिः अर्थात् कण्वस्य? हारीतः—न खल्विति लोकोक्तौ। तत आनन्तर्ये। केनचित्तरुणा क्षौमं दुकूलं मङ्गलार्हं आविष्कृतं दानाय प्रकाशितमित्यर्थः। इन्द्रपाण्डु चन्द्रधवलम्। यद्वा केनचित्तरुणा मङ्गलप्रकाशकं वच आविष्कृतं, शकुन्तला पत्युः सुभगा भवत्वित्यादि कल्याणवाक्यं प्रकाशितमित्यर्थः। "क्षौमं महाधनं वास" इति हारावली। अन्येन केनचित्तरुणा चरणोपरागसुभगश्चरणरञ्जनमनोहरो लाक्षारसः आलक्तकरसो निष्ठ्यूतः उद्गीर्णः। अन्येभ्यस्तरुभ्यो वनदेवताकरतलैर्नोऽस्मभ्यं आभरणानि दत्तानि।

> स्याद्भूषणं त्वाभरणं चतुर्धा परिकीर्त्तितम्।
> आवेध्यं बन्धनीयं चारोप्यमाक्षिप्यमेव तत्॥
> आवेध्यं कुण्डलादि स्याद् बन्ध्यं तु कुसुमादिकम्।
> हाराद्यारोप्यमाख्यातं प्रक्षेप्यं नूपुरादिकम्॥ इति कविकण्ठहारः।

कीदृशैः करतलैः वृन्तात् पर्वपर्यन्तमुद्गतैः। "पर्व क्लीवमाह ग्रन्थावि"ति मेदिनी। पुनः कीदृशैः, पल्लवद्युतिविजिगीषुभिः॥ ७॥

शकुन्तलामन्यापदेशयति प्रियंवदा। हला सखि कोटरसंभवापि मधुकरी पौष्करं पाद्ममेव मधु मकरन्दमभिलषति इच्छति यथा तथा तपोवनकन्यकयाप्यनया महेश्वरीयोग्यमेवाभरणजातमासादितमित्यर्थः। "मधु पुष्परसं विदु"रिति शाश्वतः। गौतमी—जाते पुत्रि अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीरिति। अभ्युपपत्तिराकस्मिकैव संनिधानप्राप्तिः। यद्वा अचेतनपादपादिकर्तृकमधुरवचनानुमतिः। प्रस्थानकाले मधुरवाक्यमतिप्रशस्तम्। तथा च ज्योतिषि "यात्रायां मधुरं वाक्यं सर्वापेक्षितसूचक"मिति। अनुसूया—सखि अननुभूतभूषणोऽयं जनः कथं त्वामलंकरिष्यति। वनवासित्वादज्ञाताभरणकरणप्रकारोऽयं मद्रूपो जनः कथं त्वां भूषयतीत्यर्थः। वर्त्तमानसामीप्ये लट्। चिन्तयित्वार्थादाभरणप्रकारम्। चित्रकर्मपरिचयेन चित्रलिखने यथाभरणप्रयोगो दृष्टोऽस्ति तेनैव प्रकारेणात्रापीत्यर्थः। यद्वा चित्तकर्म संकल्पः मानसो व्यापारः तेन परिचयेन ज्ञात्वाङ्गेष्वाभरणविनियोगं कुर्वः। जाणिय इति ज्ञा अवबोधने क्त्वा ल्यप् ज्ञो जाण अणाविति सूत्रेण साधु। शकुन्तला—जानामि युवयोर्निपुणतामिति अज्ञानत्वं कथं भावयथः। पूर्वमेवारभ्य ज्ञायत एव युवयोराभरणकरणकौशलमित्यर्थः।

ततः प्रविशति स्नानोत्तीर्णः कृतस्नानः कण्वः। तद्व्याकुलत्वं प्रकाशयन्नाह कण्वः। यास्यत्यद्येति। अद्य शकुन्तला यास्यति श्वश्रूगृहमित्यनुषङ्गः। इति कृत्वा मम हृदयं चेतः उत्कण्ठया औत्सुक्येन संस्पृष्टमालिङ्गितम्। गदितं भाषितं मम अन्तर्वर्ती यो वाष्पस्तस्य भरेणाधिक्येन उपरोधि उपरुद्धमस्पष्टमिति यावत्। अश्रुणः पूर्वावस्था वाष्पः स चात्रानन्देर्ष्यार्त्तिसंभवः। यदुक्तम्—

> वाष्पो नामाश्रुणः पूर्वावस्था च जायते त्रिधा।
> निमित्तत्रयसंसर्गादानन्देर्ष्यार्तिसंभवा ॥ इति ॥

दर्शनं ज्ञानं चिन्तया जडं कर्त्तव्यापरिच्छेदकम्। यद्वा दर्शनं नयनं चिन्तया जडं विषयाग्राहकम्। उत्सुकचेतसो भवत्येवायं क्रमः। तथा च भरतः—

> निद्रानाशश्च चिन्ता च भ्रान्तिश्चौत्सुक्यचेतसाम्।
> दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ॥ इति विश्वः ॥

तावन्लोकोक्तौ अपिगर्भमेतत् । अरण्यौकसोऽरण्यवासिनोऽपि मम स्नेहात् प्रेम्णः ईदृशमुक्तक्रमं वैक्लव्यं व्याकुलता । नु प्रश्ने । गृहिणो गृहस्थास्तनया-विश्लेषदुःखैर्नवैरभिनवैः कन्याविरहक्लेशैः कथं पीड्यन्ते क्लिश्यन्ते अपि तु गृहस्थाः सुतरामित्यर्थः । अरण्यौकसस्तपस्विनोऽहर्निशं तपोऽर्जनव्यावृत्या-पत्येऽसान्निध्यात्तादृशं प्रेम नोत्पद्यते; गृहिणामनुक्षणं सान्निध्यादतिशयेनापत्ये प्रणयोत्पादात् अल्पैरपि तद्विरहखेदैः प्रायस्ते क्लिश्यन्त इति भावः । आनन्दस्तु एतत्समुचितवरमन्विष्यतस्त्रिजगत्यां तिरस्कृतनित्यक्रियस्य ममानयैव स्वयमेवात्मसदृशमभिनवमदनरुचिरं वृत्वा प्रतिज्ञा सफलीकृता इति । ईर्ष्या च आत्मयोग्यवरेणापि मामसंबोध्यैवास्या विवाहो भूत इति । आर्तिस्तु कथमत्रैकाकिना शकुन्तलाविरहविदूनहृदयेन स्थातव्यमथवा कथ-मेषारण्यवासिनी तपस्विनी विषमान्तःपुरकलावतीनां पुरतःराज्ञोऽनुरागातिशय-मुपार्जयिष्यतीति । क्वचित् कथं न तनयाविश्लेषेति पाठस्तत्र तनयाविश्लेष-दुःखैर्गृहिणो गृहस्थाः कथं न पीड्यन्ते अपि तु भवन्त्येवातिपीडिता इति ॥८॥

सख्यौ—सखि शकुन्तले अवसितमण्डना इदानीं त्वमसि तस्मात् परिधेहि साम्प्रतं चित्रं क्षौमयुगलमिति । अवसितमण्डना निष्पन्नप्रसाधना । कण्व उपसर्पति । शकुन्तला अभ्युपैति । गौतमी वदति, जाते एष ते आनन्दवाष्प-परिवाहिना लोचनेन परिष्वजन्निव गुरुरुपस्थितः तस्मात् सादरं प्रतिपद्यस्व । गुरुः कण्वः परिभवन्निव (?) वर्षन्निव महाव्याकुलोऽयं पिता तस्मात् सगौरव-मेनं संनिवेहीत्यर्थः । शकुन्तला—तात वन्दे । कण्वः—ययातेरिति पत्युः स्वामिनो बहुमता भव आदृता भव । केव, ययातिनाम्नो दुष्मन्तपूर्वपुरुषस्य नृपस्य यथा शर्मिष्ठा । सा तस्य परमादृतासीत् । त्वमपि सम्राजं पुत्रं प्राप्नुहि ।

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राड्—॥ इत्यमरः ॥

केव, सा पुरुमिव । यथा सैव शर्मिष्ठा पुरुनामानमलभत तथा त्वमपी-त्यर्थः । आशीर्नामायमलंकारः । यदाह—

वात्सल्याद् यत्र मान्येन कनिष्ठस्याभिधीयते ।
इष्टावधारकं वाक्यमाशीः सा परिकीर्त्तिता ॥ ९ ॥

गौतमी—वरः खल्वेष नाशीः। संतुष्टदेवतादेरवश्यंभावि वचनं वरः। तथा च शाश्वतः—

वरो जामातरि श्रेष्ठे देवतादेरभीप्सिते।

अविद्यमानार्थाशंसनमाशीमाशीः—॥ इति ॥

कण्वः—वत्से इत इतः। अत्रागृच्छेत्यर्थः। सद्योहुताग्नीन् तत्क्षणकृतहोमाग्नीन् प्रदक्षिणीकुरुष्व प्रदक्षिणीकृत्य नमस्कुर्वित्यर्थः। सर्वे परिक्रामन्ति अग्निसमीपं गच्छन्तीत्यर्थः। कण्वः—वत्से अमी वैताना वह्नयस्त्वां पालयन्तु रक्षन्तु। कीदृशाः, वेदीं परितः वेद्याः समीपे समिद्वन्तः ससमिधः प्रान्तसंस्तीर्णदर्भाः चतुर्दिशास्तृतकुशाः हव्यगन्धैर्हवनीयद्रव्यसौरभैर्दुरितं विघ्नं अपघ्नन्तः अपनयन्तः। वेदीं परित इत्यत्र अभित इत्यादिना द्वितीया। "वितानो यज्ञ उल्लोच"इति मेदिनी ॥ १० ॥

इदानीमग्निप्रदक्षिणानन्तरं प्रतिष्ठस्व गमनोद्योगं कुरु। सदृष्टिविक्षेपं सर्वत्र दृष्ट्वा वदतीत्यर्थः। ते शार्ङ्गरवशारद्वतमिश्राः क तिष्ठन्तीत्यर्थः। शिष्यास्त्रयः प्रविश्य वदन्ति, भगवन्निमे स्म इह तिष्ठाम इत्यर्थः।

"देवाश्च मुनयश्चैव लिङ्गिनः साधनाश्च ये।

भगवन्निति ते वाच्याः सर्वैः स्त्रीपुंनपुंसकैः॥

इति भरतः। कण्वः—वत्स शार्ङ्गरव भगिन्याः शकुन्तलायाः पन्थानमादेशय। येन पथा शकुन्तला पतिगृहं यास्यति तं कथयेत्यर्थः। शार्ङ्गरव—इत इतो भवती। अनेन पथा गच्छेत्यर्थः। तृतीयार्थे तसिः। भोः भोः सन्निहिता देवता येषु तादृशास्तरवः। यद्वा सन्निहितदेवता निकटस्था देवता तपोवनतरवश्च शृण्वन्तु। अत्र वाक्यार्थमेव कर्म। पातुं नेति। सेयं शकुन्तला पतिगृहं गच्छति अतो हेतोः सर्वैरेव भवद्भिरनुज्ञायताम्। सा का, या युष्मासु असिक्तेषु अदत्तजलेषु सत्सु प्रथमं आद्यतः पयः पातुं न व्यवस्यति पानीयपानव्यवसाये उदास्त इत्यर्थः। या प्रियमण्डना किसलयाद्यलंकरणचिकीर्षुरपि भवतां पल्लवं स्नेहेन न आदत्ते क्षतादिभवनाद् भीरुः किसलयं न गृह्णातीत्यर्थः। यस्याः शकुन्तलायाः वो युष्माकं आद्ये प्राथमिके कुसुमप्रबोधसमये उत्सवो भवति ॥ ११ ॥

शाङ्गरवः—कोकिलशब्दं सूचयित्वा वदतीत्यनुषङ्गः। आमिति स्मरणाभिनये। भगवन् ज्ञातमित्यर्थः। सेयं शकुन्तला वनवासबन्धुभिररण्यवासस्निग्धैस्तरुभिरनुमतगमना। कथमेवमवगम्यते तत्राह। यद्य इदानीं कलमव्यक्तं परभृतविरुतं पिकस्वनं एभिस्तरुभिरात्मनः अस्य प्रतिवचनीकृतं प्रत्युत्तरीकृतम्। अन्योऽपि व्याहृतः प्रत्युत्तरयति अमीभिरपि वृक्षैर्भवद्व्याहृतैः कोकिलनिनदैरेव प्रत्युत्तरितमस्तीत्यर्थः। यात्रायां कोकिलारवः शुभसूचकः॥ १२॥

तरूणां प्रतिवचनं पिकरवेणैव संपन्नमिदानीं देवताप्रत्युत्तरमाह रम्यान्तर इति। अस्या शकुन्तलायाः पन्थाः शान्तो वाटपाटच्चरादिशून्यः अनुकूलपवनश्च शिवः सुखदो भूयात्। कीदृशः, कमलिनीहरितैः पद्मिनीहरिद्वर्णैः सरोभिः रम्यान्तरः मनोहरमध्यः छायाद्रुमैरपनीततरणिकिरणसंतापः। कुशेशयरजोमृदुरेणुः सरोरुहकोमलकणः।

पूर्वाह्णेऽपराह्णे च तलं यस्य न मुञ्चति।
अत्यन्तशीतलच्छाया स छायातरुरुच्यते॥
वामेन मधुरं वाक्यं वृक्षाः पल्लविनो यतः।
अनुकूलो वहन् वायुः प्रस्थाने शुभसूचकः॥

"शतपत्रं कुशेशयम्" इत्यमरः॥ १३॥

सविस्मयमिति। अकस्मादन्तरिक्षे व्यक्तवचनश्रवणाद् विस्मयः। गौतमी वदति, पुत्रि ज्ञानिजनस्नेहं (स्निग्धं) यथापत्यादौ क्वापि प्रस्थिते ज्ञातिलोकाः स्नेहात् शुभाशंसनमाचरन्ति ततोऽनुज्ञां ददति तथा तपोवनदेवताभिर्गमने गमननिमित्तं अभ्यनुज्ञातासि दत्तस्वीकारासि। ता तस्मात् प्रणम भगवतीः। शकुन्तला—जनान्तिकम् एकान्ते। प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि तपोवनं परित्यजन्त्याः दुःखदुःखेन मम चरणौ पुरोमुखौ निपतत इति। यद्यप्यार्यपुत्रदर्शने महत्येवोत्कण्ठा तथापीदं जन्मस्थानं परित्यज्यत इत्युद्व्याकुलत्वात् पदमपि दातुं न पार्यत इत्यर्थः। यात्रायां दुःखदुःखेति पदव्याहारादग्रेऽस्याः दुःखं सूचितम्। प्रियंवदा—न केवलं तपोवनविरहकातरा त्वमेव। त्वया उपस्थितवियोगस्य तपोवनस्याप्यवस्थां प्रेक्षतां भगिनी। तपोवनपरित्यागेन

त्वमेव परमुद्विग्ना भवन्त्यसीति न, भविष्यद्विरहस्य तपोवनस्याप्यचेतनस्यापीत्यर्थः, यादृशी अवस्था वृत्तास्ति तां भगिनी पश्यत्वित्यर्थः। अवस्थामेव विवृणोति उद्गीर्णेति—

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्त्यङ्गानि वनलताः॥

मृगी तावत् उद्गीर्णदर्भकवला निष्कासितकुशग्रासा दृश्यत इत्यनुषङ्गः। मयूरी उज्झितनृत्या दृश्यते। मोरा इति पाठे मयूरा इति। किमपरं, वनलता अङ्गानि मुञ्चन्ति पातयन्ति। कीदृश्यः, अपसृतपाण्डुपत्राः लतायां क्वचित् पत्रापसरणं भवतीत्यनुभवसिद्धमेव किन्तु तद्व्याजेन शकुन्तलाविरहविद्रुतहृदयाः सत्योऽङ्गपातनं किमु कुर्वन्तीति॥ १४॥

शकुन्तला—तात हे। लताभगिनीमामन्त्रयिष्ये संबोधयिष्यामि। कण्वः-वत्से हे। ते तवास्यां लतायां सौहार्दं प्रेमावैमि वेद्मि। इयं सा लता दक्षिणेन संनिहितदक्षिणभागे तिष्ठतीत्यर्थः। एनबन्यतरस्यामदूरेऽपञ्चम्या इत्येनप्रत्ययः। शकुन्तला—वनतोषिणि वनसंसक्ते (?) प्रत्यालिङ्ग मां शाखामयैर्बाहुभिरद्यप्रभृति दूरवर्त्तिनी खलु ते भविष्यामि। अद्यारभ्य तव दूरस्था भविष्यामि अतो निर्भरपरिष्वङ्गं देहीत्यर्थः। तात अहमिव इयं चिन्तनीया। यावतैव प्रेम्णा मत्प्रतिपालनं कृतं तावतैवास्या अपि परिपालनं कर्त्तव्यं तच्च पानीयदानालवालपरिष्कारादिरूपं विधेयमिति भावः। यथा स्वरूपवरा अहं कृता तथेयमपि अनुरूपपादपेन संगमनीयेति भावः। कण्वः वत्से हे! शृणु संकल्पितमिति। हे पुत्रि प्रथममाद्यतस्त्वदर्थं मया संकल्पितं त्वद्वरकरणे प्रतिज्ञातं त्वं सुकृतैरेव सुचरितैरेवात्मसदृशं रूपकुलादिना स्वसदृशं भर्तारं गतासि। संप्रति त्वयि भवत्यां वीतचिन्तस्त्यक्तवरानुसंधानः अस्या माधवीलताया इमं परिदृश्यमानं कान्तं सुन्दरं समीपसहकारं संनिहितचूतं वरं जामातरं करिष्ये। "वरो जामातरि श्रेष्ठ" इति शाश्वतः। तत्तस्मादित: स्थानात् पन्थानं प्रतिपद्यस्व वर्त्मनि चलेत्यर्थः॥ १५॥

शकुन्तला—सख्यौ हे! एषा माधवीलता द्वयोरपि युवयोर्हस्ते निक्षेपः स्थाप्यः। यथा स्थाप्यो रक्ष्यते तथेयमपि रक्षणीयेत्यर्थः। सख्यौ—प्रियं-

वद्गानुसूये सास्रं वदतः। अयमस्मद्रूपो जनः कस्य समर्पयितव्यः ? इयमावयोर्हस्ते समर्पिता तेनास्याः परिपालनमावाभ्यामेव कर्त्तव्यम्। कण्वः—अनुसूये हे। रुदितेनालं वृथा। ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या तपोवनविरहखेदरहिता विधेया। शकुन्तला मृगीं दृष्ट्वा वदतीत्यनुषङ्गः। तात एषा उटजपर्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा भवति तदा मे कमपि निवेदयितारं विसर्जयिष्यथ इति। यदेयं सुखेन प्रसूते तदा तां वार्त्तां निवेदयितुं भवता कोऽप्यस्मत्स्थानं प्रस्थापनीय इत्यर्थः। मा एतद् विस्मरिष्यथ। कण्वः—वत्से नेदमिति। निश्चितं तत्काले कल्याणवार्ताकथयिता प्रहेतव्य इत्यर्थः। शकुन्तला गतिभेदमवरुद्धगमनमभिनीय वदतीत्यनुषङ्गः। अम्मो कष्टे। को नु खलु पदाक्रान्त इव पुनः पुनर्मे वसनं कर्षतीव वहुशो मम वस्त्राञ्चलं गृह्णातीत्यर्थः। विलोकयति। विलोकनं दर्शनं, यदाह भरतः—"पृष्ठतो दर्शनं यत्र तद्विलोकितमुच्यते"। कण्वः—सोऽयमिति। सोऽयं पुत्रकृतकः कृत्रिमपुत्रो मृगस्ते तव पदवीं न जहाति। कीदृशः, श्यामाको व्रीहिविशेषस्तस्य या मुष्टिस्तेन परिमितः श्यामाकः तेन परिवर्धितकः अतिशयेन समृद्धीकृतः पोषित इति यावत्। स कः, यस्य मुखे इङ्गुदीनां तैलं त्वया न्यषिच्यत निःक्षिप्तं, कीदृशे मुखे कुशासूचिविद्धे दर्भाग्रखण्डिते, तैलं कीदृशं, व्रणविरोहणं क्षतप्ररोहकम्। मुष्टिलक्षणं—

> अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिताः।
> तासामुपरि चाङ्गुष्ठं स मुष्टिः परिकीर्त्तितः॥

श्यामाकस्तालव्यः॥ १६॥

शकुन्तला—वत्स किमर्थं मां सहवासपरित्यागिनीमनुबध्नासि। ननु अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्धितोऽसि तथा इदानीं मया विरहितं तातस्त्वां चिन्तयिष्यति। तस्मान्निवर्त्तस्व। वत्स अचिरप्रसूतोपरतया प्रसवाव्यवहितलोकान्तरितया। कण्वः—वत्से रोदनेन वृथा। यात्राकाले रोदनस्याप्राशस्त्यादिति भावः। स्खलनभवनशङ्कया धैर्यकरणाय पुनः श्लोकेनाह उत्पक्ष्मणोरिति। हे वत्से स्थिरतया वाष्पं अश्रु शिथिलानुबन्धं शान्तारम्भं कुरु। किंभूतं वाष्पम्, उत्पक्ष्मणोः स्तब्धरोम्णोर्नयनयोरुपरुद्धवृत्तिम्। वाष्प-

शैथिल्ये हेतुमाह। खलु यतः अस्मिन् मार्गे तव पदानि विषमीभवन्ति स्खलितानि स्युः। मार्गे कीदृशे, अर्धक्षिप्तोऽर्धकृष्टः निम्न उन्नत उच्चो भूमिभागो यत्र तादृशे। अत्र वात्सल्यत्वेन शोचनाभयमभिव्यज्यते न कण्वाश्रमो दुःखा-वेश इति॥ १७॥

शार्ङ्गरव—भगवन् स्निग्धं उदकान्तात् पानीयनिकटं यावत् अनुगन्तव्य इति श्रूयते। यदाह "ओदकान्तात् प्रियं पान्थमनुव्रजे"दिति। तदस्त्विदं सरस्तीरम्। अत्र नोऽस्मान् संदिश्य संयुज्य उपदिश्य वा प्रतिगन्तुं प्रति-निवर्तितुम् अर्हसि युज्यस इत्यर्थः। तेन हि स्वीकारे। अनुसूया—सखि न स आश्रमगतो अस्ति कोऽपि सत्त्वस्त्वया विरह्यमाणो न ताम्यति न खिद्यत इत्यर्थः। तस्मात् प्रेक्षस्व त्वद्विरहविधुरहृदयचेष्टामिति शेषः। पुटकिनीति।

पुटकिनीपत्रान्तरितां व्याहृतोऽपि नानुव्याहरति प्रियाम्।
तथोद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः॥

चक्रवाकः प्रियां चक्रवाकीं नानुव्याहरति न प्रत्युत्तरयति। अनुक्तः स कथं व्याहरिष्यति तत्राह—व्याहृतः वादितोऽपि तयेति शेषः। प्रियां कीदृशीं, कमलिनी दलान्तरिताम्। कथं तया स व्याहृतस्तत्राह, तथा पूर्वप्रणयानुरूप-प्रकारेण उद्व्यूढमृणालः निजाहारार्थोद्धृतकिसलयः। अननुव्याहारे बीजमाह, त्वयि भवत्यां दृष्टिं ददाति औत्सुक्यत्वरितभवद्विलोकनलालसस्त्वां पश्यतीत्यर्थः॥ १८॥

यथायमुद्व्यूढमृणालोऽपि प्रियामपहाय मद्व्यासक्तलोचनस्तथा मृणाल-वलयहरस्वरूपदर्शितप्रणयोऽपि राजा मामपहायान्यकलत्रासक्तदृष्टिर्भविष्यती-ति निजपरित्यागमाशङ्कमाना शकुन्तलाह, सखि सत्यमेव नलिनीपत्रान्तरितं प्रियं सहचरमप्रेक्षमाणा आतुरं चक्रवाकी आरसति रौति। सत्रासं, अन्यथैवं माभूदिति त्रासः। दुष्करमयं चक्रवाकः करोति किमप्युद्वेगजनकं सूचयती-त्यर्थः। त्रस्तां शकुन्तलामाश्वासयति प्रियंवदा—

अथ प्रियेण विना गमयति रात्रिं विसूरणादीर्घाम्।
कष्टं गुर्वपि दुःखमाशाबन्धः सहापयतीति॥

प्रियेण विना अयं रात्रिं गमयति प्रकरणात् सैव चक्रवाकीत्यर्थः। कीदृशीं रात्रिं, खेददीर्घां दुःखदुस्तराम्। खेदे सूरविसूरणौ चेति निपातसूत्रात् विसूरणशब्देन खेद उच्यते। ननु सहचरचक्रवाकविरहेण स्मरनिशित-विशिखासारविशीर्यमाणहृदया कथमियं रजनीं गमयिष्यतीत्याह। हन्त कष्टे। गुरुकमपि दुःखं खेदमाशाबन्धः अस्याशाबन्धः सहायति। निश्चितं तद्विरहविविधविदूनहृदयो मत्प्रियः प्रातर्मां संगमयिष्यति इत्येवंरूप आशा-बन्धः इति। "आशाबन्धः समाश्वासे तथा मर्कटजालक" इति कोषः। एतावता पतिगृहं गताया: शकुन्तलाया अपि दुःखानन्तरं सुखमेव भविष्यतीति सूचितम्। आश्वासनामालंकारः, यदाह नाट्यशेखरे—"आश्वासः कोमलैर्वाक्यैः खेदविप्लावकं वचः" ॥ १९ ॥

कण्वः—अस्मानिति। हे राजन्! इयं शकुन्तला दारेषु वधूषु। दारशब्दः पुंलिङ्गः कलत्रवाचको नित्यबहुवचनान्तः। सामान्यप्रतिपत्तिपूर्वकं साधारण-गौरवपुरस्सरम्। "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि चे"ति विश्वः। त्वया दृश्या। यादृशेन गौरवेणापरवधूरालोक्यते तादृशेनेयमपीत्यर्थः। अन्यवधूभ्योऽस्यामेवातिरिक्तगौरवं कथं न याच्यते तत्राह—अतः परमतिरिक्तगौरवं भाग्याधीनम्। "भवान्तरकृतं कर्म भाग्यमाहुः शुभात्मक"मिति शाश्वतः। वध्वा शुभादृष्टसाध्यं खलु निश्चितं तदतिरिक्तगौरवादिकं स्त्रीबन्धुभिर्वधूबान्धवैर्न याच्यते। पित्रोः पुण्यामेतदेवाशास्यं यदपरकलत्रपुरस्काराविरोधेन पतिस्तामवलोकयतीति। सामान्यप्रतिपत्तिप्रार्थने बीजमाह। किं कृत्वा, अस्मान् साधु यथास्यात्तथा संयमधनान् विचिन्त्य आकलय्य। संयमधनत्वस्योट्टङ्कनेन विपरीताचरणे मुनेः शापानुग्रहादिना राज्ञोऽभद्रसंभवनसंभावना ध्वनिता। वस्तुतस्तु संयमधनपदेनात्मनः नैस्स्वप्रकाशाद् धनाधीनविनयस्य जामातुर्विनय-भावदुस्तरशङ्का परिहृता। आत्मनश्च निजस्यापि उच्चैः कुलं विचिन्त्य। कुलस्योच्चैस्त्वं पुराणोक्तरूपवत्त्वम्। यदाह

वेदो वृत्तं च संबन्धो भूमिरग्निपरिग्रहः।
धर्मः सत्यं तपश्चैव अष्टाङ्गकुलमुच्यते ॥

कुलीनस्य निजवधूषु विषमव्यवहारस्याधर्महेतुत्वमिति। तथा चोक्तमिति-हासे—

द्विभार्यः पुरुषो यस्तु स्नेहेनैकां न पश्यति ।
तेन पापेन लिप्यामि यद्यहं नागमे पुनः ॥

त्वयि भवति विषये । तामनुभवसिद्धामित्यर्थः । अथान्यथकृतामुप-जीव्याद्यसंबोधरहितां कथं कथमपि त्वदाग्रहेणेत्यर्थः । भावप्रवृत्तिं अभिप्रायवृत्तिं चेष्टावृत्तिमात्मवृत्तिं वा । तां च अस्याः शकुन्तलायाः संचिन्त्य विभाव्य ।

भावस्सत्तास्वभावाभिप्रायचेष्टात्मयोनिषु ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥ इति विश्वः ॥

"प्रवृत्तिः कथिता वृत्ता"ेति शाश्वतः । अत्र दैन्यरूपेण रसस्यानुबन्धः । यदाह-

सुहृत्त्यागादनुत्कर्षो वाक्यादेर्दैन्यमुच्यते ॥ २० ॥

अनुशासनीया उपदेश्या । वनौकसो वनवासिनः । लौकिकज्ञा लोकव्यवहारज्ञाः । धीमतां पण्डितानां अविषयोऽगोचरः सकलकार्यजातं विज्ञानगोचर इत्यर्थः । पतिगृहप्राप्तिसमयकर्त्तव्यजातमुपदिशन्नाह कण्वः । सा त्वमिदानीमिति । वत्से गुरून् श्वशुरादीन् शुश्रूषस्व आराधय । सपत्नीजने प्रियसखीवृत्तं चरित्रं कुरु । "चरित्रछन्दसोर्वृत्तमि"ति शाश्वतः । यथा प्रियसख्या समं वार्त्ता कथ्यते तथा सपत्नीभिरपि सह कथयेदित्यर्थः । विप्रकृता कृतविप्रिया प्रतीपमन्यथाभावं रोषणतया मा गमः स्म । न माङ् योगे इत्यटो निषेधः । न याया इत्यर्थः । परिजने भृत्यादौ भूयिष्ठमतिशयेन दक्षिणा भव सस्नेहा भव । भोगेषु सुखेषु अनुत्सेकिनी अभ्यासरहिता भव । "उत्सेकोऽनास्थाभ्यासावि"ति । एवं कृते सति युवतयः गृहिणीपदं गृहिणीशब्दं यान्ति । "पदं स्याद् वाक्यशब्दयोरि"ति शाश्वतः । वामा एतद् विपरीतकारिण्यः कुलस्य वंशस्य आधयो मनोव्यथाः । "पुंस्याधिर्मानसी व्यथे"त्यमरः । अन्यादृश्यः कुलं मातृकपैतृकोभयमपि वंशं व्यथयन्तीत्यर्थः । "भोगः सुखे भुजङ्गस्य शरीरफणयोरपी"ति शाश्वतः । "पदं स्थाने प्रतिष्ठाया"मिति कोषः । "दक्षिणश्चातिस्नेह"इति विश्वः । उपदिष्टनामायमलंकारः । यदाह—

परिसंगृह्य शास्त्रार्थं यद् वाक्यमभिधीयते ।
विद्वन्मनोहरं ज्ञेयमुपदिष्टं तदेव तु ॥ २१ ॥

गौतमीस्वरसं जिघृक्षुराह कथं वा भद्रमस्माभिरभिधीयते न मन्दमिति भावः। गौतमी—वत्से एतावानेव वधूजनें उपदेशः हिताचरणे प्रेरणा। तस्मादेनमुपदेशं स्वहृदयेनावधारय मनसैवाकलिष्यसि भद्रो वा मन्दो वामीषामुपदेश इत्यर्थः। शकुन्तला—तात इत एव प्रियंसख्यौ निवर्तिष्येते इति। भस्समाजे न गमिष्यत इति भावः। इमे प्रियंवदानुसूये प्रतिपाद्ये। शकुन्तला—कथं तातस्याङ्कात् परिभ्रष्टाहं मलयपर्वतोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि। "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः। वनवास-बान्धवविरहकातराया रुदत्याः शकुन्तलायाः समाश्वासं ददाति कण्वः अभि-जनेति। हे वत्से पुत्रि मम विरहजां मद्विश्लेषभवां शुचं शोकं न गणयि-ष्यसि। कुतः ? त्वं कीदृशी, अभिजनवतः कुलीनस्य भर्तुः स्वामिनः श्लाघ्ये कमनीये गृहिणीपदे स्थिता, अस्य भर्तुः कृत्यै राज्यौपयिकैः कर्तव्यैः प्रतिक्षण-महर्निशमाकुला व्यग्रा। कृत्यैः कीदृशैः, विभवगुरुभिः सम्पत्तिगरिष्ठैः। किं कृत्वा, अचिराद् गमनाव्यवहितसमय एव पावनं पवित्रं तनयं प्रसूय। केव, प्राचीव। यथा पूर्वा दिक् पवित्रजनकं सूर्यं प्रसूते। एभिर्मोहबीजैः सर्वमेव मोहस्ते न भविष्यतीति भावः। "कुलेऽप्यभिजनो जन्म" इत्यमरः॥ १९॥

यौगिसंप्रदायेनाह यदा शरीरस्येति। तदा परेण पित्रादिना वियुज्यमानो विश्लिष्यमाणः। नाम संभावनायाम्। कः प्राणी विषादी विषण्णो भवेत्। तदा कदा, यदा शरीरस्य शरीरिणः आत्मनश्च एकान्ततो निसर्गतः पृथक्त्वं भिन्नत्वं भावि भविष्यति। परेण कीदृशेन, आहार्ययोगेन सोपाधिसंबन्धेन। तथा च शरीरात्मनोरेव साहचर्यं न नित्यं, किं पुनर्मायापरैरस्थिरसमागमैरिम वियुज्यमाना विषादं करोषीति फलितार्थः॥ २१॥

तात वन्दे। कण्वः—हे वत्से ! त्वयि यद् यद् अहम् ईहे वाञ्छामि तव तत्तदस्तु भवतु। शकुन्तला—सख्यौ हे एतम् आगच्छतम्। हे अपि युवां सममेकदैव मां परिष्वजेथामालिङ्गतम्। सख्यौ—सखि यदि कदाचित् स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदास्मै स्वमात्मनो नामधेयाङ्कुरीयकं दर्शयिष्यसीति। स राजा यदि परिचयशिथिलो भवति तदेदं दीयमान-मङ्गुरीयकं तस्यावलोकयिष्यसीत्यर्थः। शकुन्तला—अमुना संदेशेन वः

कम्पितमिव मे हृदयमिति। युवयोरमुनोपदेशेन वेपत इव मम मानसमित्यर्थः। सख्यौ—सखि हे! मा भैषीः। मानोनाः प्रतिषेधवचनाः। कथं न भेतव्यमत्राह। स्नेहः पापमाशङ्कते। सर्वत्र प्रेम्णानिष्टमेवाशङ्क्यते तेनाावाभ्यामेतदुक्तमिति भावः। तथा चोक्तं किराते "प्रेम पश्यति भयान्यपदेऽपी" ति। महद्दीर्घं भविष्यतीत्यतः संवादे त्वरा विधीयतामिति भावः। शकुन्तला—तात कदा खलु पुनस्तपोवनं प्रेक्षिष्ये तत् कथयेति भावः। कण्वः—वत्से हे! अस्मिन्नाश्रमे भर्त्रा दुष्यन्तेन समं पुनस्त्वं पदमवस्थितिं करिष्यसि। किमर्थं तत्राह, शान्त्यै मोक्षाय। किं कृत्वा, अप्रतिरथं असत्प्रतिपन्थिनमिति यावद् दौष्मन्तिं तनयं प्रसूय। चिराय सदिगन्ता या मही तस्याः सपत्नी भूत्वा चिरं पृथिवीभोगानन्तरम्। भर्त्रा कीदृशेन, तस्मिन् पुत्रे संनिवेशितो भरो येन। राज्यभोगानन्तरं राज्ञां वनावस्थानमुचितम्। यदाह मनुः "पुत्रे राज्यं समासाद्य कुर्वीत गमनं वन" इति। दौष्मन्तिमिति तस्यापत्यमित्यर्थिकारीयोऽत इञ्॥ २४॥

गौतमी—जाते हे! परिहीयते ते गमनवेला। तस्मान्निवर्तय पितरम्। अथवा चिरेणापि एषा न निवर्तयिष्यतीति। क्रमेण प्रचण्डमार्तण्डातपभिया गमनमेव न संपत्स्यते। तस्मात् पितरं कथं न विसर्जयसीति भावः। कण्वं प्रत्याह। अथवा महतापि कालेन नैषा परावर्तयिष्यति त्वामित्यर्थः। तस्माद् भवानेव निवर्तताम्। कण्वः—तपोवनानुष्ठानमिति तपोवनकर्तव्यं ममावरुध्यते अनया त्वत्प्रस्थापनव्यावृत्त्येत्यर्थः। तस्मात् परावृत्य तत्र गन्तुमिच्छामीति भावः। शकुन्तला—तपोवनव्यापारेण निरुत्कण्ठस्तातो भविष्यति अहमिदानीं उत्कण्ठाभागिनी संवृत्तेति। तपोवनव्यापारो होमादिकर्म तेन तातो निरुद्वेगको भविष्यति केवलमुद्व्याकुलकेन खेदो मे परमित्यर्थः।

कण्वः—अये किमिति। एवंविधव्यापारेण कथं मां निष्क्रियं विधत्स इत्यर्थः। अपयास्यतीति। नु प्रश्ने। वत्से हे! मे मम शोकोऽर्थात् त्वद्विरहजः कथं केन प्रकारेण अपयास्यति गमिष्यति? मम कीदृशस्य, उटजद्वारि पर्णशालाद्वारे विरूढमुपचितं बहुलीभूतमिति यावत्। नीवारबलिं नीवारोपहारं विलोकयतः। "पर्णशालोटजोऽस्त्रिया" मित्यमरः। कीदृशां,

त्वया रचितपूर्वं पुरा विहितम्। "नु पृच्छायां वितर्के चे"त्यमरः। "बलिः पूजोपहारयोः"। "तृणधान्यानि नीवारा" इत्यमरः ॥ २५ ॥

सख्यौ—सकरुणम्। क्षणविरहासहिष्णुर्देशान्तरे कथमियमुद्व्याकुलेन प्राणान् धारयिष्यतीति करुणा। हाधिगित्यर्थः। अन्तर्हिता शकुन्तला वनराजीभिः पिहिता वनपरंपराभिः। कण्वः—प्रियंवदे अनुसूये हे! वां युवयोः सहधर्मचारिणी सखी गता लोचनपथमतिक्रान्ता। तस्मात् शोकं निगृह्यापनीय मामनुगच्छेतां भवत्यौ मत्पश्चादागच्छतमित्यर्थः। सख्यौ—तात तपोवनं शकुन्तलाविरहितं शून्यमिव प्रविशावः। कण्वः–स्नेहवृत्तिरिति। यस्मिन् विषये स्नेहो भवति तदसांनिध्यादेतादृश एव क्रमो भवति अनुभवसिद्धमित्यर्थः। हन्त हर्षे। विसृज्य प्रस्थाप्य। अर्थो हीति। हि यतः कन्यारूपोऽर्थो वस्तु परकीय एव परस्यैव भवति तां कन्यां परिग्रहीतुः परिणेतुः कृते संप्रेष्य सम्यगाप्तद्वारेण प्रस्थाप्य सद्यस्तत्क्षण एव विशदान्तरात्मा जातोऽस्मि। कमिव, चिरस्य निक्षेपमिव निक्षेपस्त्व·········। यथा चिरस्य चिरसमयधृतनिक्षेपं तत् स्वामिनेऽर्पयित्वार्पणकर्तुरन्तरात्मा प्रसीदति। "अर्थोऽभिधेये शब्दानां धनकारणवस्तुष्वि"ति शाश्वतः ॥ २६ ॥

× × × ×

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकाया-
मङ्को गतो मुनिसुतागमनो तुरीयः ॥



# ५

ततः प्रविशति कञ्चुकी। तल्लक्षणम्—

अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥

जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी। इति भरतः।

श्लोकद्वयेनात्मनो वार्धक्यौपयिकं रूपं प्रकाशयन्नाह कञ्चुकी आचार इति। सैव वेत्रयष्टिः बहुतिथे काले समये गते सति प्रस्थानविक्लवगतेर्मार्गगमनोद्यमविसंष्ठुलगतेर्मम अवलम्बनाय जाता। सा का, या राज्ञोऽवरोधगृहेषु अन्तःपुरेषु अधिकृतेन मया इति कृत्वा गृहीता। इति किं, आचारः अधिकारः। द्वारपालस्यायमेवाधिकारः यद्दुष्टप्राणिनिवारणार्थं वेत्रयष्टिं दधाति। "शुद्धान्तसंज्ञं शब्दज्ञैर्व्याख्यातमवरोधकमि"ति शाश्वतः। बहुतिथ इति बहुपूगगणेत्यादिना तिथुक् ॥ १ ॥

यावद् भवतु। अभ्यन्तरगतायान्तःपुरगताय देवाय राज्ञे स्वयमनुष्ठेयं स्वकर्त्तव्यं आवेदयामि कथयामि। ननु बहिरागताय निवेदयिष्यामि तत्राह अकालक्षेपार्हं झटिति कथनीयं वृद्धस्य मम विस्मरणशीलत्वात्। विस्मरणमेवाभिनयति किं पुनस्तदिति। आमिति स्मरणाभिनये, स्मृतमित्यर्थः। कण्वशिष्या देवं द्रष्टुमिच्छन्ति। राज्ञ औदास्यनिराकरणाय विशेषयति तपस्विन इति। राज्ञः शकुन्तलाविस्मरणं सूचयन्नेव स्वस्वरूपमाह क्षणादिति। जरतो वृद्धस्य मम मतिः क्षणात् प्रकाशमायाति पुनस्तमसा मोहेन लङ्घ्यते अभिभूयते। केव, निर्वास्यतः निर्वाणतां गच्छतः प्रदीपस्य शिखेव। यथा दीपशिखा क्षणं प्रबुद्धा भवति पुनस्तमसान्धकारेण छन्ना क्रियत इति। अथ च विस्मरणसूचना। यतो न्यायवृद्धस्य राज्ञः मतिः क्षणं प्रबोधं मद्विवाहिता इयं तपोधनतनया इति निश्चयमायास्यति पुनस्तमसा विस्मरणहेतु-

मोहेन अभिभविष्यते इति। अस्मिन् पक्षे वर्तमानसामीप्ये भविष्यदर्थे लट् ॥ २ ॥

दृष्ट्वा राजानमिति शेषः। "राजा भट्टारको देव" इत्यमरः। एष देवो राजा विविक्तं विजनं निषेवते भजते। "विविक्तं विजने छन्न" इत्यमरः। किं कृत्वा, प्रजा लोकान् स्वाःप्रजा इव स्वकीयापत्यानीव चिन्तयित्वा विचारादिना तत्प्रबोधं कृत्वेत्यर्थः। "प्रजा स्यात् सन्ततौ जन" इत्यमरः। विजनसेवने बीजमाह, शान्तमनाः। अत्रोपमामाह, द्विपेन्द्रो हस्तिराजः दिवसे यूथानि सजातीयकुलानि संचार्य भ्रामयित्वा शीतं शीतलं स्थानं निषेवते। कीदृशः, रविप्रतप्तः ॥ ३ ॥

यत्सत्यं स्वरूपमेव। शङ्कित एवास्मि त्रस्त इत्यर्थः। कुत्र प्रमेये तत्राह, देवाय राज्ञे कण्वशिष्यागमनं निवेदयितुम्। कीदृशाय, इदानीमेव धर्मासनादुत्थिताय। यत्रस्थो राजधर्मं विचारयति तद् धर्मासनम्। अथवा आक्षेपे, लोकपालानां विश्रामः कुतः? तत्रोपपत्तिमाह भानुरिति। भानुः सूर्य सकृदेकवारमेव युक्ता रथे योजितास्तुरङ्गा यस्य एवंभूतः सन् प्रयाति गच्छति। अन्यरथे तुरङ्गाः सान्तरं युज्यन्ते रवेरविश्रान्त इति तेन तुरङ्गस्य पुनर्योजने न प्रसङ्गः। गन्धवहो वायुः रात्रिन्दिवमहर्निशं प्रयाति। रात्रिन्दिवमित्यत्र अचतुरादिना सूत्रेण निपातनात् साधुः। शेषोऽनन्तः सर्वदैवाहितो धृतो भूमिभारो येन एवंभूतः। षष्ठांशवृत्ते राज्ञोऽपि एष धर्मः समुचितव्यापारः। "शेषोऽनन्तोवासुकिस्त्वि"त्यमरः ॥ ४ ॥

परिक्रामति इत्युक्त्वा राजानमुपसर्पतीत्यर्थः। विभवतो विभवानुसारेण परीवाराः परिजनाः। "परीवारः परिजने तथा खड्गपिधानक"इति शाश्वतः। चरितार्थता राज्यप्राप्तिरिति यावत् दुःखोत्तरा खेदसंवलिता। अत्रोपपत्तिमाह औत्सुक्येति। राज्यं यथा श्रमाय तथा अतिश्रमापनयनाय श्रमहरणाय न भवति यतो राज्यं तावदौत्सुक्यमात्रं उत्कण्ठामात्रं प्रतिष्ठां ख्यातिमवसादयति अवच्छिनोति। यतो मेरुप्रतिममपि कनकनिकरमुत्सृजतोऽपि सकलजनानुरञ्जनोपार्जनानीश्वरस्य राघवस्य मैथिलीत्यागतादृशाकालिकमन्यायाद्भवत्येव किंचित् कदाचित् अयशस्करं राज्यमिति। तदयमवसादितं राज्यं

तस्य परिपालने रक्षणे या वृत्तिर्व्यवहृतिः सा एवमनुभूयमानप्रकारेण क्लिश्नाति अवसादयति अर्थादीश्वरमेव। किमिव, स्वहस्तधृतदण्डं आतपत्रं छत्रमिव। यथा स्वहस्तेन धृतदण्डं छत्रं श्रमाय भवति न श्रमनाशाय भवति तथेदमपीत्यर्थः। तादृशं छत्रमपि नैःस्व्यप्रकाशकतया प्रतिष्ठाया अवसादकं भवतीति ॥ ५ ॥

राज्ञो वन्दिकर्तृकप्रशंसामाह—वैतालिकौ स्तुतिपाठकौ प्रविशतः। तत्रैको वदति स्वसुखेति। लोकहेतोः प्रजानिमित्तं स्वसुखनिरभिलाषः निजसुखविमुखः सन् प्रतिदिनं खिद्यसे क्लिश्यसि। अथवा पक्षान्तरे ते तव सृष्टिरुत्पत्तिरेवं-विधैव परोपकारकुतूहलिन्येव। अत्रार्थान्तरन्यासमाह। हि यतः पादपो वृक्षः मूर्ध्ना शिरसा तीव्रतापमसह्यसंतापमनुभवति सहते संश्रितानामात्मतटाव-स्थितानां छायया परितापं संतापं शमयति ॥ ६ ॥

द्वितीयो वदति, विमार्गप्रस्थितानधर्माचरणोन्मुखानित्यर्थः, आत्तदण्डः गृहीतशासनः सन् नियमयसि। वैमत्यमर्थाल्लोकानां प्रशमयसि शान्तिं नयसि। रक्षणाभिः पालनैरर्थाल्लोकानां प्रीयसे तुष्यसि। अतनुषु महत्सु विभवेषु संपत्तिषु ज्ञातयः प्रजाभ्रातृव्यादयः संविभक्ताः भागभाजः कृताः। विभज्य ज्ञातिषु वैभवं दत्तमस्ति त्वयेत्यर्थः। अतो जनानां बन्धुकृत्यं बान्धवविधेयं भरणादि त्वयि परिसमाप्तम्। तु शब्दोऽवधारणे। त्वय्येव विश्रान्तमित्यर्थः ॥ ७ ॥

राज्यकार्यानुशासनपरिश्रान्तोऽपि विचारादिकरणक्लिष्टः पुनर्नवीकृतोऽपरि-श्रमदशां प्रापितः तपोधनागमनेनेत्यर्थः। विदूषकः—गोवृन्दारक इति भणितस्य वृषभस्य नश्यति परिश्रम इति। गोवृन्दारको गोश्रेष्ठः। "वृन्दारकं बिदुर्देवे मनोज्ञश्रेष्ठयोरपी"ति विश्वः। नेपथ्ये वीणाशब्दः। विदूषकः, कर्णं दत्त्वा तद्दिशीत्यर्थः, वदति च, भो वयस्य! संगीतशालाभ्यन्तरेऽवधानं देहि। ईश्वराणां यत्र नृत्यादिकं भवति सा संगीतशाला। कथमित्याह—ताललयशुद्धया वीणायाः स्वरसंयोगः श्रूयते।ताललक्षणं च—

तलस्थलप्रतिष्ठायां धातोरिति घञ् स्मृतः।
गीतं वाद्यं तथा नृत्यं यत्र तालैः प्रतिष्ठितम् ॥
गीते वाद्ये तथा नृत्ये तालो मुख्यतमो मतः।
तस्मात्तालस्य नियमः क्वचित् त्याज्यो न गायकैः ॥

कथं तत्र स्वरोत्पत्तिस्तत्राह–जाने तत्रभवती हंसवती वर्णपरिचयं करोति। गीतिषु चत्वारो वर्णा भवन्ति। यदाह भरतः—

स्थायी तथैव संचारी तथेति…………

व्यासक्तचित्तोऽन्यासक्तहृदयः। अवसरं गोचरकालं प्रतिपालयामि। नेपथ्ये यवनिकान्तरितदेशे गीयते अभिणवेति।

अभिनवमधुलोभभाविता तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽसि एनां कथम्॥

हे मधुकर एनां आम्रकलिकां विस्मृतोऽसि त्वम्। कीदृशः, कमले पद्मे या वसतिरवस्थितिस्तावन्मात्रेणैव निर्वृतः सुखी। किं कृत्वा, तथा पूर्वानुभवप्रकारेण परिचुम्ब्य आस्वाद्य। कीदृशीं मञ्जरीं, अभिनवं नूतनं अनुपभुक्तमिति यावत् यन्मधु मकरन्दस्तल्लोभेन संभाविताम्। अथ चान्यापदेशेनात्मानमेवाधिकृत्य राजानमुपालभते। मनोभवभवाभिभवपरिभूतस्त्वमिह जगदपूर्वमदीयविविधवैदग्ध्यं चिरमास्वाद्य कथमनुभूतमत्प्रतिमशकुन्तलारूपजनलाभमात्रेण मां नाकलयसीति स्फुटार्थः। प्रच्छादकाभिधानं लास्याङ्गमेतत्। यदाह कविकण्ठहारे—

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना।
वीणापुरःसरं गानं स्त्रियाः प्रच्छादको मतः॥ ८॥

रागपरिवाहिनी अनुरागनिष्यन्दिनी। विदूषकः—किं तावद् इदानीमस्या गीतिकाया गृहीतो भवता अक्षरार्थ इति। राजा—सकृत्कृतप्रेमा अयं मद्रूपो जनः। "प्रणयः प्रेम्णि विश्वास" इति विश्वः। तत्तस्मादहं हंसवतीमन्तरेण मध्ये उपालम्भमुपगतोऽस्मि तया क्रुष्टोऽस्मीत्यर्थः। हंसवती मुख्यमहादेवीनाम। अथ च शकुन्तलाकृताक्रोशसूचनम्। हंसः शकुन्तः तं लाति, ला आदाने धातुः, आदत्ते इति हंसवती शकुन्तलेति। तत् सखे माधव्य मद्वचनाद् देवी हंसवती उच्यताम्। किं वक्तव्यं तत्राह, निपुणमतिशयेन उपालब्धोऽस्मि आक्रोशं त्वया नीतोऽस्मि। विदूषकः—यद् भवानाज्ञापयति। गृहीतस्तया परकीयैर्हस्तैः शिखण्डके अच्छभल्लः भल्लूकः। यो हस्तेन भल्लूकं शिखण्डके चूडायां धारयति तमेव स खादति। "ऋक्षाच्छभल्लभल्लूका" इत्यमरः।

"शिखा चूडा शिखण्डक"इत्यपि। निर्वेदेनाह—विगतरागस्येव अप्सरसा गृहीतस्य नास्ति मे मोक्षः। अनाश्रयस्य मम हंसवतीहस्ते त्यागो न भविष्यतीत्यर्थः। नागरवृत्या नागरव्यवहारेण वचनकुशलतयेति यावत् एनां हंसवतीं शान्त्वय। का गतिः कः प्रकारः ? राजा इष्टविरहात् अपेक्षितार्थविरहं विना, अन्यारादितरर्ते इत्यादिना पञ्चमी, बलवदतिशयेन उत्कण्ठितोऽस्मि जातौत्सुक्योऽस्मि। किं नु किमेतदित्यर्थः। खलु वीप्सायां निश्चये वा। अथवा पक्षान्तरे रम्याणीति। तत्तस्माज्जन्तुः प्राणी चेतसा जननान्तरसौहृदानि जन्मान्तरस्नेहानबोधपूर्वमज्ञानपूर्वकं स्मरति। कीदृशानि, भावस्थिराणि। "भावः सत्तास्वभावाभिप्रायचेष्टार्थयोनिषु" इति शाश्वतः। क्वचिद्रागप्रियाणीति पाठस्तत्र रागेणानुरागेण प्रियाणि प्रीतिविषयाणीत्यर्थः। तत् कुतः, यद् यस्मात् सुखितोऽपि वराङ्गनासंभोगानन्दहृष्टोऽपि जन्तू रम्याणि मनोहरवस्तूनि वीक्ष्य मधुरान् मनोरमान् शब्दांश्च निशम्य श्रुत्वा पर्युत्सुको भवति उत्कण्ठितो जायते। नूनमुत्प्रेक्षायाम्। तथा च दण्डी—

> शङ्के मन्ये ध्रुवं नूनं प्राय इत्येवमादिभिः।
> उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥ ९॥

देवः प्रमाणमिति। तत्प्रवेशनायाज्ञाकारणमित्यर्थः। अथ किं स्वीकारे। अमून् कञ्चुकिनिवेदितान् श्रौतेन श्रुतिबोधितेन प्रकारेण। प्रवेशयितुमुपस्थापयितुम्। समुचितेति तपस्वियोग्यप्रदेशे तेषामहमपेक्षां करोमीत्यर्थः। अग्निशरणमार्गं पर्णशालापथमादेशय कथय। "शरणं गृहरक्षित्रोरि"त्यमरः। प्रतीहारी द्वारपालकः। इत इतो देवः राजा, अनेन पथा गच्छेत्यर्थः। एष परिदृश्यमानः अभिनवमार्जनरमणीयः तत्कालविशोधनश्लाघ्यः संनिहितहोमधेनुः अग्निशरणालिन्दकः। अलिन्दको गृहसंलग्नगृहम्। "प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठक"इत्यमरः। तस्मादारोहतु एनम् इत्यर्थः। परिजनांसावलम्बी अवलम्बितपरिजनस्कन्धः। किमुद्दिश्येति किं प्रयोजनं कण्वेन मत्पार्श्वमृषयः प्रहिता भवेयुरित्यर्थः। स्युरिति संभावनायां लिङ्। राजा स्वयमेव तदागमनं विकल्पयति, किं तावल्लोकोक्तौ। व्रतिनां मुनीनां तपः विघ्नैर्दूषितं प्रतिबद्धमस्तीत्यर्थः। उत पक्षान्तरे। धर्मारण्यं तपोवनं तच्चरेषु भ्रमणशीलेषु प्राणिषु

मृगादिषु केनचिद् प्राणिना असच्चेष्टितं मारणादिकं कृतमस्तीति वा । आहो-स्वित् विकल्पे । वीरुधां लतानां पुष्पादिः ममापचरितैरधर्मैर्विष्टम्भितोऽवरुद्धोऽस्तीत्यर्थः । इति अनेन प्रकारेण बहवो ये प्रतर्का अध्याहारास्तैर्मम मनश्चित्तं अपरिच्छेदेन एकपक्षापरिग्रहेण आकुलं व्यग्रम् । "अध्याहारस्तर्क ऊहो विचि-कित्सा तु संशयः" । वीरुधां प्रसव इति शकुन्तलागर्भसूचनम् ॥ १० ॥

प्रतीहारी—देवस्य भुजदण्डनिर्वृत्ते सुस्थे आश्रमे कुतोऽत्याहितं किं तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि । तेषां सुचरिताभिनन्दनक्रियया राज्ञो विकल्पो निरस्तः । शारद्वतं संबोध्य शार्ङ्गरवो वदति महाभाग इति । कामं निश्चितं असौ नरपती राजा महाभागः अति-शयितशुभादृष्टवान् । कुतः, अभिन्नस्थितिः समर्याद इत्यर्थः । तत्र बीजमाह । "वर्णाः स्यु र्ब्राह्मणादय" इत्यमरः । वर्णानां ब्राह्मणादीनां मध्ये अपकृष्टोऽपि अधमोऽपि शूद्रोऽपीति यावत् अपथं आश्रमानुक्तधर्मं कश्चिन्न भजते न करोति । तथापि इदं पुरोवर्त्ति नृपाङ्गणमित्यर्थः हुतवहपरीतं लग्नाग्नि गृहमिव मनसा मन्ये । मनसा कीदृशेन, शश्वद् वारं वारं यत् परिचितं परिचयः । भावे क्तः । तत्र विविक्तेन स्थिरेणेति यावत् ॥ ११ ॥

संवेगः साध्वसः । सहस्थितजनापेक्षयात्मानमुत्कर्षयति । अहं हीति । हि यतोऽहं एतादृशमवैमि । अभ्यक्तं तैलाभ्यक्तमिव यथा स्नातः विशुद्धोऽवैति अभ्यक्तं तु मलिनम् । शुचिः शुद्धः सन् अशुचिमजातशौचम् । प्रबुद्धो जागृतः सचेष्ट इति यावत् सुप्तं निश्चेष्टमिति यावत् । स्वैरगतिः स्वच्छन्दगमनः बद्धमवरुद्धमिवेति ॥ १२ ॥

पुरोधा—अत एवासाधारणोत्कर्षवत्त्वात् भवद्विधा महान्तो वैलक्षण्य-भाजः । शकुन्तला—दुर्निमित्तमशकुनमभिनीय प्रकाश्य वदतीति शेषः । अम्मो कष्टे । किमिति वामेतरं नयनं मे स्फुरति । स्त्रीणां दक्षिणाक्षि-स्पन्दोऽशुभः । गौतमी—जाते प्रतिहतममङ्गलं शुभानि ते भवन्तु । विभक्ति-विपरिणामेनान्वयः । परिक्रामन्ति सर्वे राजानमुपसर्पन्तीत्यर्थः । अयमित्या-दरद्योतनाय प्राक् प्रथममेव भगवदागमनपूर्वमेवेत्यर्थः वो युष्मान् प्रति-पालयति अपेक्षते । मुक्तासनः त्यक्तसिंहासनः । वर्णाश्रमाणां ब्राह्मणा-

दीनाम्। एनं राजानम्। कामं निश्चितमेतद्राजकर्तृकाभ्युत्थानं अभिनन्दनीयं श्लाघनीयं तथाप्यत्र प्रमेये वयं मध्यस्था उदासीनाः। राज्ञः कण्वेन समं संबन्धो, वयं मध्यस्थविधया समायातास्तथापि राज्ञोऽस्मदादिविषये ईदृशः पुरस्कार इति महतामुचितमेव। तत्राह भवन्तीति। तरवो वृक्षाः फलोद्गमैः फलोत्पत्तिभिर्नम्रा भवन्ति। घना मेघा नवाम्बुभिर्दूरविलम्बिनोऽत्यर्थं लम्बिता भवन्ति। सत्पुरुषा एतत्प्रभृतयः समृद्धिभिरुपचयैरनुद्धता विनीता जायन्ते। कुत एवं तत्राह—यतः परोपकारिणाम् एष एव स्वभावो धर्मः ॥१३॥

प्रतीहारी–देव प्रसन्नमुखरागा ऋषयः सस्त्रीका दृश्यन्ते। राजा–शकुन्तलां निर्वर्ण्यालोक्य। अथ प्रश्ने। अत्रभवती मान्या केयमिति तपोधनानां मध्ये अस्तीति शेषः। कीदृशी, अवगुण्ठनवती मस्तकाच्छादनयुक्ता अतएव न अतिस्फुटं प्रव्यक्तं शरीरलावण्यं वपुःसौन्दर्यं यस्यास्तादृशी। अत्रोपमामाह किसलयमिव। यथा पाण्डुपत्राणां मध्ये किसलयं दृश्यते इति। "पल्लवोऽस्त्री किसलयम्" इत्यमरः ॥१४॥

प्रतिहारी–भर्तः दर्शनीयाकृतिः खलु लक्ष्यत इति। "भट्टेति सार्वभौमस्तु वाच्यः परिजनेन त्वि"ति भरतः। राजा—एवं भवतु दर्शनीयाकृतिरित्यर्थः। शकुन्तला—हृदय किमेवं वेपसे? एवमनुभूयमानप्रकारेण वेपसे कम्पसे। आर्यपुत्रस्य भावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व। भावः स्नेहः। हृदयकम्पोऽप्यशकुनमेव। स्वस्ति देवाय। नमः स्वस्तीत्यादिना चतुर्थी। "स्वस्तिः स्यान्मङ्गले पुण्येऽप्याशंसायामपि क्वचिद्"ति मेदिनी। देव एते परिदृश्यमानाः। विधिवत् राजसभागमनार्हप्रकारेणेत्यर्थः। एतेषां तपस्विनामुपाध्यायः कण्वः। संदेशः संवादरूपः। सर्वान् तपस्विनोऽभिवादये नमस्करोमि। अपि प्रश्ने। तपो निर्विघ्नं। क्वचिदपि स्थाने अयि पाठस्तत्र अयि संबोधने। शिष्याः—त्वयि सतां रक्षितरि रक्षके सति अस्माकं धर्मविघ्नः कुतः अपि तु न कुत्रापि। अर्थान्तरमाह। घर्मांशौ सूर्ये तपति तमोऽन्धकारं कथमाविर्भविष्यति अपि तु सूर्यप्रतापात्तद् विनश्यत्येव परम् ॥ १५ ॥

राजा—सर्वप्रकारेण मम राजशब्दः राजध्वनिरर्थवान् अर्थयुक्तः यतो

रञ्जनादिति राजेति। अथ प्रश्ने। तत्रभवान् मान्यः लोकानुग्रहाय कुशल-युक्तः कुशलं लोकानुग्रहनिमित्तमेवेति। शार्ङ्गरवः—स कण्वः। अनामयः आरोग्यम्। क्षत्रियाणामनामयप्रश्न एवोचितः। यदाह मनुः—

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धोरनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥

तत्प्रश्नपूर्वकमिदमग्रे वक्ष्यमाणमेवाह—संदिदेशेत्यर्थः। यन्मिथ इति। यत इमां दुहितरं पुत्रीमर्थान्मम मिथोऽन्योन्यं समयाद् व्यवस्थातः आचाराद्वा भवानुपयेमे परिणिनाय तत् प्रीतिमता मया युवयोः शकुन्तलायास्तव चानु-ज्ञातम्। तादृशेऽनुचिते कर्मणि कथं स्वीकारस्तत्राह—त्वमर्हतामिति। अर्हतां मान्यानां मध्ये नोऽस्माकं त्वं प्राग्रहरः श्रेष्ठः स्मृतोऽसि। शकुन्तला मूर्त्तिमती। विकल्पेन एकवद्भावः। सहधर्माचरणायेति पुंसो धर्माचरणे आवश्यकी पत्न्यपेक्षा। यदाह—"यत् कर्त्तव्यं तदनया सहे"ति॥ १६॥

गौतमी—भद्रमुख वक्तुकामाप्यहम्। न मे वचनावकाशोऽस्ति कथयितुं कथामित्यर्थः।

नापेक्षितो गुरुजनोऽनया त्वयापि न पृष्टो बन्धुः।
एकैकस्य चरिते किं भणतु एक एकस्मिन्॥

अनया शकुन्तलया गुरुजनो मातापित्रादिलोको नापेक्षितः। त्वयापि बन्धुर्न पृष्टः। अनया सह प्रेमाचरणे भवतापि मातापित्रादिरेव नापेक्षित इत्यर्थः। एकैकस्मिन् चरिते अन्योन्यस्यान्योन्यचरिते द्वयोः परस्परविषयक-प्रणयकरणे एकः अस्मद्रूपो जनः किं भणतु अपि तु वचनावसर एव न॥ १७॥

शकुन्तला—किं खल्वार्यपुत्रो भणिष्यति। अयि प्रश्ने। "अयि प्रश्नानु-नययोरि"ति मेदिनी। किमिदमिति यद् भवती वक्तुमुद्यतास्ति तन्मया किमपि न ज्ञायत इति भावः। स्वगतं, हा धिक् परोक्ष इवास्य वचनोपन्यासः। क्वचित् परुषः खल्वस्य वचनोपन्यास इति पाठः। कथमिदमिति। किंपदस्यै-वार्थः किन्नामशब्दस्य। किमिदमुपन्यस्तमिति किं त्वया कथमुच्यत इत्यर्थः। लोकवृत्तान्तनिष्णातो लोकव्यवहारज्ञाता। वध्वाः पतिगृहादन्यत्रावस्थानस्या-नौचित्यमाह—सतीमपीति। अतो हेतोः प्रमदा स्वबन्धुभिर्जनैः परिणेतुः

परिणायकस्यैव समीपे पार्श्वे इष्यते आकाङ्क्ष्यते स्थातुमित्यर्थः। सा प्रमदा परिणेतुः प्रिया सुभगा अप्रिया दुर्भगा वा भवतु न तत्र प्रयत्न इति भावः। कुतस्तत्राह—जनो लोकः सतीमपि साध्वीमपि ज्ञातिकुलैकसंश्रयां निजगृहवासिनीमन्यथाभर्तृमतीं व्यभिचारिणीं विशङ्कते। अतएव तथैवाह आदिपर्वणि "नारीणां चिरवासो हि बान्धवेषु न शस्यते"। तथा चाह्वानं विनापि भवत्पार्श्वमियमानीतास्तीत्यनौचित्यं चन्तुमर्हतीति भावः॥ १८॥

शकुन्तला—हृदय समुदिता ते आशङ्का। यदेव त्वया तर्कितं तदेव भूत्वा पतितमित्यर्थः। किं कृतेति। किमत्र प्रश्ने। किं कृतकार्ये द्वेषोऽवज्ञा तेऽस्तीति शेषः। द्वेषो वैराग्यं भवतु किं ततः स्यादत्राह—धर्मं प्रति अवज्ञा कृता। अवज्ञा अनादरः। उभयत्र किं शब्दस्यान्वयः। मूर्च्छन्तीति। विकारः स्वरूपान्यथाभावः। अमी विकाराः कृतानङ्गीकाररूपाः प्रायेण बाहुल्येन ऐश्वर्यमत्तानां प्रभुत्वोन्मादिनां मूर्च्छन्ति वर्धन्ते। "मूर्च्छा मोहसमुद्रयोरि"ति कोपः॥ १९॥

गौतमी—जाते मा लज्जस्व। अपनेष्यामि ते अवगुण्ठनम्। स्वामिनः परिणयसंशयाल्लज्जां मा कुरु। शिरोवेष्टनं तव दूरीकरोमीत्यर्थः। ततः किं स्यादित्याह—भर्ता त्वामभिज्ञास्यति। राजा—स्वगतमनन्यप्रकाशम्। सपदि तत्काल एव खलु निश्चितं इदं परिदृश्यमानं रूपं भोक्तुं न शक्नोमि न वा मोक्तुम्। किंभूतं, एवं तवैव स्वत्वास्पदम्—इदं रूपमितिप्रकारेणेत्यर्थः उपनतमेभिः स्वयमेवानीय उपस्थितीकृतमित्यर्थः। किंभूतमक्लिष्टकान्ति उज्ज्वलप्रत्यवयवशोभम्। कान्तिः प्रत्यवयवशोभा रूपं च समुदायशोभा। "रूपमाकारसौन्दर्ये" इति शाश्वतः। तेनानयोर्भेदः। केचित्त्वनयोर्भेदमनवगच्छन्तोऽन्यथा व्याचक्षते। एवं स्त्रीरूपं स्त्रीरत्नमिति कुर्वन् इत्यध्यवस्यन् चिन्तयन्। इति किं, इदं प्रथमपरिगृहीतं पूर्वभुक्तं स्यान्न वेति संभावनायां लिङ्। अत्रोपमामाह भ्रमर इव। यथा निशान्ते उपसि भ्रमरः कुन्दं भोक्तुं न शक्नोति न वा मोक्तुम्। भ्रमरस्य कुन्दकुसुमं तावद् विश्रामास्पदमिति कथं तत्र भोगवैमुख्यं तत्राह—अन्तस्तुषारं तुहिनकणावलिप्तमित्यर्थः। मधुलोभस्तु त्यागवैमुख्यमिति।॥ २०॥

प्रतिहारी—अहो आश्चर्यं । भर्त्तुः स्वामिनः धर्मापेक्षिता धर्मसस्पृहता । तत्र हेतुः, तादृशं नाम सुखोपनतं अनायासोपस्थितं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति अपि तु त्वमेव परमत्र विचारयसीत्यर्थः । किमिति जोषमास्यत इति । जोषं मौनम् । "तूष्णीमर्थे सुखे जोषमि"त्यमरः । किमर्थं मौनं कृतमस्तीत्यर्थः । खलुशब्दो वीप्सायाम् । अत्रभवत्याः शकुन्तलायाः स्वीकरणं विवाहं बहुधा चिन्तयन्नपि न स्मरामि न निश्चिनोमि । तत्तस्मात् अभिव्यक्तसत्त्वलक्षणां प्रौढ़गर्भवतीम् । इमां शकुन्तलाम् । परक्षेत्रं परकलत्रम् । शकुन्तला—कथं परिणय एव संदेहः । भग्नेदानीं मे दूरावरोहिणी आशालतेति । लतापि दूरदेशव्यापिनी प्रायेण भनक्तीति प्रतीतधर्मेवेति । कृताभिमर्षामिति । त्वया तावत् मुनिः कण्वः मा विमान्यः नानादर्त्तव्यः । तावच्छब्दो लोकोक्तौ । कीदृशो मुनिः, कृताभिमर्षां कृतस्वीकारां सुतां प्रति अवमन्यमानः नादरं प्राप्यमाणः अर्थात् त्वयेत्यर्थः । प्रथमं मुनिप्रश्नमकृत्वैतत्सुतापरिग्रहः कृतः । अग्रे निष्कारणं कृतस्तत्तिरस्कार इति । मुनिरवलेपाचरणेन त्वया स विमानित एवेत्यर्थः । अस्वरसेन मुनिं राजानं च निन्दति । येन मुनिना त्वं पात्रीकृतोऽसि संप्रदानीकृतोऽसि । कीदृशेन, स्वं स्वकीयमर्थं शकुन्तलारूपं प्रतिग्राहयता । त्वं कीदृशः, दुष्टः कापटिकः दस्युरिव । यथा दस्युचोरितमेव स्वमर्थं दस्यवे एव ददता केनापि स पात्रीक्रियत इति तस्मै तद्वस्तुदानेन फलं किंचिदपि न भवति किं तूपहास्यतामात्रं तथैव प्रकृतेऽपीत्यर्थः । दस्युश्चौरः । वैदेशिकपुस्तकद्वये कृतावमर्षामवमन्यमानेति पाठो दृष्टस्तथाहि हे मान्य राजन् कृताभिमर्षां सुतामवमन्यमानोऽनादृत्य स मुनिस्त्वया न विमान्यस्तत्सुतावमानेन तस्यैवापमानमपरं पूर्ववदेव ॥२१॥

शारद्वतः—विरम न वदेत्यर्थः । उक्तमस्माभिरिति यद्वक्तुमर्हति तदुक्तमेवेत्यर्थः । अत्रभवान् मान्यः दुष्मन्तः एवमाह । त्वत्संग्रहे वैमत्यं करोतीत्यर्थः । तत्तस्माद्धेतोरस्मै राज्ञे प्रत्ययप्रतिवचनं निश्चयप्रत्युत्तरं, येन प्रत्युत्तरेण राज्ञस्त्वद्विषयकासक्तिनिश्चयो भवतीति भावः । शकुन्तला—स्वगतम्-इदमवस्थान्तरं विस्मरणरूपं गते तादृशेऽनुरागे किं वा स्मारितेन ।

तादृशः कदाचिदपि न विस्मरणार्ह इत्यर्थः। अनुरागः स्नेहश्चेदनेन विस्मृतस्तदाग्रे यदि स्मरणमपि कारयितव्यं तथापि नेष्टसिद्धिरिति भावः। अथवा आत्मा इदानीं मे शोचनीयः। सदसि तादृशरहस्यप्रकाशनापत्रपया कुलवधूरहं सदा शोचनीया भविष्यामीति भावः। यद्वा संप्रति रहः संकेताप्रकाशनादग्रे शोचनीयात्मता भविष्यातीति भावः। आर्यपुत्रेत्यामन्त्रणं नोचितमित्यर्थः। पौरव ! युक्तं नाम तव पुराश्रमपदे सद्भावोत्तानहृदयं इमं जनं समयरूपं(?) प्रतार्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुमिति। हे पौरव युक्तं नाम पूर्वं तपोवने तादृशास्त्वया समयरूपेण तृतीयाङ्कोक्तपरिग्रहबहुत्वेऽपीत्यादिना श्लोकेन कुलप्रतिष्ठा मया त्वं कर्त्तव्येत्यादिव्यवस्थारूपेण सद्भावः प्रणयः प्रकाशितः यथा तद्विषयेऽहमुत्तानहृदया तरलाशया वृत्ता। त्वया सहासत्तावुपजीव्यादिप्रश्नोऽपि न कृत इति भावः। तत् सर्वं त्वया प्रतारणैव कृतम्। इदानीं तादृशैरक्षरैर्न त्वं मया परिगृहीतेत्यादिरूपैः प्रत्याख्यातुं निराकर्त्तुं तवोचितमित्यर्थः। "प्रत्याख्यानं निराकृतिरि"त्यमरः। राजा—शान्तमिति। एवंविधव्याहारो निवार्यतामित्यर्थः। "अव्ययं वारणे शान्तमि"ति। व्यपदेशमिति व्यपदिश्यतेऽनेनेति व्यपदेशः कुलं तन्मलिनयितुं कलङ्कयितुं मां च पातयितुं समीहसे इच्छसि। उपमामाह। कूलंकपा सिन्धुरिव। तथा कूलपातिनी सरित् प्रसन्नं निर्मलमोघं प्रवाहं मलिनयति तटरुहं च तटोद्भवं वृक्षं च पातयति॥ २२॥

शकुन्तला—भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एतत् प्रयुक्तं परवधूं माम् आशङ्कमानेन त्वया निराकरणप्रयोगो यदि कृतोऽस्ति ता ततः अभिज्ञानेन परिचायकासाधारणचिह्नेन केनापि तव संदेहमपनेष्यामि मोचयिष्यामि। राजा—प्रथमः कल्पः मुख्य प्रकारः। शकुन्तला मुद्रास्थानं अङ्गुरीयस्थानम्। हा धिक् हा धिक् अङ्गुरीयशून्या मे अङ्गुली। गौतमीमीक्षते इति। सहागच्छन्तीभिर्भवतीभिः कौतुकेन न खलु क्वापि धृतमित्याशयेन पश्यतीत्यर्थः। गौतमी—न खलु शक्रावताराभ्यन्तरे शचीतीर्थोदकं वन्दमानायाः परिभ्रष्टं अङ्गुरीयकमिति। शचीतीर्थवन्दनावसरे तज्जले हस्तात् प्रायः पतितमित्यर्थः। राजा—व्याजमाशङ्कमान आह इदमिति। स्त्रीणां

प्रत्युत्पन्नमतित्वम्। शकुन्तला—अत्रापि तावद्विधिना दर्शितं प्रभुत्वम्। मुद्रादर्शनेन राज्ञा सन्देहस्त्यक्ष्यत (?) इति पक्ष आसीत् सोऽपि विधातृप्रभुत्ववशादपास्त इति भावः। अपरं ते कथयिष्यामि। एतस्मादन्यदपि संदेहापनोदकमित्यर्थः। राजा–श्रोतव्यमिति। शकुन्तला—ननु एकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनस्थमुदकं तव हस्ते संनिहितमासीत्। तत्क्षणं स मम पुत्रीकृत–हरिणक उपस्थितः। ततस्त्वयायं तावत् प्रथमं पिबत्विति अनुकम्पिना उपच्छन्दित उदकेनेति शेषः। जलपानाय प्रेरित इत्यर्थः। न पुनस्ते अपरिचितस्य हस्ते उदकं पातुमुद्यतः। पश्चात्तस्मिन्नेव उदके मया परिगृहीते कृतस्तेन प्रणयः विश्वासः। "प्रणयः प्रेम्णि विश्वासे याच्ञाविश्रम्भयोरपी"ति विश्वः। अत्रान्तरे त्वया विहस्य भणितं, सत्यं स्वरूपम्। सर्वः स्वगणे संनिहिते विश्वसिति यतो द्वावपि युवामारण्यकाविति। राजा—आभिरिति। मुनिगौरवान्मान्याभिप्रायेण। आत्मकार्यनिवर्त्तिनीभिः स्वप्रयोजनसंघटिकाभिर्मधुराभिः अनृतवाग्भिः। यद्वा अनृतवाग्भिर्मिथ्यावाग्भिः करणैराकृष्यन्ते विषयैषिणो रागिणः। गौतमी—महाभाग नार्हसि एवं मन्त्रयितुम्। तपोवनसंवर्धितः खल्वयं जनोऽनभिज्ञः कैतवस्य। सोल्लुण्ठमाह–तपोवृद्धे। स्त्रीणामिति। अमानुषीणामपि स्त्रीणां अशिक्षितपटुत्वं अनभ्यस्तचातुर्यं दृश्यते किमुत किं वा याः प्रतिबोधवत्यो ज्ञानिन्यः। चैतन्यभाजामुचितमेव चैतन्यमिति भावः। एतदेव द्रढ़यति। किल व्याजे परभृताः कोकिलाः अन्तरिक्षगमनागमनसंचारात् प्राक् पूर्वमन्यद्विजैरन्यपक्षिद्वारा। "दन्तविप्राण्डजा द्विजा" इत्यमरः। स्वमात्मीयमपत्यजातं पोषयन्ति। तथा चेयं तव सुवासिनी निश्चितं मां प्रतारयितुमागतास्तीति भावः। अन्यबुद्ध्यपेक्षया स्त्रीबुद्धेराधिक्यम्। तथा चोक्तं "आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणेति"। प्रतिवस्तूपमानमलंकारः। यदाह दण्डी।

वस्तु किंचिदुपन्यस्य न्यसनं तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा॥ २३॥

शकुन्तला—अनार्य किं तव आत्मनो हृदयानुमानेन सर्वमेतत् प्रेक्षसे? को नामान्यो धर्मकञ्चुकव्यपदेशिनः तृणच्छन्नकूपोपमस्य तवानुकारी भवि-

ष्यति। धर्मानुरुद्धात्मकप्रकाशिनः। तृणेति यथासमवुद्ध्या गच्छन्नृजुः कोऽपि तृणावृते कूपे प्रविश्यापगच्छति तदुपमस्त्वमित्यर्थः। अनुकारी सदृशः। अविभ्रमो विलासशून्यः। तथाहि विलासशून्यत्वमेव प्रकटयति— अवलोकितं तिर्यक् वक्रं न भवति। अवलोकितलक्षणम्—"अधःस्थदर्शनं यत्र तदवलोकितमुच्यते"। वैदग्ध्ये तच्च तिर्यग् भवति। चक्षुः पुनरालोहितं अत्यन्तारुणं तच्चास्वरसे। वचोऽप्यस्याः परुषाक्षरं अहृद्यवर्णं सत् स्थानेषु न संशय्यते संदिग्धं न भवति। तच्च गद्गदस्वरादि प्रायो वैदग्ध्य एव भवति। बिम्बाधरश्चास्याः सकल एव सम्पूर्ण एव हिमार्त्त इव कम्पते। विना अस्वरसमधरः सम्पूर्णो न वेपते इति कम्पननामायमधरः(?)।

कम्पनं कम्पनादेव वेदनाशीतयोस्तथा।
भये रोषे जपादौ च तद्दिष्टं नाट्यपण्डितैः॥"

प्रकामविनते अत्यर्थं नते भ्रुवौ युगपदेव भेदं गते स्तः। एतावता भ्रुकुटी व्याकृता भवति। यदाह—"क्रोधस्थानेषु दीर्घेषु योजयेद् भ्रुकुटीं बुधः"॥ २४॥

अकैतवः अकपटिकः। मय्येवेति। अस्मरणाद्दारुणा भयानका चित्तवृत्तिर्मनोव्यापारो यस्य तादृशे मयि वृत्तं निर्व्यूढं रहःप्रणयमेकान्तप्रेम अप्रतिपद्यमानेऽनङ्गीकुर्वाणे अतिलोहिताक्ष्या शकुन्तलया स्मरस्य शरासनं धनुर्भग्नमिव। कुतः, कुटिलयोर्भ्रुवोर्भेदात्। कीदृश्याऽनया, अतिरुषा अतीवरोपया यद्वा अतिरोषेण करणेन। अत्र क्रोधरूपेण रसस्य संपत्तिः। यदाह— "प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते"॥ २५॥

अनार्येत्यादिशकुन्तलावाक्येषु राजा उत्तरयति, प्रथितं ख्यातं चरितम् इदं तृणच्छन्नकूपोपमत्वादि। शकुन्तला—

यूयमेव प्रमाणं जानीथ धर्मस्थितिं च लोकस्य।
लज्जाविनिर्जिता जानन्ति न खलु किमपि महिलाः॥ इति।

यूयमेव प्रमाणं नियामकाः लोकस्य कृत्याकृत्ये इति शेषः। यद्वा प्रमाणं सत्यवादिनः।

"प्रमाणं नित्यमर्यादाशास्त्रे च सत्यवादिनि।
क्लीबे नियामके हेता"विति कोषः।

लोकधर्ममर्यादां व्यवहारपथ इति यावत् यूयमेव जानीथ। ननु त्वमेव कथं नैतज्ज्ञात्रीत्याह–महिलाः स्त्रियः किमपि न जानन्ति। कुतः, व्रीडापराभूताः। यतः जानन्त्योऽप्यशेषविशेषप्रकाशे त्रपावशान्न ईशा इति भावः। मह्यते पूज्यते अलंकारादिभिरियमिति महिला ॥ २६ ॥

सोल्लुण्ठमाह—सुष्ठु इदानीं स्वच्छन्दचारिणी समवस्थिता तावदहम्। स्वच्छन्दचारिणी गणिका। गौतमी—जाते अस्य पुरुवंशस्य प्रत्ययेन मुख-मधुनो हृदयप्रस्तरस्य हस्ते त्वमुपगतासि। मुखे मधु मधुप्रायं वचो यस्य तादृशस्य। अतिहृद्यतररसवर्णाश्रयतया वचसो मधुसाम्यं, एतदनङ्गीकार-स्थिरतया हृदयस्य प्रस्तरसाम्यम्। तथा च भवभूतिः—

वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि कोऽहि विज्ञातुमीश्वरः॥

पटान्तेन वस्त्राञ्चलेन आवृणोति। अप्रतिहतमनिवारितं चापलं कर्तृ। अतः परीक्ष्येति। अत एवंविधखेदप्रसङ्गात् परीक्ष्य आकलय्य कर्त्तव्यं क्रियामात्रमिति शेषः। विशेषात् संगतं संगमरूपं रह एकान्तं कर्त्तव्यमित्यर्थः। अज्ञातहृदयेषु अबुद्धान्योन्याशयेषु सौहृदं प्रेम एवमनुभूयमानप्रकारेण वैरीभवति दुरन्तविधायकत्वादित्यर्थः॥ २७ ॥

अयि भोः! अस्वरसे अत्रभवतीसंप्रत्ययात् शकुन्तलानिश्चयात् अवलेपेना-नादरेणाक्षिपन्ति भवन्तः। कृतं निष्फलम्। आजन्मन इति। जन्मारभ्य शाठ्यं धूर्त्ततां योऽशिक्षितोऽपाठितस्तस्य जनस्य वचनमप्रमाणम् अयथार्थं भवतीति शेषः। ते जना आप्तवाचो यथार्थवचनाः सन्तु। ते के, यैः पराभिसंधानं विद्या इति कृत्वा अधीयते पठ्यते। तथा चेयं शकुन्तला कथंचिदपि कैतवं न जानाति तद्वचनं सत्यमेव। भवन्तः सर्वथा शठोक्तय एव अतो भवद्वचने न प्रमाणतेति भावः॥ २८ ॥

अभ्युपगतम् अङ्गीकृतम्। एवंविधाः शठा असत्यवादिन इति यावत्। इमां शकुन्तलामभिसंधाय प्रतार्य किं लभ्यते जनैरर्थात्। क्रोधादाह–विनिपातः नरकगमनम्। पौरवैः, अश्रेद्धयमप्रतीतिविषयः। अनुष्ठितः कृतः गुरुसंदेशः कण्वादेशः। प्रतिनिवर्त्तामहे गृहं प्रतिगच्छामः। तदेषेति। एषा भवतः पत्नी

शकुन्तला अस्तीति शेषः। एनां शकुन्तलां त्यज वा गृहाण वा। हेतुमाह। हि यतो दारेषु पत्नीविषये उपयन्तुः परिणेतुः सर्वतोमुखी सर्वप्रकारेण प्रभुता ऐश्वर्यम् ॥ २९ ॥

शकुन्तला—"हूँ क्रोधे हहार्त्तिष्वि"ति भरतः। अहममुना तावत् कितवेन विप्रलब्धा प्रतारिता। यूयमपि मां परित्यजथ इत्युक्त्वानुप्रस्थिता पश्चाल्लग्ना। गौतमी—अनुगच्छति नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशदारुणे भर्तरि किं करोतु तपस्विनी? नः अस्मान्। प्रत्यादेशदारुणे निराकरणभयानके। "प्रत्यादेशो निराकृतिः"। तपस्विनी अनुकम्प्या। परिदेविनी क्रन्दनशीला। आः पुरोभागिनि दोषैकदर्शिनि। "दोषैकदृक् पुरोभागी"–त्यमरः। "रोषोक्तौ स्मृतमाः पदमि"त्यमरः। यदि यथेति। क्षितिपो दुष्मन्तो यथा वदति तथा व्यभिचारिणी त्वमसि तथा उत्कुलया कुलव्यवहारातिक्रमेण विद्यमानया त्वया पितुः किम्, अपि तु न किमपि प्रयोजनमस्तीत्यर्थः। अथ पक्षान्तरे, तु पुनः आत्मनो व्रतं पातिव्रतं शुचि शुद्धं वेत्सि जानासि तदा पतिगृहे तव दास्यं दासभावः दासकर्म वा क्षमं योग्यम् ॥ ३० ॥

इतः पतिस्थान एव। सप्तम्यर्थे तसिः। नियममाह—शशाङ्कश्चन्द्रः कुमुदान्येव, सविता रविः पङ्कजान्येव बोधयति प्रकाशयति नान्यानीत्यर्थः। वशिनां जितेन्द्रियाणां वृत्तिः परकलत्रं परस्त्री तत्संश्लेषः प्रसङ्गस्तत्र पराङ्मुखी उदासीना। "वृत्तिर्वर्त्तनजीवन" इत्यमरः। तथा च पार्श्वस्थिताप्येषा वशिनो मत्तः प्रयोजनवती न स्यादिति ॥ ३१ ॥

मूढः स्यामिति। अहं मूढोऽज्ञो विस्मरणशील इति यावत् स्यां भवामि, एषा शकुन्तला वा मिथ्या असत्यं वदेत्—इति संदेहे संशये वद ब्रूहि—दारत्यागी भवामि, आहो विकल्पे परस्त्रीस्पर्शपांशुलोऽन्यकलत्रस्पर्शदुष्टो भवामि। तस्मात् परकलत्रपरिग्रहणाद् दारत्याग एव श्रेय इति ॥ ३२ ॥

"पुरोधास्तु पुरोहित" इत्यमरः। अनुशास्तु आज्ञापयतु। अत्रभवती शकुन्तला आप्रसवात् प्रसवपर्यन्तम्। कुतः कारणात्, साधुनैमित्तिकैः श्रेष्ठज्योतिःशास्त्रज्ञैरादिष्टपूर्वः पूर्वं ज्ञापितः। तल्लक्षणोपेतश्चक्रवर्त्तिलक्षणोपेतः। अभिनन्द्य संस्तूय। शुद्धान्तमन्तःपुरमेनां शकुन्तलां प्रवेशयिष्यसि प्रापयि-

ष्यसि । विपर्यये अन्यथाभावे यद्येतत्पुत्रश्चक्रवर्त्तिलक्षणसंपन्नो न भविष्यति । व्यवस्थितं नियमितम् । शकुन्तला—भगवति वसुन्धरे देहि मेऽवकाशम् । मम प्रवेशाय द्विधा भवेति भावः । किं नु खलु स्यात् किं तदाश्चर्यजनकं भवेदित्यर्थः । आश्चर्यबीजमाह पुरोधाः—सा निन्दन्तीति । सा शकुन्तला स्वानि स्वकीयानि भाग्यानि कर्माणि निन्दयन्ती बाहूत्क्षेपं भुजोच्चालनं यथा भवत्येवं क्रन्दितुं प्रवृत्ता । राजा—किं तदनन्तरम् ? स्त्रीसंस्थानं स्त्रिया एव स्थानमाकृतिर्यस्य तज्ज्योतिस्तेजोऽप्सरस्तीर्थमारात् अप्सरस्तीर्थनिकटे एनां शकुन्तलामाक्षिप्य आदाय तिरोऽभूदन्तर्हितं बभूव ॥ ३३ ॥

एषोऽर्थः प्रत्यादिष्ट इति । माया इति कृत्वा आद्यत एव मया सा त्यक्तेत्यर्थः । किं मृषेति । किमसत्यतर्ककरणेन मृग्यत इत्यर्थः । इत इत एतु राजा । राजा—काममकामानुमतां प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं पत्नीं न स्मरामि । तु पुनः बलवदतिशयेन दूयमानं खिद्यमानं मे मम हृदयं कर्तृ प्रत्याययतीव मां तत्परिग्रहे इत्यर्थात् । इवशब्द उत्प्रेक्षायाम् ।

× × × ×

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः ।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकायां
कण्वोद्भवापरिहृतो खलु पञ्चमोऽङ्कः ॥



६

नागरको नगराधिकारी तच्छ्यालकः। एतावतातीवाविमृश्यकारित्वमस्योक्तम्। "बद्धचौरो मालः स्यात् कुम्भीलः सन्धिहारक" इति हारावली। भाषा चैतेषां प्राकृतम्। यदाह भरतः—

"नीचानां पाखण्डानां नीचगृहचारिणाम्।(?)
विद्वद्भिः प्राकृतं चापि कारणात् संस्कृतं क्वचित्॥"

चौरपात्रस्तु शकारनामधेयः। "शकार इति स ज्ञेयः शकारप्रायभाषणात्"। अरे कुम्भीलक कथय कथय। कुत्र त्वया महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुरीयं समासादितम्? उत्कीर्णनामाक्षरं दुष्मन्तस्येदमिति लिखितवर्णम्। भीतिनाटितकेन भयद्योतकविशेषणम्। प्रसीदन्तु प्रसीदन्तु भावमिश्राः। भावो मान्यः मिश्राः षड्दर्शनवेत्तारः। "हण्डे इत्यधमैर्वाच्यः समानो रङ्गभूमिष्वि"ति भरतः। ण ईदिसस्सेति नेदृशस्याकार्यस्य कारक इति। किं णु क्खु इति। किं नु खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा ते प्रतिग्रहो दत्त इति। भद्रो ब्राह्मणस्त्वमसि अतोऽङ्गुरीयकमिदं भवते दुष्मन्तेन प्रतिग्रहो दत्त इत्यर्थः। धीवरः—शृणुत तावदेनं अङ्गुरीयकागमनवृत्तान्तमित्यर्थः। अहं शक्रावतारवासी धीवरः। शक्रावतारो गङ्गासर्वतीर्थविशेषः(?)। "कैवर्त्ते दासधीवरावि"त्यमरः। हण्डे इति नीचसंबोधनम्। नीच पाटच्चर किमस्माभिर्जातिं वसतिं च पृष्टोऽसि त्वम्। पाटच्चरो बटबाल इति यस्य ख्यातिः। सूचक इति चोरद्योतकपुरुषसंबोधनम्। कथयतु सर्वमनुक्रमेण। अन्तरा एनं मा प्रतिबधान न निवारयेत्यर्थः। उभौ रक्षिणौ—यत् राउत्त आज्ञापयति। लप रे लप। यदीश्वरः पृच्छति तत् कथय कथयेत्यर्थः। धीवरः—अहं तावत् जालैः बडिशादिभिर्मत्स्यमारणोपायैः कुटुम्बभरणं करोमि। "बडिशं मत्स्यवेधनमि"त्यमरः। श्यालकः—उपहस्य। तल्लक्षणम्—

उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम् ।
आकुञ्चितांसकशिरस्तच्चोपहसितं भवेदिति ॥

विशुद्ध इदानीमस्याजीवः अस्य धीवरस्य विशुद्धो निर्मलः आजीवो जीवनोपायः । भट्टारक किं मामेवं भणसि किं मद्वर्त्तनोपायं निन्दसीत्यर्थः । सहजे इति—

सहजं किल यद् विनिन्दितं न खलु तत् कर्म विवर्जनीयम् ।
पशुमारणं करोति कारणात् षट्कर्मा विद्वानपि श्रोत्रियः ॥

सहजं कुलक्रमानुगतं निन्दितमपि यत् कर्म व्यवहारजातं, खलु निश्चये, तत् कर्म न विवर्जनीयं न त्याज्यं पुरुषाणामिति शेषः। उपपादकमाह–विद्वान् विज्ञः पशुमारणं करोति। कुतः कारणात ? महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदिति स्मृतिबलात्। ननु श्रोत्रियः समाचारयुक्तस्तथा न करोति तत्र कीदृशो विद्वान्, षट्कर्मा षट्कर्माचारकर्त्ता।

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥ इति मनुः ॥

श्रोत्रियलक्षणम्—

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

तथा च निषिद्धमप्येतत् परंपरायातं कर्म कुर्वतो नीचस्य मम न दूषणमिति भावः ॥ १ ॥

ततस्ततः। तदेकदिवसे मया रोहितमत्स्यखण्डः कल्पितः छिन्नः! याव-त्तस्योदराभ्यन्तरगतमिदं महारत्नभासुरमङ्गुरीयकं पश्यामि। पश्चादिह विक्रयार्थं दर्शयन्नेव अर्थादङ्गुरीयकं गृहीतं भावमिश्रैः। एतावानेवास्यागमः आगमन-निमित्तमेतदेवेत्यर्थः। साम्प्रतं मारय वा ताडय वा। जानुक इति चोरज्ञातु-रपरपदातेर्नाम। मत्स्योदराभ्यन्तरगतमिदं महारत्नभासुरमङ्गुरीयकं इति न संदेहः। कुतः, यथास्याङ्गुरीयस्यामिषगन्धो बासते लगति। अङ्गुरीयागमः तावदिदानीं विमर्ष्टव्यः मत्स्योदरं प्रति कथं तद्गतमिति जिज्ञासितव्यमित्यर्थः। ता तस्माद्राजकुलमेव गच्छामः। तत्रैव तद् वृत्तान्तं ज्ञास्याम इति भावः।

आगच्छ रे ग्रन्थिच्छेदक आगच्छ। ग्रन्थिच्छेदको गाँठकाटा यस्य प्रसिद्धिः। रक्षिणौ प्रति–इह गोपुरद्वारे अप्रमत्तौ अवहितौ प्रतिपालयतां मां यावद्राजकुलं प्रविश्य निष्क्रामामि निर्गच्छामि। उभौ–प्रविशतु राजकुलमिति शेषः राउत्तः। स्वामिप्रसादेषु निमित्तसप्तमी। तत्र प्रसादपक्षे आवयोरपि प्रयोजनं न भवेदिति भावः। जानुकः—चिरयति राउत्तः। राउत्तस्य महान् विलम्बोऽस्तीति भावः। अवसरोपसर्पणीया राजानः। प्रायशोऽवसरस्तेन कथयितुं न लब्धोऽस्तीति विलम्ब इति भावः। वयस्य स्फुरतो मे हस्तौ इमं ग्रन्थिच्छेदकं घातयितुं। एषोऽस्माकमीश्वरो गृहीत्वा राजशासनं प्राप्त आगतः। तस्मात् सकुल्यानां बान्धवानां शकुलानां मत्स्यानां वा मुखं पश्यतु अथवा गृध्रशृगालानां बलिर्भवतु। बलिरत्रोपहारः। श्यालको वदति—शीघ्रं शीघ्रं एतं मुञ्चेति शेषः। स्वानिष्टाहितसंस्कारादाह चौरः—हा हतोऽस्मीति। मामेव घातयितुमाज्ञापयतीति भावः। मुञ्चतं मुञ्चतं एनं जालोपजीविनम्। कुतः, उपपन्नः किलाङ्गुरीयकस्यागमः अस्मत्स्वामिना। यावदस्य कथितम् अङ्गुरीयागमस्य तत्त्वं राज्ञे निवेदितमित्यर्थः। यमवसतिं गत्वा प्रतिनिवृत्त एष चौरः। भर्त्तस्तव क्रीतं साम्प्रतं मम जीवितं रक्षणादर्थात्। एष भर्त्रा अङ्गुरीयकमूल्यसंमितस्ते प्रसादीकृतस्ततो गृहाणेमम्। एष वलयः। भर्त्रा राज्ञा। मूल्यसंमितो मूल्यतुलितः। क्वचिदेष भर्त्रा अङ्गुरीयकदर्शनसमुल्लसितेन पारितोषिकस्ते प्रसादीकृत इति पाठः, तत्र पारितोषिकः संतोषदत्तः। "कङ्कणं वलयोऽस्त्रियामि" त्यमरः। एष राज्ञानुगृहीतः। अनुग्रहं व्यनक्ति यत् शूलादवतार्य हस्तिस्कन्धे समारोपितः अर्थादेष चौरः। जानामि तेन स्वामिनोऽङ्गुरीयकेन बहुमतेन भवितव्यं बहुप्रयोजनवता। नैतस्मिन् भर्त्तुर्महार्हरत्नमिति परितोषः। एतावत् पुनस्तर्कयामि—तस्य दर्शनेन कोऽपि हृदयस्थितो जनो भर्त्रा स्मृतोऽस्तीति। तस्याङ्गुरीयस्य। यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्। प्रकृतिगम्भीरः स्वभावानवगाह्यः। पर्युत्सुकमना उत्कण्ठितः। तोषित इदानीं भर्त्ता राउत्तेन। ननु भणाम्यस्य मत्स्यशत्रोः कृत इति। चौरप्रयोजनार्थं भर्त्रा राजसंतोषोऽर्जित इत्यर्थः। भर्तः इह युष्माकमप्यर्द्धं रत्नस्य मूल्यं भवतु रक्षकत्वादिति भावः। निष्प्रवादायादरादाह धीवरः, महत्तर साम्प्रतं प्रियवयस्यो

मम संवृत्तोऽसि। कादम्बरीनिमित्तं प्रथमं शोभितोऽस्माकमाकाङ्क्षित इति। क्वचित् कादम्बरीनिमित्तमित्यत्र कादम्बरीस्वस्तिकमिति पाठः। तत्र कादम्बरी-स्वस्तिकं मदिरागृहम्। "स्वस्तिकः सर्वतोभद्र" इत्यमरः। गृहभेद एतत्। शौण्डिकागारमेव गच्छामः।

× × × ×

मिश्रकेशीत्यप्सरःसंज्ञा। वदतीति शेषः। निर्वर्त्तितं मया पर्यायनिर्वर्त-नीयं क्रमिकानिर्वाह्यं कर्म। अप्सरःतीर्थसंनिधौ यावत् साधुजनस्याभिषेक-कालः। तत् साम्प्रतं अमुष्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्ये। कुतस्तत्राह, मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तयापि संदिष्टास्मि त्यागानन्तरं राजक्रमजिज्ञासार्थमिति भावः। किं नु खलु उपस्थितक्षणेऽपि दिवसे निरुत्स-वारम्भमिव राजकुलं दृश्यते। उपस्थितक्षणे संजातोत्सवे। "क्षणः पर्वोत्सव व्यापारे" इति मेदिनी। अथवा अस्ति मे विभवः प्रणिधानेन ज्ञातुम्। विभवः सामर्थ्यम्। प्रणिधानं ध्यानम्। किन्तु सख्याः मया आदरः प्रमाणयितव्यः कर्त्तव्यः। मेनकयाप्रत्यक्षत एव मयि ज्ञातुमुक्तमिति भावः। भवतु आसा-मुद्यानवाटिकानां पार्श्वपरिवर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये। तिरस्करिणी तिरोधायिका। प्रच्छन्ना अदृश्या।

अथ चेटीद्वयप्रवेशः। तत्रैका परभृतिकानाम्नी वदति। अथ उपस्थितो मधुमासः? अथ अत्र प्रश्ने। मधुमासो वसन्तकालः।

आताम्रहरितवृन्तं जीवोच्छ्वसितं वसन्तमासस्य।
दृष्टं चूताङ्कुरकं रत्यै क्षणमङ्गलं नियच्छामि॥

क्वचिद्रतयेऽर्घमिति पाठः। "वृन्तं प्रसवबन्धनमि"त्यमरः। जीवोच्छ्वसितं जीवनवायवः। क्षणमङ्गलं उत्सवमङ्गलम्। नियच्छामि ददामि। क्वचिद् ददानीति पाठः॥ २॥

द्वितीया मधुरिकानाम्नी चेटी वदति—सखि परभृतिके किमेतदेकाकिनी मन्त्रयसि। सखि मधुरिके चूताङ्कुरं प्रेक्ष्य उन्मत्ता परभृतिका भवति। तव पुनः काल एष मदविभ्रमगीतानाम्। तस्मात् सखि अवलम्बस्व मां यावदग्रतो वर्धितया। "ग्यडगोडिये"ति यस्या लोके ख्यातिः। क्वचिद् पादपरिस्थिता

भूत्वेति पाठस्तत्र पादपमारुह्येत्यर्थः। अनेन चूतप्रसवेन संपादयामि कामदेव-वायनम्। वायनं नैवेद्यम्। "पुष्पं फलं च वृक्षाणां प्रसवं संप्रचक्षत" इति शाश्वतः। यद्येवमिति कामवायनं वितरसीत्यर्थः। हला ममाप्यर्धं वायनफलम्। सखि अभणितमप्येतत् संपत्स्यते यथा एकमेवावयोः शरीरं द्विधा विभक्तं प्रजापतिना। अवलम्बितकमत्रलम्बनविशेषः। अम्महे विस्मये। अप्रबुद्धोऽपि चूतप्रसव एष बन्धनभ्रष्टः सुरभिर्वाति। चूतप्रसवः वृन्तच्युतः। कपोतहस्त-लक्षणम्—

सर्वपार्श्वसमाश्लेषाद् कपोतसर्पशीर्षकः।
भीतो विज्ञापने चैव विनये च नियुज्यते॥

नमो भगवते मकरध्वजायेति मन्त्रेण विसृजति।

अर्हसि चूताङ्कुर मया दत्तः कामस्य गृहीतचापस्य।
संस्थापितयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम्॥

हे चूताङ्कुर गृहीतचापस्य कामस्य पञ्चाधिकः षष्ठः शरो भवितुमर्हसि। कीदृशः, संस्थापिता युवतिरेव लक्ष्यं येन तादृशः। शरश्च किंचित् संस्थाप्य त्यज्यत इति। क्वचिद् जुवइजणमोहणसहो इति पाठः। तत्र युवतिजनमोहन-सहः। लास्यमिदमासीनपाठ्यनामकम्। यथा—

द्रुतकरचरणविलासाभिनयैर्युक्तं प्रयुज्यते यत्र।
आसीनया वनितया भवति तदासीनपाठ्यं तु॥

कामस्य शराधिक्याशंसनेनाग्रे राज्ञो मान्मथः खेदः सूचितः॥ ३॥

अनात्मज्ञे आत्मपरिचयरहिते। एतावतास्या निरपेक्षशास्तिमतीत्वमुक्तम्। देवेन राज्ञा। अग्रतः प्रथमम्। उभे चेट्यौ—प्रसीदत्वार्यः। अगृहीतार्थे अज्ञातार्थे खलु आवाम्। हूँ क्रोधे। देवशासनं राजाज्ञा वासन्तैर्वसन्तसमय-पुष्पफलदायकैः प्रमाणीकृतं तदाश्रयिभिः पिकादिभिः। चूतनामिति। चिर-निर्गतापि चूतानां कलिका स्वमात्मीयं रजो न बध्नाति न मिश्रयति। यदपि कुरवकं संनद्धं पुष्पितुमुद्यतं तत् कोरकावस्थया कलिकादशाया स्थितं, न विकसितमित्यर्थः। शिशिरे गतेऽपि पुंस्कोकिलानां रुतं कण्ठेषु स्थगितं, न बहिर्भूतमित्यर्थः। स्मरोऽपि चकितस्त्रस्तः तूणादर्धोद्धृतं शरं संहरति॥ ४॥

मम संवृत्तोऽसि। कादम्बरीनिमित्तं प्रथमं शोभितोऽस्माकमाकाङ्क्षित इति। क्वचित् कादम्बरीनिमित्तमित्यत्र कादम्बरीस्वस्तिकमिति पाठः। तत्र कादम्बरीस्वस्तिकं मदिरागृहम्। "स्वस्तिकः सर्वतोभद्र" इत्यमरः। गृहभेद एतत्। शौण्डिकागारमेव गच्छामः।

× × × ×

मिश्रकेशीत्यप्सरःसंज्ञा। वदतीति शेषः। निर्वर्त्तितं मया पर्यायनिर्वर्तनीयं क्रमिकानिर्वाह्यं कर्म। अप्सरस्तीर्थसंनिधौ यावत् साधुजनस्याभिषेककालः। तत् साम्प्रतं अमुष्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्ये। कुतस्तत्राह, मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तयापि संदिष्टास्मि त्यागानन्तरं राजक्रमजिज्ञासार्थमिति भावः। किं नु खलु उपस्थितक्षणेऽपि दिवसे निरुत्सवारम्भमिव राजकुलं दृश्यते। उपस्थितक्षणे संजातोत्सवे। "क्षणः पर्वोत्सवव्यापारे"इति मेदिनी। अथवा अस्ति मे विभवः प्रणिधानेन ज्ञातुम्। विभवः सामर्थ्यम्। प्रणिधानं ध्यानम्। किन्तु सख्याः मया आदरः प्रमाणयितव्यः कर्त्तव्यः। मेनकयाप्रत्यक्षत एव मयि ज्ञातुमुक्तमिति भावः। भवतु आसामुद्यानवाटिकानां पार्श्वपरिवर्त्तिनी भूत्वा तिरस्कारिण्या विद्यया प्रच्छन्ना उपलप्स्ये। तिरस्करिणी तिरोधायिका। प्रच्छन्ना अदृश्या।

अथ चेटीद्वयप्रवेशः। तत्रैका परभृतिकानाम्नी वदति। अथ उपस्थितो मधुमासः? अथ अत्र प्रश्ने। मधुमासो वसन्तकालः।

आताम्रहरितवृन्तं जीवोच्छ्वसितं वसन्तमासस्य।
दृष्टं चूताङ्कुरकं रत्यै क्षणमङ्गलं नियच्छामि॥

क्वचिद्रतयेऽर्घमिति पाठः। "वृन्तं प्रसवबन्धनमि"त्यमरः। जीवोच्छ्वसितं जीवनवायवः। क्षणमङ्गलं उत्सवमङ्गलम्। नियच्छामि ददामि। क्वचिद् ददानीति पाठः॥ २॥

द्वितीया मधुरिकानाम्नी चेटी वदति—सखि परभृतिके किमेतदेकाकिनी मन्त्रयसि। सखि मधुरिके चूताङ्कुरं प्रेक्ष्य उन्मत्ता परभृतिका भवति। तव पुनः काल एष मदविभ्रमगीतानाम्। तस्मात् सखि अवलम्बस्व मां यावदग्रतो वर्धितया। "ग्यडगोडिये"ति यस्या लोके ख्यातिः। क्वचिद् पादपपरिस्थिता

भूत्वेति पाठस्तत्र पादपमारुह्येत्यर्थः। अनेन चूतप्रसवेन संपादयामि कामदेव-वायनम्। वायनं नैवेद्यम्। "पुष्पं फलं च वृक्षाणां प्रसवं संप्रचक्षत" इति शाश्वतः। यद्येवमिति कामवायनं वितरसीत्यर्थः। हला ममाप्यर्धं वायनफलम्। सखि अभणितमप्येतत् संपत्स्यते यथा एकमेवावयोः शरीरं द्विधा विभक्तं प्रजापतिना। अवलम्बितकमवलम्बनविशेषः। अम्महे विस्मये। अप्रबुद्धोऽपि चूतप्रसव एष बन्धनभ्रष्टः सुरभिर्वाति। चूतप्रसवः वृन्तच्युतः। कपोतहस्त-लक्षणम्—

सर्वपार्श्वसमाश्लेषाद् कपोतसर्पशीर्षकः।
भीतो विज्ञापने चैव विनये च नियुज्यते॥

नमो भगवते मकरध्वजायेति मन्त्रेण विसृजति।

अर्हसि चूताङ्कुर मया दत्तः कामस्य गृहीतचापस्य।
संस्थापितयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम्॥

हे चूताङ्कुर गृहीतचापस्य कामस्य पञ्चाधिकः षष्ठः शरो भवितुमर्हसि। कीदृशः, संस्थापिता युवतिरेव लक्ष्यं येन तादृशः। शरश्च किंचित् संस्थाप्य त्यज्यत इति। कचिद् जुवइजणमोहणसहो इति पाठः। तत्र युवतिजनमोहन-सहः। लास्यमिदमासीनपाठ्यनामकम्। यथा—

द्रुतकरचरणविलासाभिनयैर्युक्तं प्रयुज्यते यत्र।
आसीनया वनितया भवति तदासीनपाठ्यं तु॥

कामस्य शराधिक्याशंसनेनाग्रे राज्ञो मान्मथः खेदः सूचितः॥ ३॥

अनात्मज्ञे आत्मपरिचयरहिते। एतावतास्या निरपेक्षशास्तिमतीत्वमुक्तम्। देवेन राज्ञा। अग्रतः प्रथमम्। उभे चेट्यौ—प्रसीदत्वार्यः। अगृहीतार्थे अज्ञातार्थे खलु आवाम्। हूँ क्रोधे। देवशासनं राजाज्ञा वासन्तैर्वसन्तसमय-पुष्पफलदायकैः प्रमाणीकृतं तदाश्रयिभिः पिकादिभिः। चूतनामिति। चिर-निर्गतापि चूतानां कलिका स्वमात्मीयं रजो न बध्नाति न मिश्रयति। यदपि कुरवकं संनद्धं पुष्पितुमुद्यतं तत् कोरकावस्थया कलिकादशाया स्थितं, न विकसितमित्यर्थः। शिशिरे गतेऽपि पुंस्कोकिलानां रुतं कण्ठेषु स्थगितं, न बहिर्भूतमित्यर्थः। स्मरोऽपि चकितस्त्रस्तः तूणादर्धोद्धृतं शरं संहरति॥ ४॥

मिश्रकेशी—नात्र संदेहः। अत्र तत्कथने। यतो महाप्रभावः खलु स राजर्षिः। चेटी—आर्ये कतिचिद्दिवसानि मित्रावसुना विष्टिकेन(?) भर्तुः राज्ञः पादमूलं प्रेषिताभ्यामावाभ्यामिह प्रमदवने कलागृहे कर्म संपादितम्। क्वचित् संपादितमित्यत्र समर्पितमिति पाठः। विष्टिराज्ञो वेटीति (?) यत् ख्यातिः। तदार्य (?) कर्णाकर्णिकयापि न श्रुतपूर्व एषोऽस्माभिर्वृत्तान्तः। तेन हीति तद्धेतोः पुनः कलिकाभङ्गादि न विधेयमित्यर्थः। आर्य कौतूहलमावयोरर्थात् श्रवणे यद्यनेनास्मद्रूपेण जनेन श्रोतव्यं ततो न गोप्यम्। तत् कथयत्वार्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति। मिश्रकेशी—उत्सवप्रिया राजानो भवन्ति। तदत्र गुरुणा कारणेन भवितव्यम्। अत्रोत्सवनिषेधे। कञ्चुकी—बहुलीभूतमेतत् किं न कथ्यते। सकलविदितवृत्तान्तोऽयमतः कथं न कथ्यते। कथयामीति भावः। शकुन्तलाप्रत्यादेशकौलीनं शकुन्तलानिराकरणरूपं कुकर्म। "कौलीनं स्यात् कुलीनत्वे गुह्ये जन्ये कुकर्मणी"ति विश्वः। उभे—आर्य श्रुतं विष्टिकमुखात् सर्वमङ्गुरीयकदर्शनं यावत्। विष्टिको वार्त्तिक बेठिया यत् ख्यातिः। "विष्टिकः कर्मकरे भद्रे प्रेषणे वैतानिकेऽपि चे"ति विश्वः। ऊढ़पूर्वा पूर्वं विवाहिता। प्रत्यादिष्टा निराकृता। मोहादस्मरणात् पश्चात्तापमनुशयम्। तथाहीत्युपदर्शने। देव इति सर्वत्रानुषज्यम्। रम्यं द्वेष्टि निन्दति। रम्यमात्रं अरविन्देन्दुपिकस्वरादिः। प्रकृतिभिः शिष्टैर्यथा पुरा पूर्ववत् प्रत्यहं न सेव्यते। शय्याप्रान्तविवर्त्तनैः करणभूतैः उन्निद्र एव जाग्रदवस्थ एव क्षपा रात्रीर्विगमयति अपनयति। यदाह "आसने शयने चापि न तुष्यति न हृष्यति।" यदान्तःपुरवधूभ्यो मञ्चाः क्रोशन्तीति न्यायादुपपत्तेः उचितां वाचं ददाति तदा गोत्रेषु नामसु स्खलितं भवति अर्थात् राज्ञः अन्यवधूनाम्नि वक्तव्ये शकुन्तलाव्यवहारात। नाम गोत्रम्। अथ व्रीड़या विलक्षो भवतीति शेषः। "विलक्षो विस्मयान्वित" इत्यमरः॥ ५॥

मिश्रकेशी–प्रियं मे प्रियम्। प्रभवतो राज्ञः अथवा प्रभवतो जायमानादिति वैमनस्यविशेषणम्। प्रत्याख्यातः। युज्यते। एत्वेतु भवान्। अयि प्रश्ने। स्वकर्म स्वकर्त्तव्यमनुष्ठीयताम्। प्रत्यादिष्टेति। एष राजा आत्मनस्तेजोगुणैः क्षीणोऽपि न आलक्ष्यते। किंभूतः, प्रत्यादिष्टविशेषमण्डनविधिः निराकृत-

विशिष्टालंकारविधानः। "विधिर्दैवविधानयो"रित्यमरः। किं कुर्वन्, वामप्रकोष्ठे वामकरमूले श्लथं कार्श्येन सर्वतः संचरिष्णु काञ्चनं सौवर्णमेकमद्वितीयं वा वलयं कङ्कणं बिभ्रत्। शकुन्तलाविषयिण्या चिन्तया यज्जागरणं तेन प्रताम्रे नयने यस्य तादृशः। क इव, संस्कारोल्लिखितः प्रस्तरविशेषघृष्टो मणिरिव। सोऽपि धर्षणादात्मतेजोगुणैः कृशो न लक्ष्यते ॥ ६ ॥

मिश्रकेशी—स्थाने खलु प्रत्यादेशविमानितात्प्यस्य कारणात् शकुन्तला क्लाम्यति खिद्यति। एतद् विलोचनाञ्चलातिथिर्लोको मुह्यत्येव परमित्यर्थः। हृदयमुपालभते प्रथममिति। प्रथममाद्यतः सारङ्गाक्ष्या शकुन्तलया इत्यर्थः। प्रतिबोध्यमानमपि सुप्तं शयितं इदं हतहृदयं नष्टचेतः संप्रति, तद्विरहे सतीत्यर्थः, विबुद्धं जागृत अनुशयदुःखाय पश्चात्तापखेदाय ॥ ७ ॥

मिश्रकेशी—ईदृशान्यस्यास्तपस्विन्याः भागधेयानि। तद्वैगुण्यं तेनेति भावः। विदूषकः—हूं क्रोधे। भूयोऽपि लङ्घितः शकुन्तलावातेन। राजा शकुन्तलामधिकृत्य वातेन स्पृष्ट इति भावः। न जाने कथं विचिकित्सितव्यः प्रतिकर्त्तव्यो भविष्यति। यथाकामं यथाभिलषितं अध्यास्तामुपभुङ्क्ताम्। "स्यादेतदेव प्रमदवनमन्तःपुरोचितमि"त्यमरः। वेत्रवतीति प्रतिहारिकानाम। अमात्यं शिष्टम्। अनुष्ठातुं कर्त्तुम्। प्रत्यवेक्षितं चर्चितं(?) पौरकार्यम्। तत् पत्रमारोप्य दीयतां यद्वा तत् सर्वं पत्रे लिखित्वा प्रहीयतामित्यर्थः। प्रतीहारी-यद्देव आज्ञापयति। पार्वतायन इति कञ्चुकिनाम। स्वनियोगमन्तःपुरावेक्षा-रूपम्। विदूषकः—कृतं भवतेदानीं निर्मक्षिकं, मक्षिकाया अप्यभावान्निर्जन-मित्यर्थः। साम्प्रतं शिशिरविच्छेदरमणीये एतस्मिन् प्रमदवने आत्मानं विनोदय। रन्ध्रोपनिपातिनः छिद्रानुसन्धातारः अनर्था दुरुदर्काः तदव्यभिचारि अवश्यंभावि यथार्थमिति यावत्। अत्रावस्थामेव दृष्टान्तयति मुनिसुतेति। ममेदं मनश्चित्तं तमसा मोहेन, च पुनरर्थे, मुक्तं त्यक्तम्। तमसा कीदृशेन, मुनिसुतायाः प्रणयः स्नेहस्तस्य स्मृतिः स्मरणं तस्य रोधिना तिरोधायकेन। क्वचित् स्मृतिबोधिनेति पाठः। स न साधीयान् मोहेन स्मृत्यवरोधनात्। एतत्तु रन्ध्रम्। अथानर्थोपनिपातमाह—सखे हे प्रहरिष्यता प्रहारं कर्तुमुद्यता मनसिजेन धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

अङ्गुलिमुद्रया अङ्गुरीयकेन उपहितस्मृतिराहितस्मरणः सन् अकारणतिरस्कृतां प्रियां शकुन्तलामनुरोदिमि। अनुशयात्पश्चात्तापात् उत्कण्ठितः इति रन्ध्रोपस्थितिः। अत्रानर्थोपनिपातमाह सुरभिमाससुखं वसन्तसुखं च पुरोऽग्रेस्थितं समत्नी(?)भूतमित्यर्थः। "वसन्तः पुष्पसमयः सुरभिरि"त्यमरः॥ ९॥

वयस्य तिष्ठ तावत्। यावदमुना दण्डकाष्ठेन कन्दर्पबाणं नाशयामि। ब्रह्मवर्च्चसं ब्रह्मतेजः। किंचिदनुकारिणीषु किंचित्सादृश्यवतीषु। ननु भवता आसन्नचारिणी मेधाविनी लिपिकरी आदिष्टा माधवीलतामण्डपे इमां वेलां अतिवाहयिष्यामि। तत्रास्यांश्चत्रफलके स्वहस्तलिखिता तत्रभवत्याः प्रतिकृतिरिति आनयेति। तत्रात्मविनोदमाचरेति भावः। मेधाविनीति लिपिकरीनाम। हृदयप्रश्वासनं हृदयधारणोपायः। इत इत एतु भवान्। एष मणिशिलापट्टसनाथो माधवीलतामण्डप उपचाररमणीयतया निःशब्दस्वागतेन प्रतीच्छति भवन्तम्। तत्प्रविश्योपविशावः। उपचारः कुसुमादिविस्तारः। प्रतीच्छति अभ्युत्तिष्ठते। मिश्रकेशी—लतातिरोहिता भूत्वा प्रेक्षिष्ये तावत् सख्याः प्रतिकृतिम्। ततोऽस्यै भर्त्तुरनुरागं बहुमुखं निवेदयिष्यामि। बहुमुखं बहुप्रकारम्। तथा कृत्वा लतासु संसृष्टीभूयेत्यर्थः। स ज्ञाता त्वम्। प्रत्याख्यानसमये शकुन्तलाया इति शेषः। संकथा कथाप्रसङ्गः। तत्रभवत्याः शकुन्तलायाः संकीर्त्तनं नामप्रस्तावो वा। विदूषकः—न विस्मरामि किन्तु सर्वं कथयित्वावसाने त्वया भणितं—परिहासविजल्पो न भूतार्थः। मयापि मन्दबुद्धिना तथैव गृहीतमिति, कौतुकव्याहारो न स्वरूपार्थ इत्यर्थः। अथवा भवितव्यतात्र बलवतीति अनुभवितव्यमेव। तत्र त्वया मया वा किं कर्त्तव्यमित्यर्थः। इदमित्थमेव। विदूषकः भद्रमेव वदतीत्यर्थः। भोः किमिदमनुपपन्नं तव? कदाचित् सत्पुरुषाः शोकावरुद्धा भवन्ति? सत्पुरुषत्वेनैव भवतः शोको न स्थास्यतीत्यर्थः। धैर्यकरणमाह, ननु प्रवातेऽपि निष्कम्पा एव गिरयः महत्त्वादेव गिरेः प्रवातो नोद्वेजक इत्यर्थः। अशरण इति क्वचिदपि स्थातुं न पार्यत इति भावः। इतः प्रत्याख्यानादिति। तन्मां सविषं विषाक्तं शल्यमिव दहति। तत् कतरत्, इतो मत्तः प्रत्याख्यानात् स्वमात्मीयं जनं मुनिशिष्यमनुगन्तुं पश्चाल्लगितुं व्यवसिता यत्नं कृतवती। गुरुसमे अलङ्घ्या-

देशतया कण्वतुल्ये गुरुशिष्ये तिष्ठ नागच्छेति वदति सति, सा शकुन्तला स्थिता यत् क्रूरे निष्करुणे मयि पुनर्दृष्टिमर्पितवती यत् एतस्यापि निष्ठुरमाकर्ण्य यदि राजा मामङ्गीकुर्यादिति पुनस्तद्भावः। दृष्टिं कीदृशीं, अश्रुप्रकराविलाम्। यत्तदोर्नित्याभिसंबन्धः। अत्र स्मृतिरूपस्य भावस्यानुबन्धः। यदाह—"स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते"। पश्चात्तापोऽयम्। यदाह—"पश्चात्तापोऽनुतापश्च कृत्वा कार्यान्तरं भवेत्" ॥ १० ॥

मिश्रकेशी—अम्महे। "आश्चर्ये विस्मये दुःसहे अम्म" इति भरतः। ईदृशी कार्यपरता कार्यगतिः शकुन्तलाविषय इति शेषः। अस्य जनस्य दुष्मन्तस्येत्यर्थः। संतापेनापि अहं वा(?)न उत्सहे। भो अत्र तर्कयामि। केनापि तत्रभवती आकाशचारिणा नीतेति। क इवेति। तत् देवताया एव परं शक्यमित्यर्थः। किल प्रसिद्धौ। जन्मप्रतिष्ठा जननी। संमोहेऽपि विस्मयनीयः खल्वस्य प्रतिबोधः स्मरणविशेषः। यद्येवमिति। मेनकया तत्सख्या वा शकुन्तला नीतेति भवद्वचो यदि सत्यमित्यर्थः। तत् समाश्वसितु भवान्। आश्वासबीजमाह—अस्ति खलु समागमः कालेन तत्रभवत्या। कथमिति कुतस्तत् समागमः स्यादित्यर्थः? नहि मातापितरौ भर्तृविरहितां दुहितरं प्रेक्षितुं पारयतः। ताभ्यामेवानीय सा त्वयि दातव्येत्यर्थः। स्वप्न इति। तत् तस्माद्धेतोः मनोरथानामतटप्रपातं मन्ये। "प्रपातस्त्वतटो भृगु"रित्यमरः। पर्वतशिखरारूढस्य कस्यचित् पतनवत् ममापि शकुन्तलादर्शनाद्यारूढा मनोरथा पतिता इति भावः। असन्निवृत्तौ. अपरावृत्त्यां सत्यां अर्थात्तस्याः। तस्यास्तद्दर्शनं स्वप्नो नु। निद्रादृष्टमनोजज्ञानं स्वप्नः तेन तुल्यं अस्या दर्शनं वृत्तमित्यर्थः। नु वितर्के। तर्कस्तु निश्चायक इत्याह—माया नु। माया इन्द्रजालादिक्रिया तया तद्दर्शनं जातमतो न तत्समागमः। अत्रापि तर्क एव। उभयत्र स्वप्नेऽपि नानाकलितो दृश्यते। माया तु नानावलम्बिनी भवतीत्युपपत्तिम् आह, मतिभ्रमो नु। भ्रान्तो हि असदपि साक्षात्करोति शुक्तिकायां रजतवत्। पुण्यैस्तावत् दर्शनमात्रफलं क्लृप्तम्। "नु ऊहो वितर्क इत्युक्तः पदार्थेषु यथामती"ति। संशयालंकारः। "निश्चयेन तु वाक्यस्य समाप्तिः संशयो यथा" ॥ ११ ॥

वयस्य मैवं भण। एवं स्वप्नादिकम्। कुतस्तत्राह, ननु अङ्गुलीयकमत्र

निदर्शनं प्रमाणम् । अवश्यंभाविनो चिन्तनीयसमागमा भवन्तीति । असुलभं दुर्लभं यत् स्थानं तस्या एवाङ्गुलिरूपं तस्मात् यो भ्रंशः स्खलनं तेन शोचनीयं……।❀

……भवेत् । सखि दूरे वर्त्तसे । एकाकिन्येव कर्णसुखान्यनुभवामि । भो इयं नाममुद्राङ्गुरीयकं केन पुनरुपोद्घातेनोपक्रमेण भवता तत्रभवत्या हस्तसंसर्गं प्रापिता । ममापि कौतूहलेन श्रवणोत्कण्ठयेव वादित एषः । पाठान्तरे व्यापारितः । कियच्चिरेण कियता कालेन । ततस्ततः । किमिति । एकैकं यासि यास्यसि । अन्तं नामाक्षरान्तम् । मदवरोधेति अन्तःपुरसेवकः नेता रसिकः(?) ॥१३॥

रमणीयः खल्ववधिर्विधिना विसंवादितः । अथ कथं रोहितमत्स्यस्य बडिशमिव मुखं प्रविष्टमासीत् । युज्यते । एवमतः खलु तपस्विन्याः शकुन्तलायाः अधर्मभीरोरमुष्य राजर्षेः परिणये संदेहः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते । तत्कथमप्येतत् । अहमपीदं दण्डकाष्ठमुपालप्स्ये । कथं किं ऋजुकस्य मे कुटिलमसि त्वम् । बन्धुरं रम्यम् । निमग्नमम्भसि आसीरित्यर्थः । नाम संभावनायाम् । मयैव चेतनेनैवेत्यर्थः ॥१४॥

स्वयमेव प्रतिपन्नः यदहं वक्तुकामास्मि । रसान्तरकरणाय हेतोः—सर्वथाहं बुभुक्षया मारयितव्यः । अयमस्मद्रूपः । चित्रफलकं चित्रलेखपटी । भट्टारक इयं चित्रगता भट्टिनी शकुन्तला । "भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषिती"ति विश्वः । दीर्घेति । लीला शृङ्गारचेष्टा । अञ्चितं चञ्चलं पूजितं वा । "कर्कन्धूः पाककर्कन्धू"रित्यमरः । तत्रैव पाटलता संगच्छते । रुचिरं सुन्दरं ओष्ठाभ्यां रुचिरं कान्तिजनकमिति शाङ्करः पाठः । आलपतीव मामर्थात् । विभ्रमो विलासः । तस्याः, तुङ्गमिव रेखानिपुणतया तथा भानात् । एवमग्रेपि । पद्यमिदमनतिमधुरं दाक्षिणात्यपुस्तकेष्वेव दृश्यते ॥१५॥

---

❀ [Here ends the Vidyasagara Ms. of the Vangiya Sahitya Parisad. The Bodleian Ms. continues it though in an abridged form but takes up this शोचनीयं with शोचनीयं in the next speech of मिश्रकेशी ]

भो भावमधुरा रेखा। भावोऽभिप्रायः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु। आलिखितप्रदेशे इति च पाठः। किं बहुना, सत्त्वानुप्रवेशशङ्कयालपनकौतुकं मे जनयति। अहो राजर्षेर्वर्त्तिकारेखानिपुणता। जाने प्रियसखी मेऽग्रतो वर्तत इति। यद्यदिति—अन्यथा क्रियते यद्यपीत्यर्थः। लावण्यं सौन्दर्यम्॥ १६॥

सदृशं पश्चात्तापगुरोः स्नेहस्य। साक्षादिति—स्रोतोवहां नदीम्। मृगतृष्णा मरीचिका। निदर्शनालंकारः॥१७॥

भोस्तिस्र आकृतयो दृश्यन्ते। सर्वा एव दर्शनीयाः। तत्कतमा तत्रभवती शकुन्तला? अनभिज्ञ एव तपस्वी सख्या रूपस्य। मोघचक्षुपोऽस्य इयं न गता प्रत्यक्षताम्। मोघत्वं शकुन्तलारूपादर्शनात्। निर्वर्ण्य दृष्ट्वा, तर्कयामि यैषा शिथिलकेशोद्वमत्कुसुमेन बद्धस्वेदबिन्दुना वदनेन विशेषनमितं शाखाभ्यां बाहुलतिकाभ्यां उच्छ्वसितनीविना वसनेनावसेकस्निग्धपल्लवामशोकलतिकां संश्रिता ईषत्परिश्रान्तेवालिखिता सा तत्रभवती, शेषे सख्याविति। स्निग्धेति—प्रान्तभागे मलिना रेखा दृश्यते। अश्रु सात्त्विकम्। वर्णको हरितालादिः। उच्छ्वास उन्नतत्वम॥ १८॥

आर्य माधव्य अवलम्बस्व चित्रफलकं यावद् गच्छामि। भोः किमत्रापरमभिलिखितव्यम। यो यः प्रियसख्या अभिमतप्रदेशस्तमालिखितुकाम इति तर्कयामि। कार्येति—सैकतं बालुकातटम। पादः प्रत्यन्तपर्वतः कार्य इत्यनुषङ्गः। तामभितः मालिनीसमीपे गौरीगुरोर्हिमालयस्य। कृष्णमृगस्य कृष्णसारस्य॥१९॥

यथा मन्त्रयति तथा तर्कयामि पूरितोऽनेनेति चित्रफलकः आकृतिभिः कूर्चानतानां तापसानाम्। कूर्चः श्मश्रुः। "कूर्चो विकत्थने मध्ये भ्रुवोः श्मश्रुणि कैतव" इति विश्वः। किमिव, इवशब्दो वाक्यालंकारे। वनवासस्य कन्यकाभावस्य सदृशं भविष्यति। कृतमिति। बन्धनं वृन्तम्। कोमलं रम्यम्॥ २०॥

किं न खलु तत्रभवती रक्तकुवलयशोभिनाग्रहस्तेन मुखमपवार्य चकितेव स्थिता। ही ही भो हास्योक्तौ। एष दास्याः पुत्रः कुसुमरसपाटच्चरो मधुकरोऽत्रभवत्या वदनकमलमभिलषति। पाटच्चरश्चौरः। त्वमेवाविनीतशासने प्रभवसि।

एषेति—अथ च चन्द्रमरीचिप्राया(?)शकुन्तलेति सूच्यत इति शङ्करः ॥ २१ ॥

अभिजातमुचितं खलु व्याहृतः। खल्वस्य व्याहृतमिति पाठान्तरे। प्रतिषिद्धवामा खल्वेषा जातिः। लोभनीयं रम्यम्। बिम्बेति मध्यपदलोपी समासः ॥ २२ ॥

भो एवं तीक्ष्णदण्डस्य कथं न भेष्यति। प्रहस्य हसित्वा। तदुक्तम्—

"सावष्टम्भं साश्रुनेत्रं विकृष्टस्वरसंयुतम्।
करोपगूढपार्श्वं च तत्प्रहासं भवेदिति ॥

एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः। धीरमपि जनं वामाविप्रलम्भः व्याकुलयति। असंबद्धमधमालापादित्यर्थः (?)। भोश्चित्रं खल्वेतत्। अहमपीदानीमेव गृहीतार्थो किं पुनर्यथाचिन्तितानुभावी एषः। दर्शनमिति। तन्मयेन शकुन्तलामयेन। इयं पञ्चमी कामावस्था। तदुक्तं—"पञ्चमे तन्मयत्वं चे"ति ॥ २३ ॥

अम्मो विस्मये। पूर्वापरविरुद्ध एष विधेर्मार्गः। प्रजागरादिति—खिलीभूतो दुर्लभः ॥ २४ ॥

सर्वथा वयस्य मार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः शकुन्तलायाः प्रत्यक्षमेव सखीजनस्य ममेत्यर्थः। भट्टारक वर्त्तिकाकरण्डकां गृहीत्वा इतोऽहं प्रस्थितास्मि। करण्डका पुष्पाद्याहारपात्रविशेषः। सा च पिङ्गलिकाद्वितीयया देव्या वसुमत्या अहमेवार्यपुत्रस्योपनेष्यामीति भणित्वा सबलात्कारं गृहीता। सा करण्डका। पिङ्गलिका सखी। वसुमती देवीनाम। त्वं कथं विमुक्ता। यावल्लताविटपलग्नं देव्याः परिचारिका अञ्चलं मोचयति तावन्निर्वाहितो मयात्मा। आत्मानमपि किमिति न भणसि ? वयस्य यदि भवानन्तःपुरकूटवागुरातो मोक्ष्यते ततोऽयं मेघच्छन्दप्रासादे आह्वास्यते। मेघेति प्रासादनाम। इदं चार्थाच्चित्रफलकं तत्र गोपयामि यत्र पारावतं वर्जयित्वा न कोऽप्यन्यः प्रेक्षते। अम्मो विस्मये। अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनां रक्षति। स्थिरसौहृदस्तावदेषः। जयति जयति देवः। अन्तरे मध्ये। देवं दृष्ट्वा। पत्रहस्तं मां प्रेक्ष्य प्रतिनिवृत्ता। उपरोधं प्रत्यूहम्। देवामात्यो विज्ञापयति एकं मया पौरकार्यं प्रत्यवेक्षितं तद् देवः पत्रारोपितं प्रत्यक्षीकरोतु।

वारिपथोपजीवी नाविकवृत्तिः। राजार्थतां राजस्वताम्। आपन्नसत्त्वा गर्भवती। देव इदानीं साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जायेति श्रूयते। श्रेष्ठी वणिगादिकुलमुख्यः। रिक्थं धनम्। यद्देव आज्ञापयति। इयमस्मि। येनेति। प्रजा लोकाः। पापात् पापिष्ठात् ऋते विना ॥ २५ ॥

एवं इदं वा नाम घोषयितव्यम्। देव काले प्रवृष्टमिव शासनमभिवर्धितं जनेन देवस्य। प्रतिहतममङ्गलम्। असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा भविष्यति। संरोपित इति। आत्मनि संरोपिते अर्थात् तस्या गर्भे जाते इत्यर्थः। यदुक्तम् "आत्मा वै जायते पुत्र" इति। काले वर्षासु ॥ २६ ॥

अपरित्यक्तेदानीं ते भविष्यति। आर्ये इदं पत्रं प्रेषयता द्विगुणानुतापः कृतो भर्त्ता अमात्येन। तन्मेघच्छन्दावस्थितं संतापनिर्वापकमार्यमाधव्यं गृहीत्वागच्छ। श्रेष्ठं प्रशस्तं यत्त्वया भणितम्। पिण्डभाजः पितरः। अस्मात् दुष्मन्तात्। निवपनानि जलाञ्जल्यादीनि। मृतोद्देश्यकोदकदानं निवापः। प्रसिक्तं दत्तम्। धौतेति क्रियाविशेषणम्। विन्यासो नाम नाट्यालंकारः। तदुक्तं—"निर्वेदवाक्यवचनं विन्यासस्तु प्रकीर्तित" इति शङ्करः ॥ २७ ॥

सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति राजर्षिः। भट्टारक अलं संतापेन। ननु नववयःस्थ एव प्रभुः, अपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वेषामनृणो भविष्यति। न मे प्रतिवचनं प्रतिगृह्णाति भर्ता अथवानुरूपमेवौषधमातङ्कं निवर्त्तयति। आमूलेति। प्रजा अपत्यं तद्वन्ध्ये अत एवानार्ये पापिष्ठे। यथानार्येऽधमदेशे सरस्वतीनदीस्रोतः ॥ २८ ॥

समाश्वसितु समाश्वसितु भर्ता। किमिदानीमेवैनं निर्वृत्तं करिष्यामि। अथवा मया श्रुतं शकुन्तलां संभावयन्त्या देवजनन्या मुखात् स्वयज्ञभागसमुत्सुका देवा एव तथा करिष्यन्ति यथा भर्ता त्वामचिरेण धर्मपत्नीमभिनन्दिष्यति। तन्न युक्तं ममात्र विलम्बितुम्। यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि। उद्भ्रान्तकेनोद्ध्वंगतिभेदेन। भो अब्रह्मण्यमब्रह्मण्यम्। अवध्योऽहमित्यर्थः। "अब्रह्मण्यमवध्योक्ता"वित्यमरः। भट्टारक मा नाम स माधव्यतपस्वी पिङ्गलिकामिश्रिताभिर्देवीभिश्चित्रफलकहस्तः प्राप्तो

भविष्यति। ताभिः स हन्यत इति भावः। नाम संभावनायाम्। मा काकौ। मा नामेत्यव्ययसमुदायः संभावनार्थे इति केचित्। भो अब्रह्मण्यमब्रह्मण्यम्। "माणवको ह्यवभेदे लिङ्गपुरुषेऽपि च" इति मेदिनी। "अत्याहितं महाभीतिरि"त्यमरः। प्रागेवेति। स कम्पः संप्रति विशेषेणाविष्करोति प्रकटयति च तमेवेत्यर्थः। आविष्करोति चालयतीत्यन्यः ॥ २९ ॥

परित्रायतां रक्षतु। अत्र पर्याप्नोत्विति पाठोऽमरटीकाकृद्भिर्धृतः। पर्याप्नोतु परित्रायताम्। "स्यात् पर्याप्तिः परित्राणमि"त्यमरः। भिन्नार्थे व्यक्तार्थम्। तस्येति–प्रकाशेतरमूर्त्तिना गुप्तशरीरेण अदृश्येनेत्यर्थः। सत्त्वेन प्राणिना ॥३०॥

ममापीति गर्वाख्यो नाम नाट्यालंकारः। तदुक्तं "गर्वोऽवलेपजं वाक्यमि"ति। अहनीति। प्रभुत्वं ज्ञातृत्वम् ॥ ३१ ॥

अभिधावेति अभिधावनं गतिभेदः। अतिशीघ्रं गच्छेत्यर्थः। भोः कथं न भेष्यामि? एष मां कोऽपि पश्चान्मोटितशिरोधरमिक्षुमिव भग्नास्थि कर्तुमिच्छति। मोटितं पाटितम्। उच्छुमिति उदिक्षुवृश्चिकयोरिति प्राकृतसूत्रात्। भट्टारक इदं सशरं शरासनं हस्तावापश्च। एष चेष्टमानं करचरणादिप्रसारणशीलम् ॥ ३२ ॥

कौणपाः राक्षसाः। मृत्यावयं न भवसीति नाट्योक्तौ त्रिलोचनमिश्राः। सोपानमारोहणम्। परित्राहि। अहं भवन्तं प्रेक्षे। त्वं मां न प्रेक्षसे? तस्मान्मार्जारगृहीत इवेन्दुरुनिराशोऽस्मि जीविते। यः शरः। अपो जलानि। हंसस्वभावोऽयम् ॥ ३३ ॥

कृतेति। शरव्यं लक्ष्यम्। हरिणा इन्द्रेण। शरव्या इति शङ्करधृतः पाठः ॥ ३४ ॥

भो मनागस्मि एतेन पशुमारणेन मारितुं न पारितः। भवान् पुनरिमं स्वागतेनाभिनन्दति। मनागल्पेन। सख्युरिति—अपाकरोति व्यसनयति। प्रतिवस्तूपमा ॥ ३५ ॥

संभावना आदरः। अथ प्रश्ने। आयुष्मान् भवान्। विप्रकृतः पीडितः। संक्षोभाद् भयनिमित्तात् ॥ ३६ ॥

व्यापृतं व्यावृत्तम् ॥ ३७ ॥

यद् भवानाज्ञापयति। रथमिति परालंकारः (?)॥

॥ इति षष्ठाङ्कविवरणम् ॥

# ७

अनुपयुक्तमनुपकारम्। समर्थयेऽवगच्छामि। उभयत्र स्वविषये इन्द्रविषये च। तथोपकृत्य लघु मन्यते। अवदानमसाधारणं कर्म, तत्तुल्यं न गणयति ॥ १ ॥

विसर्जनं प्रस्थापनम्। अन्तर्गतेति······हरिचन्दनेन चन्दनभेदेन। वक्षः प्रमृज्य उपलिप्य। जयन्तमित्यन्तिकस्थेनान्वयः। पारिजातमाला पिनद्धा। हरिचन्दनाङ्कमिति क्वचित् ॥ २ ॥

नतेति पक्वता(?)सूचनार्थम्। पुरुषेति नृसिंहस्य ॥ ३ ॥

सिध्यन्तीति। कृतकृत्या भवन्ति। नियोज्याः सेवकाः। धुरि रथाग्रे ॥ ४ ॥

विच्छित्तिरङ्गरागः। "विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपी"ति विश्वः। वर्णैश्चन्दनादिभिः। कल्पलतावस्त्रेषु लिखन्ति गीतिक्षमं गानयोग्यं अर्थतत्त्वं अर्थजातं वा ॥ ५ ॥

त्रिस्रोतसं गङ्गाम्। गगनेति आकाशस्थानि। ज्योतींषि सूर्यादीनि। वर्त्तयति दधातीत्यर्थः। चक्रेति–चक्रकोशेन ज्योतिषा विभक्ता रश्मयो येन। त्वत्स्यन्दनप्रान्तासक्तकिरणं यथा स्यादिति शङ्करः। प्रवहनाम्नो वायोर्द्वितीयेन हरेः विक्रमेण विशिष्टपादक्षेपेण पूतः। विक्रमः पाद इत्यन्यः ॥ ६ ॥

करणमिन्द्रियम्। अयमिति। अगाः पर्वताः। हरिभिरिन्द्राश्वैः। अचिरभासां विद्युताम्। जलगर्भमुदरं येषाम् ॥ ७ ॥

शैलशिखरादवरोहतीव। पर्णेति पर्णसमूहलीनतामैक्यम्। कृशभागे नष्टस्य सलिलस्य व्यक्तथा तनुभावनष्टसलिला। तनुभावः कृशता। व्यक्तं स्फुटमिति शङ्करः ॥ ८ ॥

उदग्रमत्यर्थम्। सानुमान् पर्वतः। मरीचेर्मरीचिनाम्नो यो जातः कश्यप इत्यर्थः ॥ ९ ॥

रथाङ्गं चक्रम् । नेमिः प्रान्तः ॥ १० ॥

सर्पकञ्चुक एव यज्ञोपवीतान्तरमस्य यज्ञोपवीती । यज्ञस्रगेव यज्ञोपवीतं तदन्तरं यस्येति शङ्करः । "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः । नीडः कुलायः । स्थाणुः शाखादिशून्यवृक्षः । अभ्यर्कबिम्बं सूर्य-मण्डलस्याभिमुखम् ॥ ११ ॥

कथमिदानीमिति अत्र भविष्यतीति शेषः । तदा रथानवेक्षणादित्यर्थः । उभयं सुखं दुःखं चेत्यन्यः । सत्कल्पवृक्षे विद्यमानकल्पतरौ ॥ १२ ॥

उत्सर्पिणी यथोत्तरवृद्धेति सुभेदः(?) । दाक्षायण्याऽदित्या । परिवर्त्ततेऽन्ये-ति शेषः । श्रेयो यत्तत्पूर्वमवज्ञातमिदानीं दुःखमेवेति भावः । यद्वा पूर्वावज्ञात-कल्याणं दुःखं यथा स्यात्तथा परिवर्त्तते दुःखेनेति शङ्करः ॥ १३ ॥

"यस्मिन् तस्मिन् चपलतां......यत्रतत्रैवात्मनः प्रकृतिं स्वभावं दर्शयति । अर्धक्लिष्टो विपर्यस्तकेसरः ।......विलम्बिनं लम्बमानम् ॥ १४ ॥

जृम्भस्व रे सिंहशावक जृम्भस्व । मुखव्यादानं विधेहि । दन्तांस्ते गणयिष्यामि । अविनीत किमिति नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकुरुषे सोदरनिर्विशेषेषु एषु अस्मिन् वा दृश्यते(?)संरम्भः । स्थाने खलु मुनिजनेन सर्वदमन इति कृतनामधेयोऽसि । एषा त्वां केसरिणी लङ्घयति, भविष्यदर्थे लट्, यद्यस्याः पुत्रकं न मुञ्चसि । अम्मो विस्मये । बलवन् खलु भीतोऽस्मि । बलिकमव्ययमत्यर्थवाचीति शङ्करः । बीजं कारणम् । शङ्करस्तु अयं बालो नोऽस्माकं तेजसः क्षत्रियरूपस्याहितमर्पितं बीजं रेतः प्रतिभातीत्यर्थः । एधः-क्षये काष्ठक्षये । एधः काष्ठे इति शङ्करः ॥ १५ ॥

मुञ्चेमं बालमृगेन्द्रम् । अन्यत्ते क्रीडनकं दास्यामि......देहि । चक्रवर्त्ति-लक्षणं अङ्कुशादिरेखारूपम् । तदुक्तम्—

> "अङ्कुशं कुण्डलं चक्रं यस्य पाणितले भवेत् ।
> चक्रवर्ती भवेन्नित्यं सामुद्रिकवचो यथा"इति ॥

प्रलोभ्येति—प्रणयः प्रार्थनम् । संहताङ्गुलिः संश्लिष्टाङ्गुलिकरवत्तापि महापुरुषत्वसूचिका । जालपादशुद्धाविति नरनारायणविशेषणमुक्तम् । जालेति कररेखावर्त्तभेदः इत्यन्यः । अलक्ष्यमदृश्यं पत्रमभ्यन्तरम् । उषसा

सन्ध्यया । "उषः प्रत्यूषसि क्लीवमुषा प्रद्युम्नयोषिति" ॥ इति कोषः ॥ १६ ॥

सुजात मुञ्चैनम् । न एष शक्यो वाङ्मात्रेण शमयितुम् । तद् गच्छ । मदीये उटजे शालङ्कायनस्य ऋषिकुमारस्य वर्णकचित्रितो मृत्तिकामयूरस्तिष्ठति। तमस्मै उपहर । तावदनेनैव क्रीडिष्यामि । मुञ्चैनम् । दुर्लङ्घं ललितं ईप्सितं यस्य । आलक्ष्येति । अङ्के क्रोडे य आश्रयोऽवस्थानं तत्र प्रणयिनः प्रार्थकाः । स्पृहा नाम नाट्यालंकारोऽयमिति शङ्करः ॥ १७ ॥

भवतु न मां गणयसि । कोऽत्र ऋषिकुमाराणां मध्ये तिष्ठतीति शेषः । भद्रमुख एहि तावत् । मोचय एतेन दुर्मोक्षहस्तग्रहेण बाध्यमानं बालमृगेन्द्रम् । एवं वृत्तिर्व्यवहारः । संयमी व्रती । जन्मदः पिता । पुण्याश्रमेण सुखं यस्य पुण्याश्रमं सुखं यस्मात् इति वा । दूष्यते मलिनीक्रियते ॥ १८ ॥

भद्रमुख न खल्वेष ऋषिकुमारः । अनेनेति—कृतिनः भाग्यवतः ॥ १९ ॥

आश्चर्यमाश्चर्यम् । अस्य बालकस्यासंबद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति । विस्मितास्मि । अपि च बालशीलोऽपि भूत्वा अपरिचितस्य न ते प्रतिलोमः संवृत्तः । अपरिचितस्य ते वचनेन प्रकृतिस्थोऽयं संवृत्त इति पाठान्तरे । उल्लापयन् चालयन । व्यपदिश्यते परिचीयते अनेनेति व्यपदेशो वंशादिः । पौरव इति । भवनेष्विति—उशन्ति इच्छन्ति कुर्वन्तीत्यर्थः । नियतमद्वितीयं मुनिव्रतं येषु ॥ २० ॥

यथा भद्रमुखो भणति । अप्सरःसंबन्धेन पुनरस्य बालस्य जननी देवगुरोस्तपोवने प्रसूता । हन्त हर्षे । कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति । परिभाषणं निर्वहणाङ्गमिदम् । तदुक्तम्—"वदन्ति परिभाषणं परिवादकृतं वाक्यमि"ति । सर्वदमन पश्य शकुन्त-लावण्यम् । अथ च शकुन्तलावर्णं रूपम् । कुत्र सा मे आर्या माता ? अज्जुकाशब्दो मातरि देशीय इति शङ्करः । नामसादृश्येन उपच्छन्दितः प्रलोभितो मातृवत्सलः । एतस्य मयूरस्य रमणीयत्वं प्रेक्षस्वेति भणितोऽसि । अन्तिके ! रोचते मे चटुमटुलक एष मयूरः । अन्तिका भगिनी ज्येष्ठा । अत्रात्तिकेत्यपि साध्वित्यभिधानिकाः । अन्तिका धात्रीति शङ्करः । अम्मो कष्टे । रक्षागेण्ठकोऽस्य मणिबन्धे न दृश्यते । गेण्ठको वीद(?)इति ख्यातो जातुषभेदः(?) । मणिबन्धे करमूले ।

मा खलु मा खलु संप्रक्ष्यसीति शेषः। कथं गृहीतमेवानेन ? शृणोतु महाभागः। महाप्रभावा खल्वेषापराजिता नाम सुरमहौषधिः एतस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं वर्जयित्वा-परो भूमिपतितां न गृह्णाति। सा सर्पो भूत्वा तं दशति। अनेकशः। सहर्षमिति प्रहर्षनामा नाट्यालंकारः। तदुक्तम् "प्रहर्षं प्रमदाद् वाक्य" मिति। सुव्रते, एहि इमं वृत्तान्तं नियमव्याकुलायै शकुन्तलायै निवेदयावः। मुञ्च माम्। आर्या-सकाशं गमिष्यामि। दुष्मन्तः खलु मम तातो न खलु त्वम्। विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आसङ्क आत्मनो भागधेयेषु। आसङ्क-शब्द प्राकृते आश्वासार्थः। अथवा यथा मिश्रकेश्या मे आख्यातं तथा संभाव्यत इदम्। वसने। धूसरे मलिने। वेणिः केशविन्यासः। तथा च भरतः—

"अमलावधारणमलकानां च(?) कल्पनम्।
अनुलेपनसंस्कारं न कुर्यात् पथिकाङ्गनाः।
पाण्डुच्छाया कृशतनुर्वेणीयुतशिरोरुहा।
लम्बालका दीनवेशा विभूषणविवर्जिता।" ॥ २१ ॥

न खल्वार्यपुत्रोऽयम्। तत् क खल्वेषः कृतरक्षामङ्गलकं दारकं मे गात्र-सङ्गेन दूषयति? आर्ये एष कोऽपि पुत्रक इति मामालपति हृदय समाश्वसिहि। प्रहृत्य निवृत्तमात्सर्येण अनुकम्पितास्मि दैवेन। आर्यपुत्र एवैषः। प्रमुखे संमुखे। प्रतिवस्तूपमा ॥ २२ ॥

बाष्पेण। यतो बाष्पात्ते तव मुखं दृष्टम्। कीदृशं, असंस्कारादपष्किारात् लोलालकं चञ्चलचूर्णकुन्तलम् ॥ २३ ॥

अज्जुके मातः क एषः? वत्स भागधेयानि मे मम पृच्छ। भाग्यमेव भागधेयम्। राजा प्रणिपत्य। प्रणिपातो हि नागराणां कोऽपि नागरीणां मनोहरणोपाय इति। न तत्र दूषणमिति भरतः—

सपत्नीनां तु सम्मानं दृष्ट्वा या तापिता भवेत्।
रहस्तूदारवैजृम्भैरुपचारैः प्रसाध्यते ॥
काकुभिः प्रणिपातैश्च भाम्यनिन्दादिभिस्तथा।
एवं कृते च नारीणां पुरुषोऽतिप्रियो भवेत् ॥

अनुनयति । सुतनु हृदयादिति—हे सुतनु वराङ्गि ते तव हृदयात् प्रत्याख्यानव्यलीकं निराकरणरूपाप्रियं अपैतु त्यजतु । "प्रत्याख्यानं निराकृति"-रिति कोषः । किमप्यनर्वचनीयस्वरूपं यथा स्यादेवं तदा त्वन्निराकरणकाले मे मम मनसश्चित्तस्य संमोहोऽचैतन्यं बलवान् गुरुतरोऽभूत् । स्मारितेऽपि मया न चेष्टितमित्यभिप्रायेण सम्यक् प्रकारेणेति । कथमेवमभूदित्याशङ्क्योपपादयति—हि यतश्चपलमनसामस्थिरचित्तानां शुभेषु सत्कर्मसु वृत्तयो व्यवहाराः एवंरूपा भवन्ति परीहारनामायमलंकारः । यदाह—"परीहारः परिज्ञेयः कृतानुचितमार्जनम् ।" निदर्शयति–शिरसि दत्तामपि स्रजं पुष्पमालामहिशङ्कया सर्पभ्रमेणान्धो दूरीकरोति । "व्यलीकं विप्रियाकार्ये वैलक्ष्यवति पीडन"इति शाश्वतः ॥२४॥

शकुन्तला । उत्तिष्ठत्वार्यपुत्रः । नूनं मम सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणतमासीत् येन सानुकम्पोऽप्यार्यपुत्रो मयि तथा संवृत्त आसीत् । नूनमुत्प्रेक्षायां निश्चये वा । पुराकृतं जन्मान्तरकृतं कर्म तेषु दिवसेषु परिणतं सबलं येन पूर्वजन्मकर्मणा सानुकम्पः सकृपः तथा निर्दयः । अथ प्रश्ने । कथमार्यपुत्रेण स्मृतोऽयं दुःखभागी जनः ? कथं केन प्रकारेणायं मद्रूपः ।

राजा—उद्धृतशल्यविषादः बहिष्कृतसुस्थः । शल्यप्रायं विस्मरणम् । मोहादिति । हे सुतनु वराङ्गि ते तव यो बाष्पबिन्दुः पूर्वं त्यागसमये मया मोहान्मौग्ध्यादुपेक्षितः । कीदृशं बाष्पं, आसमन्ताद् भावेन कुटिलं अधरं परिबाधमानः अधरं पीडयन् । अद्यास्मिन् काले तं बाष्पमश्रु प्रमृज्य प्रोच्छ्य विगतानुशयो नष्टपश्चात्तापो भवामि । कीदृशं बाष्पमासमन्ताद् भावेन कुटिलानां पक्ष्मणां विलासो यस्मात्तादृशम् ॥ २५ ॥

उन्नमयितुमुत्तुलयितुम् । शकुन्तला—आर्यपुत्र ! तदेतदङ्गुरीयकम् । तद्-विरहादेवंविधविरहवेदनामनुभवामीति भावः । अथ किम् । तदेवेत्यर्थः । अङ्गुरीयकोपलम्भनात् । उपलम्भो लाभः । शकुन्तला—समचीकृतं खल्वनेनार्थान्मया यदार्यपुत्रस्य प्रत्ययकरणे दुर्लभमासीत् । प्रत्ययो निश्चयः । इदमङ्गुरीयकं प्रतिपद्यतां गृह्यताम् यथा लता ऋतुसंगमसूचकं कुसुमं गृह्णाति । विस्मरणमाशङ्कमानाह—न सेविष्यामि न धारयिष्यामि इत्यर्थः ।

आर्यपुत्र एवैतद् धारयतु। मातलिं प्रति। सुहृत्संपादितत्वात् मित्रकारितत्वात्। सुहृदत्र मातलिः। फलमत्र सापत्यशकुन्तलालाभरूपम्। न खल्विति। निवेदितः कथितः। आखण्डलाय इन्द्राय। अर्थः शकुन्तलाविरहरूपः। परोक्षमज्ञातम्। अवलम्ब्यतां ध्रियताम्। पुरस्कृत्य अग्रे कृत्वा। भगवन्तं मारीचम्। शकुन्तला—लज्जे खल्वार्यपुत्रेण सह गुरुजनसमीपं गन्तुम्। अदितिर्मरीचिपत्नी। तस्या एव दाक्षायणी नाम। पुत्रस्येति—दाक्षायणि हे! ते तव पुत्रस्येन्द्रस्य रणशिरसि अयं राजा अग्रयायी पुरोगन्ता प्रथमप्रहर्तेति यावत्। कीदृशः। दुष्मन्त इत्यभिहितो भाषितः। भुवनस्य गोप्ता रक्षकः। मघोन इन्द्रस्य तत्कुलिशं वज्रमाभरणमलंकरणम्। कोटिमत्साग्रं तीक्ष्णमिति यावत्। कुलिशं कीदृशं, यस्य दुष्मन्तस्य चापेन धनुषा विनिवर्तितं निष्पादितं कर्मजातं रणादिक्रियाकलापो यस्य तादृशं कुलिशप्रयोजनमिति। तच्चापेनैव निष्पन्नत्वात् तदस्याभरणमभूदित्यर्थः। "कुलिशं भिदुरं पविरि"त्यमरः ॥२६॥

संभावनीया खल्वस्याकृतिः। एतौ अदितिमारीचौ। दिवौकसां देवानाम्। आयुष्मन्तं भवन्तम्। उपसर्प उपगच्छ। प्राहुरिति—तदिदं द्वन्द्वं मिथुनं स्त्रीपुंसयोर्युगलमिति शेषः। कीदृशं, दक्षमरीचिसंभवम्। दक्षस्यापत्यं दाक्षायणी मरीचेरपत्यं मारीचः। दक्षमरीचिप्रसूतम्। स्रष्टुर्ब्रह्मणः एकान्तरं एकान्तरितम्। तत् कतरत्, मुनयः यत् द्वन्द्वं द्वादशधा स्थितस्य द्वादशात्मनः सूर्यस्य कारणमाहुः। अत एव सूर्यस्यादित्यो नाम। यदेव द्वन्द्वं भुवनत्रयस्य स्वर्गमर्त्यपातालस्य भर्तारं यज्ञभागेश्वरमिन्द्रं सुषुवे। यस्मिन् द्वन्द्वे आत्मभुवो ब्रह्मणः परः पुरुषो नारायणो भवायावतारायास्पदमवस्थितिं चक्रे ॥२७॥

अथ किं स्वीकारे। सत्यमेवैतत् सर्वमेवेति भावः। उभाभ्यामदितिमारीचाभ्यामिति चतुर्थीद्विवचनम्। वासवनियोज्य इन्द्राज्ञाकारी। अप्रतिहतरथो भव। शकुन्तला—भगवन्तौ जातसहिता पादवन्दनं करोमि। भगवन्ताविति संबोधने। जातः पुत्रः। आखण्डलेति—वत्से हे तव आखण्डल इन्द्रस्तत्समो भर्ता स्वामी भवत्विति शेषः। सुतः पुत्रस्ते जयन्तः इन्द्रपुत्रस्तत्प्रतिमस्तत्तुल्यो भवत्वित्यर्थः। पौलोमी इन्द्राणी तद्वन्मङ्गलं यस्यास्तादृशी भव। अन्या आशीस्ते तव न योग्या। अन्यत् सर्वं तव स्वत एवास्तीति भावः। आशीर्नामायमलंकारः। यदाह—

वात्सल्याद् यत्र मान्येन कनिष्ठस्याभिधीयते ।
इष्टावधारकं वाक्यमाशीः सा परिकीर्त्तिता ॥२८॥

जाते पुत्रि भर्त्तुर्बहुमता आदृता भव । अयं च दीर्घायुरुभयकुलनन्दनस्ते पुत्रो भवतु । तदुपविशत । दिष्ट्येति—दिष्ट्या भाग्येनेयं शकुन्तला साध्वी सती, इदं सर्वदमननामापत्यं सदुभयकुलगुणसंपन्नमित्यर्थः । भवानिन्द्रपुरस्कृतः । तथा च श्रद्धा शकुन्तला, वित्तमपत्यं, विधिर्भवान् । एतत् त्रितयं समागतं सम्यक् संगतम् । एतन् त्रितयं च संगतमवश्यमभीष्टसाधकं भवति । तथैतन् त्रितयमपीत्यर्थः ॥२९॥

प्रागिति—शकुन्तलाप्रापकं भवद्दर्शनं भविष्यतीत्येव ममाभिप्रेतमासीत् । भवत्प्रभावात् दर्शनं पूर्वमेव निर्व्यूढमिति भावः । पश्चाद्दर्शनमिति । तथा च नैमित्तिकानन्तरं निमित्तस्योत्पत्तिरित्यनुग्रहस्यापूर्वत्वमिति भावः । एतदेवोपपादयति उदेतीति—कुसुमोदये सति फलमुत्पद्यते, मेघोपगमे सति जलम् । निमित्तनैमित्तिकयोरयं विधिः परिपाटी यन्निमित्ते सति नैमित्तिकोत्पादः । तु पुनस्तव प्रसादस्य प्रथमत एव सम्पदोऽभीष्टसिद्धिः ॥३०॥

इमां शकुन्तलाम् । वो युष्माकम् । विधिना प्रकारेण उपयम्य विवाह्य स्मृतिदौर्बल्यात् प्रत्यभिज्ञानलाघवात् प्रत्यादिशन्निराकुर्वन् अपराद्धोऽस्मि । एनां शकुन्तलामूढपूर्वां पूर्वपरिणीताम् । यथा गज इति—मे मम तथाविधस्तदुपमः मनसश्चित्तस्य विकारः स्वरूपान्यथाभावः स आसीत् । साधुपद्धतीर्दृष्ट्वा प्रतीतिर्निश्चयो भवेत् यदनेन पथा हस्ती गतः । तथेयमप्यायतो न प्रत्यभिज्ञाता पश्चादभिज्ञानदर्शनेन परिचितेति भावः ॥३१॥

संमोहो मिथ्याज्ञानम् । अप्सरस्तीर्थात् शचीतीर्थात् । ध्यानात् समाधेः । तपस्विनी अनुकम्प्या । सहधर्मचारिणी पतिव्रता । तेन त्वया प्रत्यादिष्टा निराकृता । अवसानमवधिः । सोच्छ्वासं सोज्जीवनमिति क्रियाविशेषणम् । वचनीयात् साध्वीनिराकरणरूपापवादान्मुक्तः परिच्छिन्नः । दिष्ट्या अकामप्रत्यादेशी आर्यपुत्रः नानिमित्तत्यागीत्यर्थः । न पुनः शप्तमात्मानं स्मरामि । अथवा वृत्तः भवेदयं शून्यहृदयायाः शापः यतः सखीभिरत्यादरेण संदिष्टं भर्त्रेऽङ्गुरीयकं दर्शयिष्यसीति । विदितार्था ज्ञातवृत्तान्ता । सहधर्मचारिणं

पतिम्। मन्युः क्रोधः। शापादिति—स्मृतिः स्मरणं तल्लोपेन तद्राहित्येन रूक्षे सकालुष्ये। अपेततमसि निष्पापे भर्तरि। शापात् प्रतिहतापि खण्डितापि। प्रभुता तथैव पूर्ववदेव भविष्यतीति शेषः। मलोपहतप्रसादे मलापगतप्रसन्नत्वे दर्पणतले आदर्शतले छाया प्रतिबिम्बो न मूर्छति न स्फुरति। तु पुनः स्वच्छे निर्मले दर्पणे सैव छाया सुलभावकाशा प्राप्तावस्थितिरित्यर्थः। तथा च मलप्रायः स्मृतिलोपः, दर्पणप्रायो राजा, छायाप्राया प्रभुतेति। "मूर्च्छा मोह-समुच्छ्रययो"रिति कोषः॥ ३२॥

कच्चित् कामप्रवेदने। विधिवद् विधिनोक्तप्रकारेणानुष्ठितजातकर्मक्रियः कृतनिष्क्रमणान्नप्राशनादिशिशुकर्मक्रियाकलापः। शाकुन्तलेयः शकुन्तलाया अपत्यम्। स्त्रीभ्यो ढक्। अत्र बालके। यद्वा अत्र त्वत्कर्तृकतज्जातकर्मकरणे मे मम वंशप्रतिष्ठा कुलख्यातिः। बालकस्य भविष्यद्रूपमाह—रथेनेति। अयं बालः वसुधां पृथिवीं पुरा अवति धारयिष्यतीत्यर्थः। यावत्पुरातिपातयोर्लं-डिति भविष्यदर्थे लट्। अयं कीदृशः, उत्तीर्णजलधिः। केन रथेन, स्यन्दनेन। कीदृशेन, अनुद्घातस्मिमितगतिना अप्रतिबन्धार्थदुर्गमेन। वसुधां कीदृशीं, सप्तद्वीपां। तथा च द्वीपाख्या—"जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्कराः"। अप्रतिरथोऽतुल्यरथः महारथ इत्यर्थः। इह अयं बालकः सत्त्वानां प्राणिनां सिंहादीनां प्रसभेन हठेन दमनात् सर्वदमनो वृत्तोऽस्तीति शेषः। पुनर्लोकस्य भरणात् भरत इत्याख्यां यास्यति। सम्प्रति सर्वदमनः भरतनामा भविष्यतीत्यर्थः॥ ३३॥

अस्मिन् बालके सर्वं सप्तद्वीपवत्पृथ्वीधारणक्षमत्वमित्यर्थः। अदितिः—दुहितुः पुत्र्याः अनया मनोरथसम्पत्त्या कण्वोऽपि ज्ञातविस्तरः क्रियताम्। शकुन्तलया सह स्वामिमिलनवार्त्तां कण्वायापि कथयितुं प्रहेतुमर्हतीति भावः। मम मनोगतं खलु कथितं भगवत्या······मनोगतं हृद्गतम्। तत्रभवतः गुरोः कण्वस्य। कः कोऽत्रेति शिष्याणां मध्ये कोऽत्र तिष्ठतीत्यर्थः। गालवेति शिष्यनाम। विहायसा आकाशेन। तत्रभवते मान्याय। तच्छापनिवृत्तौ दुर्वासःशापापगमे शकुन्तलानुगृहीतास्ति। सापत्यदारः पुत्रपत्नीयुक्तः रथमास्थायारुह्य स्वराजधानीं स्वनगरं प्रतिष्ठस्व गच्छ। तव भवत्विति। बिडौजा

इन्द्रस्तव प्रजासु लोकेषु प्राज्यवृष्टिः प्रचुरवर्षणो भवतु । विहितयज्ञः कृतमखः त्वमपि अलमत्यर्थेन वज्रिणमिन्द्रं भावय प्रीणय । एवमनेन प्रकारेणान्योन्य-कृत्यैः परस्परकर्त्तव्यैः भवानिन्द्रश्चोभौ नियतं सर्वदोभयलोकानुग्रहश्लाघनीयौ मर्त्यस्वर्गोभयभुवनसमादृतौ । कृत्यैः कीदृशैः, गुरुतरपरिवृत्तैः अतिशयित-विनिमयैः ॥३४॥

क्रतुभिरिति । सुरान् क्रतुभिः त्वं प्रीणय संतोषय । अलमत्यर्थेन । सुरान् कीदृशान्, उचितभागान् नैयायिकयज्ञाङ्गभागिन इत्यर्थः । त्वत्प्रजार्थं जग-ल्लोकप्रयोजनं सुरपतिरिन्द्रोऽपि वृष्टिं वर्षणं विधत्तां करोतु । इत्यनेन प्रकारेण समं तुल्यं उपकारेण व्यञ्जितः प्रकाशितः श्रियां सम्पदां महिमा गरिमा ययोस्तयोर्भवदिन्द्रयोरयं बहुतिथः प्रचुरवासरश्च कालः समयः सौहृदेन प्रेम्णा व्रजतु ॥३५॥

यथाशक्ति यथाबलम् । श्रेयसि प्रशस्तकृत्ये यतिष्ये व्यवस्यामि । भूयः पुनरपि । तदेतदस्तु । एतदग्रिमपद्ये वक्ष्यमाणम् । प्रवर्त्ततामिति—पार्थिवः सर्वदमनः प्रकृतिहिताय अमात्यापेक्षिताय वर्त्ततां व्रजतु । हितायेति तादर्थ्ये चतुर्थी । सरस्वती श्रुतिमहतां वेदविदां महीयसां विदुषां हिताय वर्त्तताम् । क्वचित् महीयसामित्यत्र महीयतामिति पाठः । तत्र श्रुतिमहतां सरस्वती महीयतां पूजिता भवतु । नीललोहितः शिवः ममापि पुनर्भवं क्षपयतु यथा पुनर्जन्म न भवति तथा करोत्वित्यर्थः । जन्मनो नानाविधदुःखसंवलितत्वेन हेयत्वात् । ननु नीललोहितपदेन शिवसूर्याग्रयस्त्रयो गृह्यन्ते तर्हि कथं शिवो ज्ञातव्य इत्याशङ्क्याह, आत्मना परिगतशक्तिः आत्मना स्वभावेन परिगताश्रिता शक्तिः सकलभुवनशासनानुग्रहकरणक्षमं सामर्थ्यं च यस्य तादृशः नित्यशक्ति-रित्यर्थः । यद्वा परिगतशक्तिः सगौरीकः, आगमे शक्तिपदेन गौर्यभिधानात् ।

कलेवरे प्रयत्ने च स्वभावे परमात्मनि ।
स्वान्ते वृत्तौ मनीषायामात्मानं कवयो विदुः ॥

इति शाश्वतः ॥ ३६ ॥

एवमस्तु सकलं भवदाकाङ्क्षितं भवत्वित्यर्थः ॥

× × × ×

सत्कोषार्जनशालिनी बहुविधालंकारभव्या स्मृति-
प्राप्तोत्कर्षगुणा सदागमवती ज्योतिष्मती सत्कथा ।
नाट्ये चारुणि शङ्करेण रचिता टीका कृपाया हरे-
राचन्द्रार्कमियं प्रियाय विदुषां चेतोऽङ्गणे खेलतु ॥ १ ॥

ये केचिद् गुणिनः परश्रमविदस्तानादरादञ्जलिं
बद्ध्वा दुर्जनगर्जनाशनिहतस्त्रस्तोऽहमभ्यर्थये ।
यत्किञ्चिद् भ्रमतो धियां लघुतया वालेखि मन्दं मया
तत्सर्वं परिशोधयन्तु कृपया सन्तो भवन्तो मम ॥ २ ॥

उद्यत्कुतर्कतिमिरावृतपद्धजात-
संचारजातबहुधाहितचित्तखेदः ।
तत्तद्वचोऽमृतनिधे रसचन्द्रिकायाः
पानं करोतु रभसेन शिशुश्चकोरः ॥ ३ ॥

श्रीवासुदेवतनयस्य शिवाङ्घ्रिपद्म-
सेवाचणस्य तनयस्य च भानुमत्याः ।
श्रीशङ्करस्य कृतिनो रसचन्द्रिकायां
कण्वात्मजाभिमिलने खलु सप्तमोऽङ्कः ॥ ४ ॥

इति महामहोपाध्यायश्रीकालिदासविरचिताभिज्ञाननाटकस्य टीका रस-चन्द्रिका समाप्ता ॥



॥ शुभमस्तु । श्रीरस्तु ॥

॥ ॐ गणेशाय नमः ॥

अथ

महोपाध्यायमिश्रनरहरिकृता

# अभिज्ञानशकुन्तलटिप्पणी

······पा। सर्ववीजप्रकृतिरिति यां जना आहुः वदन्ति स्म इति पृथिवी-रूपा। यया प्राणिनः प्राणवन्त इति वायुरूपा। "वारिवह्निवसुधासमीरणव्योम-सोमरवि······"इति श्रवणात्। ताभिरष्टाभिः तनुभिः मूर्तिभिः प्रसन्नः सप्रसाद ईशो महादेवो वो युष्मान अवतु रक्षतु। प्रत्यक्षाभिरिति न······तानुसारेण। "स्त्रियां मूर्तिस्तनुस्तनूः"इत्यमरः। होत्रीति हवनक्रियोत्कीर्तनेन मुनिसूचनम्। अथ च ईशो दुष्मन्तो राजा·········भुताभिरष्टाभिस्तनुभिर्मूर्तिभिः नायिका-रूपाभिः सप्रसादः। स्रष्टुर्या आद्या सृष्टिः सौन्दर्यातिशयेन·········त्येका। विधानेन दत्तं हविर्वहति यज्ञादाविति द्वितीया। यद्वा अग्नितुल्या·········। होत्रीति यज्ञादौ······त्यपरा। ये कालं विधत्त इति दिवसे रात्रौ च नियमतः परिचर्यादिना तदुभयात्मकसुखजनककालमिति द्वे। ·········गुणा व्यापिका सकलकार्यनिर्वाहक्षमा प्रगल्भा वेत्यपरा। सर्वं यद् बीजं सुखहेतुः तत्-संघटिका। यद्वा सर्वेषां सुख······त्यादीनां बीजं कारणम्। तस्य राज्ञो भरतो हि चक्रवर्ती पुत्र आसीत्। तस्य प्रकृतिः कारणं शकुन्तलैवापरा। यया प्राणवन्त इति······मन्मथशरानलतापोपशमनेन भृत्येषु भरणादिनेत्यपरा। यद्वा तत्तदष्टरूपस्वरूपा शकुन्तलैवेति ध्वनिः।

चन्द्राङ्किता चाशीःप्रमुखा [नान्दी]······तदुक्तं नाट्यलोचने—

> आशीर्यत्र नमस्क्रिया च शशिनः संकीर्तनं वस्तुनो
> निर्देशो गुरुसंस्तुतिर्मधुलिहां मोदाय पुष्पाञ्जलिः।
> भव्यैर्द्वादशभिः पदैरथ·········ष्टभिर्निर्मिता
> सद्वृत्तेन सुसंधिना च कथिता नान्दीति सर्वागमे॥

अन्यदपि—

देवद्विजनृपादीनामाशीर्वचनपूर्विका ।
नन्दन्त्यस्यां सुरा यस्मात्तन्नान्दीति प्रकीर्तिता ॥
·········मपदा क्वापि क्वापि चन्द्रानुकीर्तिता ।
कार्या स्वस्त्ययनार्थाय रङ्गविघ्नोपशान्तये ॥

नान्द्यामाशिषोऽपि मङ्गलत्वम् । यदुक्तं तत्रैव—

गङ्गानागपति·········जयानन्दसुराशिषः ।
कपालविद्युतौ चेति नान्दी मङ्गललक्षणम् ॥

सेयं पद्यस्य चतुःपदत्वेन समपदा ॥ १ ॥

नान्द्यन्ते सूत्रधार इति । ननु यदि सूत्रधारप्रयोज्या नान्दी तन्न किमुच्यते नान्द्यन्ते सूत्रधार इति । उच्यते । नायमस्यार्थो यन्नान्द्यन्ते सूत्रधारः प्रविशति किं तु नान्दीपर्यन्ते प्रत्याहारमार्याश्रयणजर्जर··· ···दिग्बन्धनादिके स रङ्गे देवस्तुतिस्वरूपे माङ्गलिके नाट्यप्रयोगाद् बहिर्भूते प्रयोक्तृपुरुषः सूत्रं प्रयोगानुष्ठानं धारयति । तद्धि नाटकं प्रत्यङ्गम् । तथा च भरतः—

······ दनुष्ठानं तत् सूत्रं स्यात् सबीजकम् ।
रङ्गदैवतपूजा च सूत्रधार उदाहृतः ॥

अथवा पूर्वरङ्गप्रयोजकमात्रः सूत्रधारः । यस्तु नान्द्यन्ते प्रयोक्ता संस्थापकनामा बहिष्पात्रत्वेन सूत्रधारतुल्यक्रियत्वादुपचारेण सूत्रधार इत्युच्यते । यदाह—

प्रयुज्य रङ्गान्निःक्रामेत् सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत् पश्चात् सूत्रधारगुणाकृतिः ॥

······अतिविस्तरेण जर्जरवंशस्थित्यादिना अलं निष्फलम् । अलंशब्दस्य तृतीयान्तपदसमन्वयेनैव निष्फलवाचकत्वम् । यदाहुर्निष्फलपर्याये पाञ्चजन्ये हरिमिश्राः—"भवति तृतीयान्तेन समन्वितमलमिति कृतमित्यव्ययरूपम्" इति । नेपथ्यं यवनिकान्तरितो देशः । यदाह भरताचार्यः—"रङ्गाद् बहिर्नेपथ्य"मिति । तस्य विधानं विधिरितिकर्तव्यता । यद्वा नेपथ्यं नृत्योचितदेशोऽलंकरणपत्रावल्यादि तत्करणम् । "आकल्पवेशौ नेपथ्यम्"इत्यमरः । अवसितं निर्व्यूढम् ।

नटीवाक्ये आर्य...... महम्। आज्ञापयत्वार्यः। को नियोगोऽनुष्ठीयतामिति। रसभावविशेषदीक्षागुरोरिति। रसश्च भावश्च रसभावौ तयोर्विशेषो भेद उत्कर्षो वा तस्य दीक्षा उपदेशः तस्य गुरोरुपदेशकस्य। यद्वा रसस्य यो भावरूपो विशेषो भेदस्तदुपदेशगुरोः। रसभावौ यथा—

शृङ्गारहास्यकरुणारौद्रवीरभयानकाः।
वीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः॥
ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥

एषां चोत्पत्तिहेतवश्चत्वार एव रसाः। यदाह—

शृङ्गारानुगतो हास्यः करुणो रौद्रकर्मजः।
वीरादद्भुत उत्पन्नो बीभत्साच्च भयानकः॥

निर्वेदस्वभावप्रभवः शान्तो नाम रस उत्पद्यते। एषां चोत्पत्तिर्विभावानुभावव्यभिचारिभावसंयोगात्। उपादानकारणं विभावः, यथा शृङ्गारस्य स्रक्चन्दनादयः। भावबोधकस्त्वनुभावः, यथा शृङ्गारस्यैव कटाक्षाद्यभिनयः। यदाह—

भावानामनुभावानां विभावानां च संश्रयात्।
जायते यः पदार्थस्तु तमाहुर्मुनयो रसम्॥

निर्वेदादयस्तु त्रयस्त्रिंशत् व्यभिचारिभावाः। रसश्च स्थायिभावप्रभवः। स्थायिभावा यथा—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥
रत्यादय इमे भावाः काव्याभिप्रायसूचकाः।
पञ्चाशत् स्थायि-संचारि-सात्त्विकास्तान्निबोधत॥
शृङ्गारादिरसेष्वेव भावा रत्यादयः स्मृताः।
प्रत्येकं स्थैर्यतो ये च त्रयस्त्रिंशच्च वा यथा॥
निर्वेदोऽथ तथा ग्लानिः शङ्कासूयामदश्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः॥

व्रीडा चपलता हर्ष आवेगो जड़ता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
स्वप्नो विबोधो हर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिरथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावा प्रयान्ति रसतामपि ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

एषां भावानां नवसु रसेषु यथानुक्रमं स्थितिमाह—

शङ्कासूया भयं ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः ।
औत्सुक्यं विस्मयो हर्षो भयोन्मादौ मदस्तथा ॥
विषादो जड़ता निद्रावहित्थं चपलता धृतिः ।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥
ग्लानिः शङ्काभयसूया च कामश्चपलता तथा ।
स्वप्ननिद्रावहित्थं च हास्ये भावाः प्रकीर्तिताः ॥
निर्वेदश्चैव चिन्ता च दैन्यमश्रु तथैव च ।
जड़ता मरणं चैव व्याधिश्च करुणे स्मृताः ॥
गर्हासूया तथा हर्ष उत्साहो मद एव च ।
चापल्यमुग्रता चैव रौद्रभावाः प्रकीर्तिताः ॥
अमर्षश्च परामर्षो वितर्कोऽथ मतिर्धृतिः ।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके ॥
अपस्मारो विषादश्च भयं रोगो मतिः स्मृतिः ।
उन्मादश्चैव विज्ञेया भावा बीभत्ससंश्रयाः ॥
स्तम्भः स्वेदोऽथ रोमाञ्चो मोहश्च विस्मयस्तथा ।
आवेगो जड़ता हर्षो मूर्च्छा चैवाद्भुताश्रयाः ॥
धृतिर्मतिर्जुगुप्सा च स्मृतिर्निद्रा⋯⋯क्षमा ।
हर्षोऽवहित्थं ग्लानिश्च तर्कौत्सुक्यविबोधकाः ॥

शान्ते रसे तु विज्ञेया भावा एते यथाक्रमम् ।
ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम् ।
उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः ॥

काव्यार्थं भावयताममीषां भावता । यदाह भरतः—

वागङ्गसत्त्वाभिनयैराहार्याभिनयैरपि ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥
विभावेन कृतस्त्वर्थो योऽनुभावेन युज्यते ।
सर्वाभिनयसंपन्नः स भाव इति कीर्त्यते ॥
भावा एवाभिसंपन्नाः प्रयान्ति रसताममी ।
यथा द्रव्याणि भिन्नानि मधुराणि रसात्मताम् ।
संभवन्ति यथा वृक्षे पत्रपुष्पफलादयः ॥
तद्वद्रसेषु विज्ञेया विशेषा भावरूपिणः ।
विकारः कामजो यत्र सत्त्वादुत्पद्यते क्वचित् ॥
स भाव इति निर्दिष्टः कामिनोः स रसावहः ।
योऽर्थो हृदयसंवादी कामिनोः स रसावहः ॥
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ।

रसभावौ त्वन्योन्यसापेक्षावेव । यदाह भरतः—

न भावहीनोऽस्ति रसो न रसो भाववर्जितः ।
परतः परतः सिद्धिरनयो रसभावयोः ॥
व्यञ्जनौषधिसंयोगाद्यथान्नं भावकं भवेत् ।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥

इति विस्तरभयात् स्वरूपत उक्तावेताविति ।

भूयिष्ठा प्रचुरा । परिषत् सभा । अभिनवनाटकेनेति । किमिदं नाटकं नाम? उच्यते । गीतवाद्यपूर्वकोऽभिनयः यद्विषया नाटकनाटिकाप्रकरणवीथी-प्रहसनप्रभृतयः । किमात्मकं तु नाटकम्? देवर्षिमनुष्यादीनां हर्षविस्मयादि-जननं पुरावृत्तचरित्रं तदनुकरणस्वरूपकम् । यदाह भरतः—

देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं नाट्यं शेषलोकस्य चैव तत् ॥

अन्यच्च—

राजर्षिवंशाच्चरितं तथा दिव्याश्रयोत्थितम् ।

किं पुनरस्य प्रयोजनम्? त्रिवर्गसिद्धिरिति । तथा हि नाट्यं द्विविधम् । ताण्डवं लास्यं च । लास्यं स्त्रीनृत्यं ताण्डवं पुंनृत्यम् । तथा च भरतः—

स्त्रीनृत्यमुच्यते लास्यं पुंनृत्यं ताण्डवं मतम् ।

गौरी तुष्यति लास्येन ताण्डवेन महेश्वरः ॥

किं च । नियतदेवता एव रसाः । यदाह भरतः—

शृङ्गारो विष्णुदेवः स्याद्धास्यः प्रमथदैवतः ।

रौद्रो रुद्राधिदेवः स्यात्करुणो यमदैवतः ॥

बीभत्सस्य महाकालः कालदेवो भयानकः ।

वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥

तदेतै रसैर्नाट्यपथमारूढैरेतान्येव दैवतानि तुष्यन्ति तदेवं धर्महेतुः । अर्थतः काम इति त्रिवर्गसिद्धिः । प्रजापतिरप्याह—

धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकृत् ।

अर्थ·········मृषयस्तस्योत्थानं तु नाटकम् ॥

चतुर्वेदसमुद्भूतं रसाभिनयपूर्वकम् ।

धर्म्यमर्थ्यं यशस्यं च नाट्यं को नाभिनन्दति ॥

भरतोऽप्याह—

न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला ।

न तज्ज्ञानं न वा योगो नाटके यन्न दृश्यते ॥

अपि च—

यो यस्य दयितो भावः स तं नाट्ये निरीक्षते ।

अतः सर्वमनोग्राहि नाट्यं को नाभिनन्दति ॥

किं च । दृष्टप्रीतिविनोदहेतुत्वाद् दृष्टफलमुच्यते ।

लीलेयं धनिनां धृतिस्तु सुखिनां शिक्षा प्रमत्तात्मनां

संसारस्थितिरीदृशीति विरतिर्नानाविधा योगिनाम् ।

प्रीतिः काव्यरसाश्रिनां नवनवा कीर्तिः कवीनामियं

विद्या नाटकसंज्ञिता भगवती विश्वोपकारक्षमा ॥

नटी यत्नपदश्रवणादाह। सुविहितप्रयोगतया आर्यस्य न कोऽपि उपहसिष्यति। विदुषां पण्डितानां आपरितोषात् परितोषपर्यन्तं परितोषानन्तरमेव प्रयोगस्य साधुता ज्ञायते न तु तत्प्राक्। साधु शुद्धम्। बलवदिति क्रियाविशेषणम्। अपिर्भिन्नक्रमे ॥ २ ॥

एवं मेदमित्येवमेवार्थे। अनन्तरकरणीयमव्यवधानकर्तव्यमाज्ञापयत्वार्यः। कतरं पुनः समयमाश्रित्य गास्यामि। प्रकृष्टा छाया यस्य तत् प्रच्छायं सुद्धोपवनवृक्षादि तत्र सुलभा निद्रा येषु ते तथा। परिणामोऽवसानम् ॥ ३ ॥

नटी वाक्ये—

क्षणचुम्बितानि भ्रमरैः पश्यत सुकुमारकेसरशिखानि।
अवतंसयन्ति सदयं शिरीषकुसुमानि प्रमदाः ॥

कोमलत्वाद् भग्नताशङ्कया सदयमिति क्रियाविशेषणम् ॥ ४ ॥

मञ्चाः क्रोशन्तीतिवल्लक्षणया रङ्गपदेनात्र द्रष्टृलोक उच्यते। तेन रागापहृतचित्तवृत्तिरिति विशेषणं संगच्छते। आलिखित इव चित्रन्यस्त इव द्रष्टुरतिरसज्ञत्वात्। कतममिति प्रयोगविशेषणम्। ननु प्रथममेवार्येणाज्ञप्तं यथाऽभिज्ञानशकुन्तलमभिरूपनाटकमभिनीयतामिति। अभि सर्वतोभावेन ज्ञानमस्माद् भविष्यतीत्यभिज्ञानमङ्गुरीयकं तेनोपलक्षिता शकुन्तला यत्रेति तन्नामकेन। तवास्मीति। हारिणा मनोहारिणा। क इव, सारङ्गेण हरिणेन दुष्वन्तो राजेव। यथा पूर्वं मृगयागतः पुरुवंशजो दुष्वन्तो नाम राजा हरिणेन हृतः तथा। अतिरंहसा वेगेन। "सारङ्गश्चातके भृङ्गे मतङ्गे च कुरङ्गजे" इति विश्वः ॥ ५ ॥

इहावलगितेनामुखं तदेव प्रस्तावना। अवलगितं तु यथाखेटकार्थं राज्ञः प्रवेशसूचनम्। यदाह भरतः—

यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते।
तत्रावलगितं नाम विज्ञेयं कविभिर्यथा ॥

नटी विदूषको वापि पारिपार्श्विक एव वा।
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ॥
आमुखं तच्च विज्ञेयं बुधैः प्रस्तावनापि सा ॥



॥ इति प्रस्तावना ॥

राजा दुष्यन्तः। अनुसरन् मृगस्य पश्चाद् गच्छन्। "सूतः क्षत्ता च सारथिः"इत्यमरः। कृष्णसारे तन्नाम्नि हरिणे त्वयि च चक्षुर्ददत्। नाभ्यस्ताच्छतुरिति नुम्निषेधः। शिवमेव मृगरूपधरदक्षयज्ञानुसारिणम्। "पिनाकोऽजगवं धनुः"इत्यमरः ॥ ६ ॥

ग्रीवाभङ्गाभिरामं यथास्यादेवं मुहुर्वारं वारं स्यन्दने रथे दत्तदृष्टिरर्पितनेत्रः। स्यन्दने कीदृशे, अनुपतति पश्चाद् गच्छति। पश्चार्धेन शरीरस्येति शेषः। विशेषणसमासेऽपरस्यार्धे पश्चभावो वक्तव्यः इति अपरशब्दस्य पश्चभावः। भूयसा महता पूर्वकायं शरीराग्रम्। शष्पैस्तृणैरर्धावलीढैरर्धोपभुक्तैः कीर्णो व्याप्तश्च असौ तन्मार्गो येन स तथा। उदग्रमुद्दामं यत् प्लुतं गतिविशेष उत्फाल इति यावत् तस्मात् वियति आकाशे बहुतरं उर्व्यां पृथिव्यां स्तोकमल्पतरं सोऽयमिदानीं मृगः प्रयातीति योजना ॥ ७ ॥

उत्खातिनी निम्नोन्नता। रश्मिः प्रग्रहाख्या रज्जुः तस्य संयमनादाकर्षणात्। "किरणप्रग्रहौ रश्मी"इत्यमरः। विप्रकृष्टान्तरालो दूरान्तरालः। दुरासदो दुष्प्रापः ते न भविष्यति अर्थात् सुलभ एव। अभीषवः प्रग्रहाः। अभीपुः प्रत्यूपे(?) प्रग्रहेष्विति विश्वः। निरायतपूर्वकायाः निःशेषतो दीर्घीकृताग्रशरीराः। स्वेषां स्वकीयानां प्रसरतां प्रकर्षेण चलतां रजसां धूलीनाम्। वाजिनोऽश्वास्तरन्ति प्लवन्ते। नु वितर्के ॥ ८ ॥

अतीत्य उल्लंघ्य। हरयोऽश्वविशेषाः।

त्वक्केशबाललोमानि स्वर्णाभानि च यस्य तु।
स हरिर्नामतोऽश्वः स्यात् पीतकौशेयसन्निभः ॥ इति।

तथाहीत्युपदर्शने। कृतसंधानमेकीभूतम्। प्रकृत्या स्वभावतः। नयनयोः कृते निमित्तं न दूरे न वा पार्श्वे मम किंचित्। यतो दूरस्थं सन्निहितं पार्श्वस्थं त्यक्तमेव ॥ ९ ॥

अवलोक्य अधस्तान्निरीक्ष्य। ते तव बाणपात एव समवर्ती यमस्तस्य कृष्णसारस्य च अन्तरे मध्ये तपस्विनौ मुनी। "समवर्ती परेतराट्" इत्यमरः। आत्मना द्वितीयः स्वात्मना द्वयोः पूरणः। द्वौ प्रविशत इति यावत्। आत्मनश्च पूरणे इति तृतीयाया अलुक्। बत कष्टे! हरिणकानामनुकम्प्यहरिणानाम्।

अनुकम्पायां कन्। शराः कीदृशाः, निशितनिपाताः निपात्यते लक्ष्यमेभिरिति निपाताः फलानि। निशिताः शाणशुद्धा निपाता येषु ते तथा। सारपुंखाः श्रेष्ठपुंखाः यद्वा सारं धनं सुवर्णं तन्मयाः पुंखा येषु ते तथा। धनेषु च सुवर्णस्याभ्यर्हितत्वात् तदुपादानम्। "न्याये च नीरे च धने च सारम्"इति विश्वः। सारपुंखत्वेन प्रहारदार्ढ्यं सूचयति। अत्यन्तासंभवे द्वौ क्वशब्दौ प्रयुज्येते ॥ १० ॥

अनागसि निरपराधे। "आगोऽपराध"इत्यमरः ॥ ११ ॥

चक्रवर्तिनं पुत्रमाप्नुहीति भरतसूचनम्। साधिदैवतोऽधिदेवतासहितः। शकुन्तलयेति तस्याः तद्रूपातिशयस्य च सूचनम्। चक्रवर्तिपुत्राशंसनानुपदं शकुन्तलोत्कीर्तनेन तादृगपत्यार्थमेनां भजेति ध्वनितम्। अनुमालिनीतीरं मालिनीनदीतीरे। अन्यकार्याणामतिपातो बाधः। अतिथिसत्कारोऽतिथिपूजनम्। मे भुजः कियद् रक्षतीति त्वं ज्ञास्यसीत्यन्वयः ॥ १२ ॥

कुलपतिः कण्वः। अनवद्यां शीलसौन्दर्यादिसकलगुणवतीं यद्वा व्यभिचारादिदोषरहिताम्। दैवं भाग्यम्। अस्याः शकुन्तलायाः प्रतिकूलं विवाहप्रतिबन्धकम्। सैव शकुन्तलैव विदितभक्तिः ज्ञातभक्तिः। विदितभक्तिमिति पाठे शिष्टं विनीतं च वरमित्यभिप्रायः। साधयावो गच्छावः। यदाह भरतः—"गच्छेत्यर्थे साधये"त्यतः साधधातोर्गमनार्थकता प्रतीयते। हि यस्मादर्थे। नीवारा इति। शुकानां कोटरे येऽवस्थिता अर्भकाः शिशवः तन्मुखाद् भ्रष्टाः पतिता नीवाराः सूच्यन्ते। क्वचिदुपलाः पाषाणाः इङ्गुदी मुञ्जनीति लोकप्रसिद्धा तत्फलभिदः। मुनीनां इङ्गुदीतैलदानमेव देहे। लेखा जलरेखा। "पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषद्"इत्यमरः ॥ १३ ॥

कुल्याम्भोभिः कृत्रिमाल्पनदीजलैः। "कुल्याल्पा कृत्रिमा सरिद्"इत्यमरः। प्रसृतिः प्रसरणं यस्माच्चपलैः। अर्वाक् एतस्मिन् भागे। मन्दमन्दत्वे नष्टशङ्कत्वं हेतुः ॥ १४ ॥

आर्द्रपृष्ठा जलावगाहात्(?)। प्रविष्टकेन प्रवेशप्रयोजकगतिविशेषेण। बाहुरत्र दक्षिणः फलाशंसनात्। दक्षिणबाहुस्फुरणं पुंसामिष्टार्थदम्। यदाह वराहाचार्यः—"दक्षिणपार्श्वे स्पन्दनमिष्टं हृदयं विहाय पृष्ठं च" इति। एतेन

शकुनमिदं शकुन्तलालाभसूचकं भविष्यति ॥ १५ ॥

नेपथ्ये यवनिकान्तरितदेशे—इत इतः प्रियसख्यौ। आलापोऽन्योन्य-भाषणम्। "आलापो भाषणं मिथः" इत्यमरः। शुद्धान्तोऽन्तःपुरं तत्र दुर्लभम्। आश्रमवासिनो मुन्याश्रमवासिनः। खलु उत्प्रेक्षायाम्। वनलताभिररण्य-लताभिः उद्यानं राजवनं तत्रस्था लता दूरीकृता जिता इत्यर्थः। यद्वा उभयत्र लताशब्दः कामिनीपरः। "लता स्त्रीभेदवाचिका" इति धरणिः। "अटव्यरण्यं विपिनं काननं गहनं वनम्" इत्यमरः। "पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्" इति च ॥ १६ ॥

प्रतिपालनं यथावस्थाने। एका सखी—हलेति सखीसंबोधनम्। "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः। सखि शकुन्तले तवापि सकाशात् तातकण्वस्य आश्रमवृक्षकाः प्रिया इति तर्कयामि येन नवमालिकाकुसुमपरि-पेलवापि त्वं एतेषु वृक्षेषु आलवालपरिपूरणे नियुक्ता। शकुन्तला अत्र श्रेष्ठा नायिका यदाह भरतः—

"दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा।
चतस्रो नायिकाः श्रेष्ठाः प्रेष्याद्या मध्यमाधमाः ॥" इति
"निर्जने तु वने यस्माच्छकुन्तैः परिवारिता।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥

इत्यादिपर्वणि कण्ववाक्याद् यौगिकं नाम। सखि अनुसूये न केवलं तात-कण्वस्य नियोगो ममाप्येतेषु सहोदरस्नेहः। एतेन स्नेहेनापि व्यवहरामीति ध्वनितं भवति। नियोग आज्ञा। अनुसूयेति सखीनाम। द्वितीया प्रियंवदा-नाम्नी। एते त्वनुनायिके। यदाह भरतः—

सखी प्रव्रजिता दासी प्रेष्या धात्रेयिका तथा।
अन्याश्च शिल्पकारिण्यो विज्ञेयास्त्वनुनायिकाः ॥

इति। सखि शकुन्तले उदकं लम्भिता आश्रमवृक्षका ग्रीष्मकालकुसुम-दायिनः। इदानीमतिक्रान्तपुष्पदिवसानपि वृक्षकान् सिञ्चामः। तेन हि नोऽन-भिसंबन्धिगुरुको धर्मो भविष्यति। शकुन्तला—प्रियंवदे रमणीयं मन्त्रयसे। तत्रभवान् मान्यः। इदं किलेति। किल निश्चये। अव्याजमनोहरं स्वभाव-

सुन्दरं वपुः कर्तुं। ध्रुवम् उत्प्रेक्षायाम्। समिल्लतां समिदर्थं लतां शाखाम्। "समे शाखालते" इत्यमरः। एतेन यदि नीलोत्पलपत्रधारया समिल्लताच्छेदः संभवति तदैतदपि वपुस्तपः साधयितुं क्षमं भविष्यतीति तात्पर्यम् ॥ १७ ॥

अपवार्य गुप्तीभूत्वा(?)। शकुन्तला—सखि अनुसूये अतिपिनद्धेन अनेन वल्कलेन प्रियंवदया पीडितास्मीति। तत् शिथिलय तावदेनम्। प्रियंवदा विहस्य। विहसितलक्षणं चाह भरतः—

आकुञ्चिताक्षिगण्डं च सस्वनं मधुरं तथा।
कलागतं सानुरागं नृणां विहसितं भवेत् ॥ इति।

अत्र तावत् पयोधरभारविस्तारहेतुमात्मनो यौवनारम्भमुपालभस्व। इदमिति। अभिनवं वपुः कर्तृ वल्कलेन स्वां स्वकीयां शोभां न पुष्यतीति योजना ॥ १८ ॥

अप्रतिरूपमसदृशं वल्कलं अथवा पक्षान्तरे काममकामानुमतौ वयसो यौवनस्य। "वयो यौवनमात्रके" इति विश्वः। न न पुष्यति अपि तु पुष्यति। द्वौ निषेधौ प्रकृतमर्थं गमयत इति श्रवणात्। सरसिजमिति। शैवलेनाप्यनुविद्धं सरसिजं पद्मं रम्यं भवतीत्यर्थात्। मलिनमपि लक्ष्म चिह्नं हिमांशोश्चन्द्रस्य लक्ष्मीं तनोति विस्तारयति। वल्कलेनापीयं तन्वी शकुन्तला अधिकमनोज्ञा दृश्यत इत्यर्थात्। अत्र हेतुमाह किमिव हीत्यादि। निदर्शननामायमलंकारः। तथा च कविकण्ठहारे—

अर्थान्तरप्रवृत्तेन किंचित्तत्सदृशं फलम्।
सदसद् वा निदर्श्येत यत्र स्यात्तन्निदर्शनम् ॥ इति ॥ १९ ॥

शकुन्तला—सखि एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां चूतवृक्षकः। तत् यावदेनं संभावयामि। एतेनान्योऽपि निभृतव्याहारवान् मया संभावनीय इति ध्वनितम्। तथा करोति संभावयति जलेनेत्यर्थात्। प्रियंवदा—हला शकुन्तले इहैव मुहूर्तं तिष्ठ। शकुन्तला—किंनिमित्तम्? प्रियंवदा—त्वया समीपस्थितया लतासनाथ इव प्रतिभाति मे अयं चूतवृक्षकः। एतेन शकुन्तलायां स्वामिसाहित्यमनोरथः सूचितः। यदाह—"मनोरथस्त्वभिप्रायस्योक्तिरन्यापदेशतः" इति। शकुन्तला—अत एव त्वं प्रियंवदा इत्युच्यसे। अवितथं स्वरूपं लतासादृश्यमिति यावत्। एतदेव स्फोरयति—अधरः किस-

लयराग इति। संनद्धमिति लोभनीयतापोपकम्॥ २०॥

अनुसूया—हला शकुन्तले इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिका। एतेन तु शकुन्तले त्वमपि स्वयंवरेण स्वामिसंनिहिता भवेति सूचितवतीति ध्वनिः। शकुन्तला उपगम्य समीपं गत्वा दृष्ट्वा च। हला रमणीये काले अस्य पादपमिथुनस्य व्यतिकरः संबन्धः संवृत्तः। इयं नवकुसुमयौवनारम्भा नवमालिका, अयमपि बद्धफलतया उपभोगक्षमः सहकारः। एतावदवस्थयोः कामिनोरपि संबन्धो योग्यो भवतीति स्वयमपि वक्रोक्त्या सूचितवतीति तात्पर्यम्। प्रियंवदा—अनुसूये जानासि किंनिमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षते? अनुसूया—न खलु विभावयामि। प्रियंवदा—यथा वनतोषिणी सदृशेन पादपेन संगता, अपि नाम अहमपि एवमप्यात्मनोऽनुरूपं वरं लभे इति। शकुन्तला—एष आत्मनस्ते चित्तगतो मनोरथः। अनुसूया—सखि शकुन्तले इयं तातकण्वेन त्वमिव स्वहस्तसंवर्धिता माधवीलता। इमां विस्मृतवत्यसि जलप्रदाने·········त्यर्थात्। शकुन्तला—आत्मानमपि अहं तदा विस्मरिष्यामि। आश्चर्यमाश्चर्यम्। प्रियंवदे प्रियं ते निवेदयामि। प्रियंवदा—सखि किं मे प्रियम्? शकुन्तला—असमये खलु एषा आमूलान्मुकुलिता माधवीलता। उभे प्रियंवदानुसूये उपगम्य लतासमीपं गत्वा। प्रियंवदा—सखि सत्यम्। शकुन्तला—सत्यम्! किं न प्रेक्षेयाथाम्। प्रियंवदा—तेन हि प्रियं ते निवेदयामि। आसन्नपाणिग्रहणासि इदानीं त्वम्। शकुन्तला सासूयं असूयासहितं यथा स्यात्। असूया हि शृङ्गाररसे व्यभिचारी भावः, प्रकृते कपटेर्ष्या। नूनं तवात्मगतो मनोरथः। न खलु परिहासेन मन्त्रये। श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति अनुसूया सखि प्रियंवदे अत एव सस्नेहा शकुन्तला माधवीलतां सिञ्चति। शकुन्तला—यतो मे भगिनिका भवति ततः किमिति न सेक्ष्यामि। राजवाक्ये—असवर्णसंभवा अतुल्यजातिसंभवा अब्राह्मणीप्रभवेत्यर्थः। कृतं निष्फलं संदेहेन। असंशयमिति। आर्यमन्यायनिवृत्तं मनोभिलाषि साभिलाषमस्यां शकुन्तलायां भवतीति योज्यम्। अन्तःकरणं मनः तस्य प्रकर्षेण वृत्तयः प्रमाणम्। अत्राजहल्लिङ्गतया अन्वयः। वृत्तिर्वर्त-

नम्। "वृत्तिर्वर्तनजीवने"इत्यमरः। विचारनामायं नाट्यालंकारः। तथा च कविकण्ठहारे—"विचारः स तु विज्ञेयः संशये वस्तु निर्णय" इति॥ २१॥

तथापि एतावता असवर्णजत्वनिश्चयेऽपि तत्त्वतो याथार्थ्येन उपलप्स्ये ज्ञास्यामि। शकुन्तला ससंभ्रमोद्वेगम्। अम्मोशब्द आश्चर्ये स्त्रीभिरेवोच्यते। यदाह भरतः—"विस्मये त्वम्महे अम्मो नित्यं स्त्रीभिः प्रयुज्यते"। अम्मो आश्चर्ये। सलिलसेकसंभ्रान्तो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिभवति। अथ च मे मधुकरः खिङ्गो नवमालिकां नूतनमालावर्तीं कामिनीमुज्झित्वेति शब्दे शेषा……:। भ्रमरबाधां भ्रमरकृतां पीडाम्। "पीडा बाधा व्यथा दुःखम्"इत्यमरः। यतो यत इति। अद्य इदानीमकामा कामशून्या निरभिलापा वा भयादियं शकुन्तला दृष्टिविभ्रमं दृष्टेर्विलासं विविधप्रकारेण भ्रमणं वा शिक्षते अधीते। कथंभूता? विवर्तितौ चालितौ भ्रुवौ यया सा तथा। पुनः कीदृशी, यतो यतः यत्र यत्र षट्चरणोऽभिवर्तते संमुखं आयाति ततस्ततः तस्मात् तस्मात् प्रदेशात् प्रेरितं लोचनाञ्चलं कटाक्षो यया सा तथा। अन्या हि कामिनी संमुखोपस्थिते कामिनि भयव्यतिरेकेणापि प्रेरितलोचनाञ्चला सती दृष्टिविलासवती भवति। इयं तु……रेकेण इति स्पृहानिमित्तम्। इयं तु दृष्टिः शृङ्गाररसे संभवति। यदाह—"सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते"॥ २२॥

चलापाङ्गेति। हे मधुकर भ्रमर खलु निश्चये त्वं कृती कुशलः। तत्त्वान्वेषाद् असवर्णत्वनिश्चयानुसंधानबलाद् वयं हता अकृतार्थाः। वेपथुमतीं सकम्पाम्। रहस्येकान्ते मृदु यथा स्यादेवं आख्यायीव कथक इव कर्णसमीपं चरणशीलः स्वनसि शब्दायसे। करं हस्तं व्याधुन्वत्याः कम्पयन्त्या अधरं पिबसि। अन्योऽपि नागरो नयनचुम्बनं कर्णान्ते मृदुभाषणमधरपानं च आचरति। त्वया तु तत् सर्वमविचारितसुन्दरं कृतम्। मया तु न किमपीत्यसूयानिमित्तम्। असूया हि व्यभिचारी भावः शृङ्गाररसे जायत इति रसभावप्रकरणे लिखितमेव। इयं तु राज्ञोऽभिलापरूपा प्रथमा कामावस्था। यदाह भरतः—"प्रथमे त्वभिलापः स्यात्"इति। आधुन्वतीति शब्दः साधुरेव। तथा चामरः—

संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता।
शीत्काराञ्चितविग्रहा सपुलकं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥

"कृती कुशल इत्यपि" इत्यमरः ॥ २३ ॥

शकुन्तला—सख्यौ परित्रायेथां मामनेन दुष्टमधुकरेणाभिभूयमानाम्। उभे प्रियंवदानुसूये सस्मितं सेषद्धासम्। स्मितलक्षणमाह भरतः—

ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।
अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत् ॥ इति ॥

के आवां परित्राणेऽत्र तावद् दुष्वन्तमाक्रन्द आह्वय यतो राजरक्षितानि तपोवनानि। "क्रन्दितं ख्यातमाह्वाने" इति विश्वः। क्रदि आह्वाने गाने रोदने चेति धात्वनुसारात्। दुष्वन्तमित्यत्र ऊद्वतउपसर्गे हलीत्यूत्वम्। शषोः स इति षकारस्य सकारः। कगचजतदपयवां प्रायो लोप इति वकारलोपः। एतेन दूसन्तमिति भवति। दुष्मन्तेत्यत्र ष्मपक्ष्मविस्मये म्ह इति स्मस्य म्हादेशे सति प्रकृते दुम्हन्तमिति पदं स्यान्न दूसन्तमिति। एतदेव दुष्वन्तनाम्नि प्रमाणम्। दुष्वन्तमाक्रन्देति राजप्रवेशसूचनं यतो नासूचितस्य प्रवेश इति। शकुन्तला—न एष दुर्विनीतो विरमति तदन्यतो गमिष्यामि। हद्धी हद्धीति शब्दो हा धिगित्यर्थे स्त्रीभाषायां प्राकृते। यदाह भरतः, "प्राकृते हा धिगित्यर्थे हद्धी नित्यं द्विरुच्यते"। हा धिक् कथमितोऽपि मामनुसरति तत् परित्रायेथां माम्। पौरवे पुरुवंशजे दुष्वन्ते ॥ २४ ॥

सख्यौ—आर्य न किमप्यत्याहितम्। इयं नः प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता। अनुसूया—इदानीमतिथिविशेषलाभेन। प्रियंवदा—स्वागतमार्यस्य। हला शकुन्तले गच्छ उटजात् फलमिश्रमर्घमुपाहर। इदं घटस्थं जलं पादोदकं भविष्यति। "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः। विरहासहिष्णुराह—सूनृतया प्रियतथ्यया। "सूनृतं मङ्गले सत्यप्रिये वचसि सूनृतम्" इति विश्वः। अनुसूया—अत्र तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्य परिश्रममपनयत्वार्यः। प्रकृष्टच्छायया शीतलायाम्। अनेन

वृत्तजलदानरूपेण। प्रियंवदा—हला शकुन्तले उचितं नोऽतिथिपर्युपासनम्। तदेह्युपविशामः। शकुन्तला—आत्मगतं-अनन्यप्रकाशं चैवेति (?)—किं नु खल्विमं जनं प्रेक्ष्य तपोवनविरोधिमनोविकारगामिन्यस्मि संवृत्ता। सुहृदो भावः सौहार्दम्। प्रियंवदा—जनान्तिकमृएकं वर्जयित्वा यदुभयोरन्योन्य-मालापः। यदाह भरतः—

वर्जयित्वैकमन्योन्यं द्वाभ्यां यत् खलु पठ्यते।
जनान्तिकं तत् कर्तव्यं त्रिपताकिकपाणिना॥

हला सखि अनुसूये क एष चटुलगम्भीराकृतिर्मधुरमालपन् प्रभुत्वदाक्षिण्यं विरौति। अनुसूया—हला ममापि कौतूहलम्। प्रक्ष्यामि तावदेनम्। प्रकाशं सर्वश्राव्यम्। आर्यस्य मधुरालापजनितो विश्रम्भो मां चिन्तयति चिन्तां कारयतीत्यर्थः। कतरः पुनर्वर्णो ब्राह्मणादिषु मध्य इत्यर्थात्। "वर्णाः स्युर्ब्राह्मणादय" इत्यमरः। आर्येणालंक्रियते। कतमो वा प्रदेशो विरहपर्युत्सुकः क्रियते। किंनिमित्तमार्येण सुकुमारेणात्मा तपोवनगमनपरिश्रमस्योपनीत इति। शकुन्तला—हृदय मा उत्ताम्य त्वं ग्लानं न भव। अमानोनाः प्रतिषेध-वचना इति। यत्त्वया चिन्तितं तदनुसूया मन्त्रयते। राजा—स्वगतमनन्य-प्रकाशम्। दर्शयामि बोधयामि। परिहारं संगोपनम्। वेदविद् ब्राह्मण इति संगोपनम्। अथ च क्षत्रियोऽपि तथा भवतीत्यात्मप्रकाशनमेव। पौरवस्य पुरुवंशजातस्य दुष्वन्तस्य नगराद् धर्माधिकारे नियुक्त इत्यादिना आत्म-प्रकाशनमेव। प्रजासु धर्मविचारस्य प्राधान्येन राजकर्तव्यत्वात्। अथ चासामर्थ्येन राज्ञान्योऽपि धर्माधिकारी क्रियत इति तद्व्याजात् संगोपनमेव। धर्मारण्यं तपोवनम्। अनुसूया—तत् सनाथा धर्मचारिणः भवदागमनेनेत्य-र्थात्। शकुन्तला श्रृङ्गारलज्जां श्रृङ्गारकृतां लज्जां रूपयति प्रकाशयति। श्रृङ्गारलक्षणं तु—

श्रृङ्गं तु मन्मथोद्भेदस्तत्प्रधानस्तु यो रसः।
पुरुषप्रमदाभूमिः स श्रृङ्गाररसः स्मृतः॥ इति।
ऋतुमाल्यालंकारैः प्रियजनगान्धर्वसेवाभिः।
उपवनगमनविहारैः श्रृङ्गारो मानसं चरति॥ इति भरतः।

सख्यौ उभयोः शकुन्तलादुष्यन्तयोराकारं चेष्टां विदित्वा जनान्तिकम् अन्यजनं वर्जयित्वा—हला शकुन्तले यद्यद्य तातो गृहसंनिहितो भवेत्। शकुन्तला ततः किं भवेत् ? सख्यौ—जीवितसर्वस्वेनापीमं जनं अतिथिविशेषं कृतार्थं कुर्यात्। जीवितसर्वस्वं फलमूलादिकं यत एवादिः (?) अथ च जीवितसर्वस्वं त्वमेव। शकुन्तला—अपेतम्। किमपि हृदये कृत्वा मन्त्रयेथे न युवयोर्वचनं श्रोष्यामि। सखीगतं शकुन्तलाविषयकम्। सख्यौ—आर्य अनुग्रहेऽप्यभ्यर्थना अपि तु नेत्यर्थात्। राजवाक्ये—तत्रभवान् मान्यः। शाश्वतेऽविनाशिनि। अनुसूया—शृणोत्वार्यः। अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः। प्रकाशः ख्यातः। कौशिको विश्वामित्रापरनामा। कुशिकस्यापत्यं कौशिक इति कुलागतं नाम। अनुसूया—तं सख्या. पितरमधिगच्छ जानीही-त्यर्थः। उज्झितशरीरसंवर्धनया पुनस्तातकण्वोऽस्याः पिता।

निर्जने विपिने रम्ये शकुन्तैः परिवारिता।
आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम्॥
शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते।
क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मशासने॥
एवं दुहितरं विद्धि ममापि च शकुन्तलाम्।
शकुन्तलापि पितरं मन्यात् सा मामनिन्दिते॥

इत्यादिपर्वणि कण्ववाक्याच्छरीरसंवर्धनहेतुतया तत्र पितृव्यपदेश इत्यर्थः। उज्झितशब्दः त्यक्तवाची। कथं वा केन वा उज्झितशरीरेति कौतुकप्रमुखप्रश्न उज्झितशब्देऽप्यस्येति। अनुसूया—शृणोत्वार्यः। पुरा किल राजर्षेरुग्रे तपसि वर्तमानस्य कथं कथमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी अनुप्रेषिता। अप्सरस्त्वप्सराः प्रोक्तेति शब्दभेदाभिधानादप्सरःशब्दे प्रथमैक-वचने अप्सरा इति प्रयोगो भवति। प्रियंवदानुसूये—ततो वसन्तोदाररमणीये समये उन्मादहेतुं तस्या रूपं प्रेक्ष्य। लज्जामिति संगमकथने। गम्यत एव बुद्ध्यत एव। अनुसूया—अथ किम्। "अथ किं स्त्रीक्रियालाप" इति भरतः। राजवाक्ये—हन्त हर्षे। लब्धावकाश इति मुनेरसवर्णजत्वनिश्चयत्वात्। अस्या लज्जातोऽपीति भावः। श्रुत्वापीति माधविकासेकसमये इत्यध्याहार्यम्।

व्रतद्वैतकातरं व्रतशङ्काकुलम्। एतच्चाग्रे स्फुटीभविष्यति। प्रियंवदा—पुनरपि चक्तुकाम आर्यः। शकुन्तला सखीमङ्गुल्या तर्जयति। अयं हि शृङ्गाराभिव्यञ्जको रत्युत्पन्नो ललितो हावः।

करचरणाङ्गन्यासो भ्रूनेत्रौष्ठसंप्रयुक्तस्तु।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम्॥

इति भरतः। सम्यक् सत्यम् उपलक्षितं ज्ञातम्। प्रियंवदा—तेन हि अविचारनियन्त्रणानियोगः खलु भविष्यति तपस्विजनः। पुरुषेण सह निर्जने कथमियं कथा उच्यत इत्यादिना विचारेण यन्नियन्त्रणं तच्छून्यो नियोग आज्ञा यत्र। तथापि निश्शङ्कं पृच्छ। राजा—वैखानसं व्रतं ब्रह्मचर्यम्। आ प्रदानात् वराय दानपर्यन्तम्। मदनस्य व्यापारः प्रियोपासनं तद्रोधि तत्प्रतिबन्धकम्। सदृशं तुल्यं यदीक्षणं चक्षुस्तेन वल्लभाभिः प्रीतिविषयिणीभिः हरिणाङ्गनाभिर्हरिणीभिः समं सह निवत्स्यति वासं करिष्यति। तपस्विव्रतपरतयैव स्थास्यतीति भावः। आहो पक्षान्तरे। "आहो उताहो किमुत विकल्पे किं किमूत च"इत्यमरः॥ २६॥

प्रियंवदा—धर्माचरणपरवश एष जनः। गुरोः पुनरनुरूपवरप्रदाने संकल्पः इच्छा। "संकल्पः कर्म मानसम्" इत्यमरः। राजा सहर्षमिति अनुरूपवरप्रदेयत्वश्रवणादसवर्णजत्वनिश्चयाच्च। संदेहानन्तरं विशेषज्ञानं निर्णयः यदिति सामान्यनिर्देशः। तेन यद् वस्तु शकुन्तलारूपं अग्निं ब्राह्मणीजत्वेन आशङ्कसे जानासि तत् स्पर्शयोग्यं ज्ञात्वेत्यर्थः॥ २७॥

शकुन्तला सरोषमिव। इवशब्द उत्प्रेक्षायाम्।

"शङ्के मन्ये ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥"

इति दण्डी। रोषश्च रौद्ररसे स्थायीभाव इति पूर्वं लिखितमेव। अनुसूये गमिष्यामि। किंनिमित्तम्। इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै गत्वा निवेदयिष्यामि। सखि न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्। चेष्टायाः प्रतिरूपवर्तिनी सदृशी कामिजनानां मनोवृत्तिः। प्रियंवदा शकुन्तलामुपेत्य तत्समीपं गत्वा—हला

चण्डि सक्रोधे न लभ्यते गन्तुम् । किमिति । सभ्रूक्षेपमित्यत्र ललितो हावः । प्रियंवदा—द्वे मे वृक्षसेचनके धारयसि । ताभ्यां तावदात्मानं मोचय तदा गमिष्यसि । राजवाक्ये—अत्रभवतीं शकुन्तलाम् । तथा हीत्युपदर्शने । स्तनवेपथुः स्तनकम्पमित्यादि भावसूचकम् । कर्णशिरीषेणावरोधो यस्य तत्तथा यद्वा कर्णशिरीषस्यावरोधो यस्मात् तत्तथा, घर्मजलेन तस्य स्थिरीकरणादिति । जालकं समूहः । पर्याकुलाः विकीर्णाः कुन्तलाः केशाः । "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः"इत्यमरः । एकहस्तेन यमिता बद्धाः ॥ २९ ॥

नामाक्षराणि श्रीदुष्वन्तस्येत्येवंरूपाणि । राजवाक्ये—अलं निष्फलं अन्यथा संभावनया राजसंभावनया । वेदविद् धर्माधिकारीति ब्राह्मणव्याजकथनात् पूर्वमिति तात्पर्यं संगोपने । प्रकाशे तु अन्यथा संभावनया । राजप्रतिग्रहोऽयं राज्ञः प्रतिग्रहोऽयमाप्तोऽङ्गुरीयकमिति संगोपनेऽर्थः । प्रकाशे तु राज्ञो मत्तः प्रतिग्रहोऽयमाप्तोऽङ्गुरीयकं भवतीभ्यां ग्रहीतुमेवार्हतीति । यद्वा शकुन्तलारूपोऽयं जनो राज्ञे प्रतिग्रहः कर्तुमर्हतीत्यभिप्रायः । प्रियंवदा—तेन हि नार्हत्यार्योऽङ्गुरीयकवियोगं विश्लेषम् । आर्यस्य वचनेनैवानृणा भवतु । अनुसूया—सखि शकुन्तले मोचितास्यनुकम्पिना आर्येण। स्वगतम्—

भाषितं द्विविधं नाट्ये श्राव्यमश्राव्यमेव च ।
सर्वश्राव्यं प्रकाशः स्यादश्राव्यं स्वगतं मतम् ॥

इति भरतः । अथवा महाराजेन । प्रकाशं सर्वश्राव्यं यथा स्यादेवमिति स्वगतप्रकाशयोः सर्वत्र ज्ञेयम् । तत्कृतार्थेदानीमसि त्वम् । शकुन्तला—आत्मगतमनन्यप्रकाशम् । नेदं विस्मरिष्यामि यद्यात्मनः प्रभवामि । यद्वा विशेषेण स्मरिष्यामि स्मरिष्याम्येव शिरश्चालने स्मरणमुपकारे प्रत्युपकारे च कर्तव्यवरणरूपे । प्रियंवदा—किमिदानीं न गच्छसि ? शकुन्तला—इदानीमपि किं तवायत्तास्मि । यदा मे रोचते तदा गमिष्यामि । अत्र इदानीमहं न तवायत्ता किं तूपकारिण आयत्तेति तात्पर्यम् । स्यादिति संभावनायाम् । अस्मान् प्रति सस्नेहेयमित्यर्थः ।

नेपथ्ये यवनिकान्तरितदेशे । सत्त्वरक्षायै प्राणरक्षार्थम् । चतुर्थी तदर्थे

वक्तव्येति चतुर्थी। "सत्त्वं प्राणेषु जन्तुषु"इत्यमरः।

किल व्याजे। मृगया आखेटस्तत्र विहारी क्रीडापरः। "आखेटो मृगयास्त्रियाम्"इत्यमरः। ज्ञातशकुन्तलोऽयं मृगयाव्याजेनागत इति तात्पर्यम्। विटपः शाखा तत्र निषक्तं धृतं बन्धनं येषु। तथा हीत्युपदर्शने। रेणुर्धूलिराश्रमद्रुमेषु पततीति योजना ॥ ३१ ॥

राजवाक्ये—स्वगतमनन्यप्रकाशम्। धिगिति कष्टे। तपोवनावरोधादालापभङ्गाच्च। तीव्राघाता‌दिति—गजो हस्ती धर्मारण्यं धर्मप्रधानमरण्यं तपोवनं विरुजति पीडयतीति योजना। रुजो भङ्गे धातुः। तीव्रप्रहारात् संमुखतरुशाखानिर्गमस्थाने भग्न एको दन्तो यस्य स तथा। "वल्ली तु व्रततिर्लता"इत्यमरः। मूर्तः कृतदेहपरिग्रहः। नोऽस्माकं तपसो विघ्न इव। इवशब्दो यथार्थे। "इववद्वायथाशब्दाः" इति दण्डी। सारङ्गो हरिणः हस्ती वा। "सारङ्गश्चातके भृङ्गे मतङ्गे च कुरङ्गजे"इति मेदिनीकारः। राज्ञः पूर्वमेवागतत्वात्। स्यन्दनो राजरथः। "स्यन्दनो राजरथ"इत्यमरः ॥ ३२ ॥

सख्यौ प्रियंवदानुसूये—महाराजामुना हस्तिसंभ्रमेण पर्याकुलाः स्मः। तदनुजानीहि नः उटजगमनेन। अनुजानीहि अनुज्ञातान् कुरु नोऽस्मानित्यर्थः। अनुसूया—सखि शकुन्तले पर्याकुलास्मदनुसंधानेनार्या गौतमी भविष्यति। तदेहि शीघ्रमेकस्था भवामः। गतिविरोधं गमनप्रतिबन्धं रूपयित्वा प्रकाशयित्वा। हद्धी प्राकृते हाधिगित्यर्थे। "हद्धी नित्यं द्विरुच्यते" इति भरतः। ऊरुस्तम्भविकलास्मि संवृत्ता। ⋯भवादपीति ध्वनिः, भयात् स्फुटमेव। आश्रमबाधा आश्रमपीडा। यतिष्ये यत्नं करिष्ये। प्रियंवदानुसूये—महाराज अविदितभूयिष्ठोऽसि बहुप्रकारेण विशिष्याज्ञातोऽसि। ननु साम्प्रतं यदुपचारमध्यस्थतया अपराद्धा स्मस्तदिदानीं मर्षयसि। असंभावितसत्कारं भूयः प्रत्यवेक्षणनिमित्तं सपरिहारमार्यं विज्ञापयामः। शकुन्तला—अभिनवकुशशूचीपरिक्षतं मे चरणम्। कुरुवकशाखाप्रतिलग्नं च मे वल्कलाञ्चलम्। तत् प्रतिपालयतं मां यावदेतत् मोचयामि। "पदंघ्रिश्चरणोऽस्त्रियाम्"इत्यमरः। अनुयात्रिकान् पश्चादनुगामिनः। पश्चात् शरीरस्येति योज्यम्। असंस्थितं चञ्चलं चेतो मनः। केतोः ध्वजस्य। प्रतिवातं वाताभिमुखम् ॥ ३३ ॥

अङ्कलक्षणं। कविकण्ठहारे—

प्रकृतार्थस्य निर्वाहः तथा बीजस्य संगतिः।
किंचित् संलग्नबिन्दुः स्याद् यत्र सोऽङ्क इति स्मृतः॥

अपि च—

नानाविधानसंयुक्तं रसभावैः समुज्ज्वलम्।
सुखदुःख······कैरर्थैर्युक्तमङ्कं विनिर्दिशेत्॥ इति॥



इति माण्डरग्रामीणश्रीनरहरिविरचिताभिज्ञानशकुन्तलटिप्पण्यां
प्रथमोऽङ्कः॥

# २

ततः प्रविशति विदूषको वदति च। विदूषको हि शृङ्गारिणो नायकस्योपनायको भवति। यदाह भरतः—

विटो विदूषकश्चैव पीठमर्दस्तथैव च ॥

प्रवेशलक्षणं त्वस्य—

"विदूषकस्तु विन्यस्य कुटिलं वामके करे।
तथा दक्षिणहस्तं तं कुर्याच्चतुरकं बुधः ॥
दन्तुरः पलितः कुब्जः खञ्जश्च विकृताननः।
काव्यहास्यं प्रकुर्वीत असंबद्धप्रभाषणात् ॥
नानाविधैर्विकारैश्च तथा चाश्लीलभाषितैः।
पर्यन्तं च पुरा इच्छेदुल्लोकितविलोकितैः ॥"

कुटिलं दण्डकाष्ठम्। चतुरो नाम हस्तविशेषः—तर्जनीमध्यमानामिकानां संहतानां कुञ्चिताग्राणां कुञ्चितस्याङ्गुष्ठस्य मूले संश्लेषाद् भवति। अन्यच्च—

······लापभङ्गनिपुणो हास्येङ्गितविशेषवित्।
कलानामेकदेशज्ञो विदूषक उदाहृतः ॥
राज्ञामन्तःपुरचर ईषद्विद्यो विदूषकः ॥ इति।

ह्रीमाणहेशब्दः प्राकृते खेदे। "ह्रीमाणहे भये खेदे" इति भरतः। भोः हतोऽस्मि। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णः अयं मृगोऽयं वराह इति मध्यन्दिने ग्रीष्मविरलपादपच्छायासु वनराजिषु आहिण्ड्यते परिभ्रम्यते। पत्रसाङ्कर्यकषायविरसानि पीयन्ते गिरिनदीसलिलानि। अनियतवेलं च सोष्णमांसभूयिष्ठं अद्यते भुज्यते। गजतुरगयोश्च सङ्गेन शब्देन वा रात्रावपि निःशङ्कं स्वपितुं नास्ति। महत्येव प्रत्यूषे दास्याः पुत्रकैः शाकुनिकदुष्टकैः कर्णोपघातिना वनगमनकोलाहलेन प्रबोध्ये। एतावतापि

पीड़ा मे खलु प्रभूता। ततो गण्डस्योपरि विस्फोटिका संवृत्ता। यतः सर्वेष्व-स्मास्ववहीनेषु पश्चात् पतितेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेना-धन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा। तां च प्रेक्ष्य साम्प्रतं नगरगमनस्य मनोऽपि न करोति। एतदेव चिन्तयतोऽस्य पुनः सत्यं ममा-धन्यायाः पुत्रस्याक्ष्णोः सुप्रभाता रजनी। तत् का गतिः। यावदेनं कृताचारं प्रियवयस्यं प्रेक्षे। उपसृत्याग्रतो गत्वाऽवलोक्य निरीक्ष्य च। एष बाणासन-हस्तो बाणासनं धनुः। हृदयविनिहितप्रियतमो वनपुष्पमालाधारी इत एवा-गच्छति प्रियवयस्यः। भवतु, अङ्गविकलो भूत्वा स्थास्यामि। एवमपि नाम विश्रामं लभत इति। प्रियवयस्य इत्यनुवर्तनीयम्।

यथानिर्दिष्टो धनुःपुष्पमालाधारी सचिन्तश्च। तस्या भावस्तद्भावो मन्मथविकारः। यद्वा स चासौ भावश्चेति तद्भावः, यः पूर्वं तद्विषयेऽनुभूतः। तद्दर्शनेनाश्वासो यस्य तत्तथा। अकृतार्थे अनिर्व्यूढप्रयोजने। उभयप्रार्थना नायकनायिकाप्रार्थना। अत्र राज्ञोऽनुस्मृतिरूपा तृतीया कामावस्था। यदाह भरतः—

"मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः।
नैवासने न शयने न हृष्यति न तिष्ठति॥ १॥

इष्टजनो नायिका। स्निग्धमित्यादि। तत्सर्वं मत्परायणं मद्विषयकम्। किं तत्? तया यत् स्निग्धं यथा स्यादेवं वीक्षितं अवलोकितम्। तया यच्च विलासादिव मन्दं यथा स्यादेवं यातं गतम्। तया यच्च सखी उक्ता तदपि वचः सासूयं असूयासहितम्। असूया हि श्रृङ्गाररसे संचारी भावः इति पूर्वं लिखितमेव। स्निग्धदृष्टिस्तु श्रृङ्गाररस एवोत्पद्यते रतिभावात्। यदाह—

व्याकोषस्नेहमधुरा स्मितताराभिभाषिणी।
अपाङ्गभ्रूकृता दृष्टिः स्निग्धेयं रतिभावजा॥

अहो आश्चर्यं। कामः स्वतामात्मीयतां पश्यति। मत्कृतमिदं सर्वमिति कृत्वा सन्नेत्याशयः॥ २॥

विदूषकः—भो राजन् न मे हस्तः प्रसरति। वाङ्मात्रेण जाप्यसे। जि-जये। कुतः किल? स्वयमेवाक्षि आकुलीकृत्वाश्रुकारणं पृच्छसि। भिन्नार्थं

स्पष्टार्थम्। यद्वेतसश्च कुब्जकलीलां विडम्बयति तत् किमात्मनः प्रभावेण उत नदीवेगस्य। ममापि भवान्। युक्तं नाम एवं त्वया राजकार्यमुज्झित्वा तादृशं चास्खलितप्रदेशं यथास्यादेवं वनचरैकवृत्तिना भवितव्यमिति किमत्र मन्त्र्यताम्। अहं पुनर्ब्राह्मणः सत्यं प्रत्यहं श्वापदशाकुनिकानुगमनैः संक्षोभितसन्धिबन्धानामात्मनो गात्राणामप्यनीशोऽस्मि संवृत्तः। तत् प्रसीदाद्य एकाहमपि तावद् विश्राम्यते। अज्ज इत्यत्रार्य इत्यर्थोऽपि संगच्छते।

कण्वदुहितरं शाकुन्तलाम्। मृगयामाखेटकं प्रति निरुत्कण्ठम्। आहितसायकमर्पितबाणम्। सहवसति सहवासम्। संविभागो वण्टनं मिलनं वा॥ ३॥

अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते। अरण्येषु खलु मया रुदितम्। यतोऽरण्यरुदितं कश्चिन्न शृणोतीत्याशयः। तेन हि चिरं जीव। आज्ञापयतु भवान्। सहायेन द्वितीयेन। किं मोदकखादने? गृहीतः प्रणयः। प्रणयो याच्ञा। "प्रणयः प्रेम्णि विश्वासे याच्ञाविश्रम्भयोरपि"इति विश्वः। दौवारिकः—आज्ञापयतु भर्ता। रैवतक इति दौवारिकनाम। सेनापतिवाक्ये—देवो राजा गात्रं शरीरं बिभर्ति। कथंभूतं तत्, प्राणाः सारः स्थिरांशो यत्र तत्तथा। अपचितमपि कृशमपि व्यायतत्वाद् दैर्घ्याद् अलक्ष्यम्। क्लेशलेशैः परिश्रमलवैरभिन्नमसंबद्धम। गिरिचरः पर्वतचारी नागो हस्तीव। "राजा भट्टारको देवः"इत्यमरः। "मतङ्गजे गजो नागः" इति च॥ ४॥

दौवारिकः एत्वेत्वार्यः। एषोऽनुवचनदत्तकर्णो भर्त्ता त्वामेव प्रतिपालयति। तदुपसर्पत्वार्यः। जयति जयतीति द्विरुक्तिर्वीप्सायाम्। आशंसायां लोटि जयतेरनभिधानादित्युत्वप्रतिषेधात गृहीतप्रचारमवरुद्धपथम्। सूचितश्वापदं लक्षितव्याघ्रादिकं अरण्यं वनोद्देशः। तत् किमिति स्थीयते? तथा च श्वापदमारणे समुद्योगः क्रियतामित्याशयः। मृगयापवादिना आखेटकदूषकेण माधव्येन विदूषकेण। विदूषकः—अत्रभवान् राजा प्रकृतिमापन्नः। त्वं तावद् दास्याः पुत्रक इतो अटवीमाहिण्ड गच्छ। यावन्नासिकाया लोलुपस्य कस्यापि जीर्णर्क्षस्य मुखे न निपतितो भवसीति। "ऋक्षाच्छभल्लभल्लूकाः" इत्यमरः। वैधेयो मूर्खः। प्रलपत्वर्थशून्या वाचो वदतु। "मूर्खवैधेयबालिशाः" इत्यमरः। "प्रलापोऽनर्थकं वचः"इति।

मृगयाभ्रमणे निदर्शनं मेद इत्यादि। लघुत्वं दूनं धन्विनामेव भ्रमणात्। मृगयां व्यसनमकार्यं मिथ्या वदन्ति। अन्य इति शेषः। यतः ईदृक् विनोदः सुखं कुतः कस्माद् भवेदपि तु न कुतोऽपीत्यर्थः ॥ ५ ॥

निपानसलिलं महिषा गाहन्ताम्। मृगकुलं रोमन्थं अभ्यस्यतु। पल्वलेऽल्पसरसि वराहपतिभिः शूकरश्रेष्ठैः मुस्ताक्षतिः मुस्ताखण्डनं क्रियताम्। इदमस्मद्धनुश्च विश्रामं लभतामित्यन्वयः ॥ ६ ॥

पूर्वगान् पूर्वादिगामिनः। धानुष्कान् धनुर्धरान्। शमप्रधानेषु शान्तिप्रधानेषु। गूढं गुप्तम्। हि यतः। अन्यतेजः सूर्यतेजः ॥ ७ ॥

भो उत्साहहेतो निष्क्रम। स्वनियोगं द्वाःस्थतारूपम्। अशून्यं कुरु द्वाःस्थो भवेत्यर्थः। यद्देव आज्ञापयति। विदूषकः—कृतं भवता निर्मक्षिकम्। तावदेतस्मिन् पादपच्छायाविरचितवितानकसनाथे शिलातले उपविशतु भवान्। यावदहमपि सुखासीनो भवामि। एत्वेतु भवान्। चक्षुःफलमतिरूपवस्तुदर्शनरूपम्। परमतिशयम। यद् भवानेवाग्रतस्तिष्ठति तथा च त्वमेव दृष्टः। आत्मानं स्वम्। भवान् मां स्वात्मनोऽभिन्नमिवाकलयन् मां कान्तं पश्यतीत्यभिप्रायः। आश्रमललामभूतां आश्रमलंकरणभूताम्। विदूषकः—भवतु, नास्य प्रसरं वर्द्धयिष्यामि। भो यतस्तावत् सा तपस्विकन्यका अनभ्यर्थनीया तत् किं तया दृष्टया। निराकृतनिमेषाभिः निर्निमेषाभिरित्यर्थः। लोक इन्दुकलां केन भावेन अभिप्रायेण पश्यत्यपि तु तत्र रमणीयतादर्शनसुखेनैवेत्यर्थः ॥ ८ ॥

परिहार्ये त्याज्ये अनुपादेये इति यावत्। तन्मुनेरपत्यं शकुन्तलाख्यं किल निश्चितं ललिताप्सरोभवं मनोहराप्सरःसंभूतं उज्झितं त्यक्तम् अनन्तरमधिगतं मुनिनेत्यर्थः ॥ ९ ॥

विहस्य आकुञ्चितम् अक्षिगण्डादि यथास्यादेवं हसित्वा। यदाह भरतः—

आकुञ्चिताक्षिगण्डं च सस्वनं मधुरं यथा।
कलागतं सानुरागं नृणां विहसितं भवेत् ॥ इति।

भो यथा कस्यापि पिण्डखर्जूरिकया उद्वेजितस्य तिन्तिलिकाभिलाषो भवति तथा स्त्रीरत्नहारिणो भवत इयमभ्यर्थना। स्त्रीरत्नमन्तःपुरस्त्री। पिण्ड-

खर्जूरिका उततीतिप्रसिद्धा सा चातिमधुरा। तिन्तिलिकात्यम्ला। तथात्रापी-त्यर्थः। अपादीः उक्तवानसि। तत्खलु रमणीयं यद् भवतो विस्मयमुत्पाद-यति। "विस्मयोऽद्भुतमाश्चर्यम्"इत्यमरः। चित्त इति। नु वितर्के। स्त्रीरत्न-सृष्टिः शकुन्तला प्रतिभाति। कीदृशी, अपरा न विद्यते परा श्रेष्ठा यस्याः सा तथा। "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते।"॥ १०॥

विदूषकः—सर्वथा प्रत्यादेशः सा रूपवतीनाम्। "प्रत्यादेशो निराकृतिः" इत्यमरः। अनाघ्रातमित्यादि। तद्रूपं शकुन्तलारूपं कर्तृ सविशेषणमनाघ्रातं पुष्पं पुष्पमित्यादि योज्यम्। कररुहैर्नखैरलूनमखण्डितं किसलयं नवपल्लवम्। अनामुक्तमपरिधृतं रत्नं पुष्परागादि। मधु क्षौद्रं पुष्परसो वा। पुण्यानाम् अखण्डं सकलं फलम्। अत्र तु राज्ञश्चतुर्थी गुणकीर्तनरूपा कामावस्था। यदाह—"चतुर्थे गुणकीर्तनम्" इति॥ ११॥

विदूषकः—तेन हि लघु लघु गत्वा परित्रायतु भवान्। सा कस्यापीङ्गुदी-तैलचिक्कणशीर्षस्य तापसस्य हस्ते पतिष्यति। परवती परायत्ता। अथ भवन्तमन्तरेण कीदृशः पुनरस्या दृष्टिरागः? अभिमुख इत्यादि। तया शकुन्तलया मदनः कामः न विवृतः प्रकाशितो न च संवृतो गोपितः। तथा च तदुभयसाङ्कर्येण मध्यस्थं भावं नीत इत्यर्थः। अत इति हेतौ। विनयेन वारिता वृत्तिर्वर्त्तनं व्यापारक्षमत्वं यस्य स तथा। यतो मय्यभिमुखे तया ईक्षितं निरीक्षितं संहृतं संकुचितम्। हसितं च हृतम्। कथंभूतं तत्, अन्यनिमित्तकथया उदय उद्भवो यस्य तत् तथा। अन्यकथाव्याजेन हसितमि-त्यर्थः। यद्वा तया अन्यनिमित्तकथोदयं यथास्यादेवं हसितम्। एतच्च सर्वं मदनरागद्योतकम्। हसितलक्षणं च भरते—

उत्फुल्लानननेत्रं तु गण्डैर्विकसितैरथ।
किंचिल्लक्षितदन्तं च हसितं तद् विधीयते॥१२॥

विदूषकः—किं खलु दृष्टमात्रेण तवाङ्कमारोहतु। तथा च तत्प्राप्तौ व्यव-सायमाचरेति तात्पर्यार्थः। मिथःप्रस्थाने परस्परगमने मिथो रहसि वा। "मिथोऽन्योन्यं रहस्यपि"इत्यमरः। दर्भाङ्कुरेण कुशाङ्कुरेण। "अस्त्री कुशं कुशो दर्भः" इत्यमरः। अकाण्डे अनिमित्तम्। द्रुमाणां शाखास्वसक्तमसंबद्धम्।

व्याजादेतन्मय्यनुरागेण विलम्बनिमित्तं कृतवतीति भावः ॥ १३ ॥

विदूषकः–गृहीतपाथेयो भवान् कृतस्तया। अनुरञ्जितं त्वया तपोवनमिति तर्कयामि। व्यपदेशेन व्याजेन। कोऽपरो व्यपदेशः। ननु भवान् राजा। नीवारषष्ठभागं मे तापसा उपहरन्त्विति। निर्वापयन्ति प्रयच्छन्ति। वर्णेभ्यो ब्रह्मक्षत्रविट्शूद्रचतुर्वर्णेभ्यः। तत् फलमर्थरूपं क्षयि विनाशि। तपःषड्भागं तपसः षष्ठमंशमक्षय्यमविनाशि। अरण्यवासिनस्तपस्विनः ॥ १४ ॥

नेपथ्ये यवनिकान्तरितदेशे। हन्त हर्षे। सिद्धार्थौ सिद्धप्रयोजनौ स्वः प्रभवाव आवामिति शेषः। दौवारिकवाक्ये। जयति जयति भर्त्ता। एतौ द्वौ ऋषिकुमारकौ प्रतीहारभूमिमुपस्थितौ। अविलम्बं शीघ्रम्। यद्देव आज्ञापयति। ऋषिभ्यां सह प्रविश्य दौवारिको वदति—इत इत एतमागच्छतम्। एको ऋषिकुमारः—विश्वसनीयता सौम्यता। अमुना राज्ञा। सर्वभोग्ये आश्रमे गार्हस्थ्ये। अयं राजा संचिनोति वर्त्तुलीकरोति। अस्यापि राज्ञो राजपूर्वो मुनी राजमुनिरिति पुण्यः शब्दो मुहुर्वारं वारं द्यामाकाशं स्पृशति। वशिनो जितेन्द्रियस्य। चारणद्वन्द्वेन नर्तकमिथुनेन गीतः ॥ १५ ॥

द्वितीय ऋषिपुत्रो वदति इत्यर्थः। बलभित्सख इन्द्रसखः। राजाहः–सखिभ्यष्टच् इति टच् समासान्तः। नैतद्चित्रमिति—तन्न चित्रमद्भुतं यदयं राजा एकोऽद्वितीयः श्रेष्ठो वा कृत्स्नां समस्तां धारित्रीं पृथिवीं बिभर्ति। अत्रोत्तरार्धवाक्यार्थो हेतुः। समितिषु सङ्ग्रामेषु अधिज्यो दत्तप्रत्यञ्चिकः। पौरुहूते इन्द्रसंबन्धिनि ॥ १६ ॥

अभ्यर्थयन्ते प्रार्थयन्ते। तत्रभवतो मान्यस्य। कुलपतेस्तपस्विवर्गमुख्यस्य। ······नोऽस्माकम्। अनुगृहीत इत्युभावुद्दिश्य विनयवचः। अथ शकुन्तलादर्शनप्रकारलाभाभिप्रायादिति भावः। विदूषकः—अपवार्य निभृतम्। अयमिदानीं तेऽनुकूलो गलहस्तः। उपस्थापय उपस्थितं कुरु। दौवारिकः—यद्देव आज्ञापयति। आपन्नानां आपद्गतानां। "आपन्न आपद्प्राप्तः स्यात्"इत्यमरः। भयात् त्राणे रक्षणे। दीक्षिताः रक्षणरूपव्रतिनः ॥ १७ ॥

विदूषकः—प्रथममनपबाधमासीत्, साम्प्रतं राक्षसवृत्तान्तेन सापबाधं कौतूहलमित्यनुषङ्गः। एष तव रक्षीभूतोऽस्मि। दौवारिकः—सज्जो रथो वर्तते

भर्तुर्विजयप्रस्थानमपेक्षमाणः। साम्प्रतं पुनरेष नगराद्देव्या अनुप्रेषितः करभक आगतः। राजा—अज्जूभिर्मातृभिः। "नाट्योक्तौ गणिकाऽज्जुका"इत्यत्रामरव्याख्याने, अज्जुं मातरं कायति, वेश्या हि मातृत्वे व्यवस्थापितां कुट्टिनीं पुरुषानुसरणे शब्दयतीति श्रीकरलिखनादज्जूशब्देन माताऽवगम्यते। अथ किम्। "अथ किं स्वीक्रियाज्ञापे"इति भरतः। करभक एष भर्ता। तदुपसर्प। करभकः—उपसृत्य संनिधानं गत्वा प्रणम्य—जयति जयति भर्ता। देव्य आज्ञापयन्ति। किमाज्ञापयन्ति? आगामिनि चतुर्थदिवसे पुत्रपिण्डपर्युपासनी नाम उपवासो भविष्यति। तत्र दीर्घायुषाऽवश्यं वयं संभावयितव्या इति। पुत्रपिण्डपर्युपासनं पुत्रशरीरप्रजनव्रतं पुतरजेति प्रसिद्धम्। "पिण्डो बले देहमात्रे निवापे च निगद्यते"इति मेदिनीकरः। विदूषकः—विहस्याकुञ्चिताक्षिगण्डादि यथा स्यादेवं हसित्वा—भो त्रिशङ्कुरिवान्तरा तिष्ठ। यथा त्रिशङ्कुः स्वर्गमर्त्ययोरन्तरा मध्येऽन्तरीक्षे स्थितस्तथा त्वमपीत्यर्थः। यथाह—"त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपि"इति। कृत्ययोः कर्तव्ययोः। मनः कर्तृ। द्वैधीभवति इत्यत्र अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विरिति च्विप्रत्ययान्तः। पुरोऽग्रे। शैले पर्वते। स्रोतोवहां नदीनाम्। "स्रोतस्वती द्वीपवती स्रवन्ती निम्नगाऽपगा" इत्यमरः। क्विप्प्रत्ययान्ततया हलन्तत्वम्। स्रोतः प्रवाहः। "स्रोतोऽम्बुसरणं स्वतः" इत्यमरः॥ १८॥

आवेद्य बोधयित्वा। तत्रभवतीनां मान्यानाम्। पुत्रकार्यं पुत्रकर्तव्यमनुष्ठातुं कर्तुम्। विदूषकः—भो मा राक्षसभीरुकं मामवगच्छ। तेन हि यथा युवराजानुरूपेण गन्तव्यं तथा गमिष्यामि। अनुयात्रिकान् पश्चादनुगामिनः सैनिकानिति यावत्। तेन हि युवराजोऽस्मि संवृत्तः। इमां प्रार्थनां शकुन्तलाविषयिणीं अन्तःपुरेभ्यो वधूभ्यः। क्व वयमिति। अत्यन्तासम्भवे द्वौ क्वौ प्रयुज्येते। परोक्षमन्मथोऽज्ञातकामः। मृगशावैर्हरिणशिशुभिः। जनः शकुन्तलारूपः। परिहासविजल्पितं कौतुकोक्तम्। परमार्थेन तत्त्वेन॥१९॥ एवमेव॥



इति श्रीनरहरिविरचिताभिज्ञानशकुन्तलटिप्पण्यां

द्वितीयोऽङ्कः॥

# ३

ततः प्रविशति यजमानशिष्यो वदति चेत्यन्वयः। तत्रभवति मान्ये। निरुपप्लवानि निर्विघ्नानि। व्यपोहति दूरीकरोति ॥ १ ॥

आकाशे लक्ष्ये बद्ध्वेतियोज्यम्। उशीरानुलेपनं वीरणमूलानुलेपनम्। मृणालं बिसं तद्वन्ति तद्युक्तानि नलिनीदलानि पुटकीपत्राणि। शरीरनिर्वापणाय शरीरस्वास्थ्याय। उच्छ्वसितं प्राणाः। वैतानं यज्ञभवम्। शान्त्युदकं शान्तिकारकं जलम्। इति निःक्रान्तः। प्रवेशकः।

विटतापसविप्राद्यैर्मुनिकञ्चुकिभिस्तथा।
प्रवेशकमपीच्छन्ति सन्तः संस्कृतभाषिभिः॥
अङ्कानामन्तराले तु संक्षिप्तार्थः प्रयोक्तृभिः।
भृत्यद्वयकथाबद्धः कर्त्तव्यस्तु प्रवेशकः॥

प्रवेशयतीति प्रवेशको एयन्तात् एवुला साधितत्वादङ्केषु प्रधानपात्रप्रवेशसूचक इति।

❀ ❀ ❀ ❀

तपसो वीर्यमिति बलाद्ग्रहणे भयसूचनाय। बाला षोड़शवर्षाभ्यन्तरवयस्का। "बालेति गीयते नारी यावत् षोड़शवत्सरम्"इति भरतः। स मदनावस्थ इत्यत्रोद्वेगरूपा पञ्चमी कामावस्था। यदाह भरतः—"उद्वेगः पञ्चमे प्रोक्तः" इति। परवती परायत्ता। ततः शकुन्तलातः॥ २ ॥

और्वो वड़वानलः॥ ३ ॥

तामधिकृत्येति अभिमतत्वे हेतुः॥ ५ ॥

अनुक्रोशः साक्षेपक्रोधः। सङ्कल्पशतैः मानसकर्मशतैः इच्छाभिरिति यावत्। "सङ्कल्पः कर्म मानसम्"इत्यमरः। अभीक्ष्णं वारंवारम्। मय्येव युक्तमित्यस्याभिप्रायो नान्यस्मिन्निति॥ ६ ॥

ऋते विना । शरण्यं शरणार्हं रक्षकमिति यावत् । बालपादपवीथ्या बालवृक्षपंक्त्या । "वीथ्यालिरावलिः पंक्तिः"इत्यमरः । तत्रभवती शकुन्तला न चिरं गता अचिरगतेत्यर्थः । अत्र हेतुरग्रिमपद्यम् ।

न संमीलन्ति न संकुचन्ति । बन्धनं वृन्तं तस्य कोषा अभ्यन्तराणि । "वृन्तं प्रसवबन्धनम्"इत्यमरः । किसलयच्छेदाः छिन्नपल्लवखण्डाः ॥ ७ ॥

प्रवातः प्रकृष्टो वातः । वायुर्गुणत्रयवान् कविभिर्वर्ण्यते । तत्रारविन्दसुरभिरिति मृदुः सुरभिः । कणवाहीत्यनेन शीतलो ज्ञेयः । तथा च कविकण्ठहारे—

शैत्यं च मान्द्यं च सुगन्धिता च ख्याता समीरस्य गुणास्त्रयस्ते ।

सर्वे तु तस्मिन् समवायिनोऽमी मुख्येन गौणेन च योजनीयाः॥इति॥७॥

नेत्रनिर्वाणं नेत्रसुखम् । सख्यौ प्रियंवदानुसूये । हला शकुन्तले ! अपि सुखायते ते नलिनीपत्रवातः । शकुन्तला शून्याभिनयं अज्ञातवीजनं यथास्यादेवं किं वीजयतः प्रियसख्यौ ?

साबाधं सपीडम् । यद्यपि न तु ग्रीष्मस्यैतद्युवतिषु सुभगमपराद्धं तथा च कामस्यैव विजृम्भितमेतदिति भावः ॥ १० ॥

अनुसूया—हला शकुन्तले अनभ्यन्तरे आवां मदनगतस्य वृत्तान्तस्य । किंतु यादृशी इतिहासकथासु 'कामिजनानामवस्था श्रूयते तादृशी तवापि इति तर्कयामि । "इतिहासः पुरावृत्तम्"इत्यमरः । तत् कथय किं निमित्तं ते आयास इति । विकारं परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य । तर्क ऊहः मदीय इति भावः ।

शकुन्तला—आत्मगतमनन्यप्रकाशम् । बली महान् मे आयासः न सहसा शक्नोमि निवेदयितुम् । प्रियंवदा—सखि सुष्ठु खल्वेषा भणति । तत् किमात्मनोऽङ्गमुपेक्षसे । अनुदिवसं परिहीयसेऽङ्गेषु । लावण्यमात्रकच्छायं न मुञ्चसि ।

राजवाक्ये—अवितथं स्वरूपम् । तथा हीत्युपदर्शने । क्षामेति । अस्याः शकुन्तलायाः क्षामक्षामकपोलं अतिकृशकपोलं आननं मुखम् । उरो हृदयं काठिन्ययुक्तस्तनं कठिनतया सहितौ स्तनौ यत्र स तथा । मध्योऽवलग्नः क्षीणतरोऽतिक्षीणः । प्रकामविनतावतिमात्रनम्रौ अंसौ बाहूमूले । छविः कान्तिः

पाण्डुरा धूसरा। शोच्या च प्रियदर्शना चेत्यत्र चकारद्वयमुभयप्राधान्य-द्योतकम्। पत्राणां शोषणेनापनायकेन मरुता वायुना माधवी वासन्ती "माघए" इति प्रसिद्धा। "वासन्ती माधवी लता" इत्यमरः ॥११॥

शकुन्तला—निःश्वस्य निःश्वासं त्यक्त्वा—कस्य वान्यस्य कथयितव्यम्। किन्तु आयासकर्त्री युवयोर्भविष्यामि। उभे प्रियंवदानुसूये—सखि अत एवा-वयोर्निर्बन्धः। विभक्तं खलु दुःखं सह्यवेदनं भवति। न न वक्ष्यति अपि तु वक्ष्यत्येव। द्वौ निषेधौ प्रकृत्यर्थं गमयतः। द्वितीयनिषेधस्य प्रथमनिषेधनिषे-धकत्वादिति। आधिर्मानसी व्यथा तद्धेतुं तत्कारणम्। "पुंस्याधिर्मानसी व्यथा" इत्यमरः। "हेतुर्ना कारणं बीजम्" इति च। विवृत्य पूर्वमेव वदनं परिवृत्य ॥ १२ ॥

शकुन्तला—यतः प्रभृति स तपोवनरक्षिता राजर्षिर्दर्शनपथं गत इत्यर्धोक्ते व्रीडां नाटयतीत्यत्रात्यन्तानुरागप्रकाशनमेव हेतुः। "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः। उभे—कथयतु कथयतु प्रियसखी। तत आरभ्य तद्गतेना-भिलाषेण एतावदवस्थास्मि संवृत्ता। उभे—दिष्ट्या इदानीमनुरूपस्तेऽभि-निवेशः। दिष्ट्या भाग्येन। अथवा सागरं वर्जयित्वा कुतो महानद्यावसर्त-व्यम्। राजवाक्ये—स एव स्मरः निर्वापयिता सुखहेतुरेतस्यां मद्विषय-काभिलाषजनकत्वादिति। अभ्रं मेघस्तेन श्यामं नीलः। "अभ्रं मेघो वारिवाहः" इत्यमरः। तपात्यये ग्रीष्मापगमे वर्षासु। "निदाघ उष्णोपगम उष्ण उष्मा-गमस्तपः" इत्यमरः ॥ १३ ॥

शकुन्तला—यदि युवयोरनुमतं तदा तथा प्रवर्त्तेथां यथा तस्य राजर्षेरनु-कम्पनीया भवामि। अथान्यथा तत् प्रसीदतं सिञ्चतमिदानीं मे उदकम्। मद-नानलात् मम प्राणहानमेव निस्तारायेति तात्पर्यम्। राजवाक्ये—विमर्षच्छेदि संशयापनायकम्। प्रियंवदा—जनान्तिकं शकुन्तलां मुञ्चयित्वा अनुसूयां लक्षीकृत्येत्यर्थः। अनुसूये दूरगतमन्मथाक्षमा इयं कालहरणस्य। अनुसूया-अत्र क उपायो भविष्यति येन सख्या अविलम्बितं निभृतं च मनोरथं सम्पा-दयावः। अविलम्बितं शीघ्रम्। प्रियंवदा—निभृतमिति प्रवर्तितव्यं, शीघ्रमिति न दुष्करम्। अनुसूया—कथमिव। प्रियंवदा—ननु सोऽपि राजर्षिरेतस्मिन्

तपोवने स्निग्धदृष्टिसूचिताभिलाष एतेषु दिवसेषु प्रजागरणकृश इव लक्ष्यते। राजवाक्ये अशिशिरतरैरत्युष्णैः। निशि निशि प्रतिरात्रम्। भुजन्यस्तो योऽपाङ्गो नेत्रप्रान्तस्तेन प्रवर्त्तिभिः। मणिबन्धनात् करमूलात्। कनकवलयं सुवर्णकङ्कणं प्रतिसार्यते उपरि नीयते ॥ १४ ॥

प्रियंवदा—हलाऽनुसूये मदनलेखोऽस्य क्रियताम्। कृत इत्यध्याहारादेतन्निमित्तमित्यर्थः। तमहं सुमनोगोपितं कृत्वा देवताव्यपदेशेन तस्य राजर्षेर्हस्ते पातयिष्यामि। सुमनः पुष्पम्। व्यपदेशो व्याजः। अनुसूया—सखि रोचते मे सुकुमार एष प्रयोगः। किं वा शकुन्तला भणति? शकुन्तला—सख्या नियोगोऽपि विकलयते। प्रियंवदा—तेन ह्यात्मन उपन्यासानुरूपं चिन्तय किंचिल्ललितपदनिबन्धितां गीतिकाम्। शकुन्तला—अहं चिन्तयिष्यामि किं तु अवधीरणाभीरुकं वेपते मे हृदयम्। अवधीरणा अवलेपो राजकृतः ततो भीरुकं सभयम्। राजवाक्ये अयमिति—अवधीरणाभावद्योतकं पद्योत्तरार्धम्। प्रार्थयिता याचकः श्रियं लक्ष्मीं लभेत वा न वा। अन्यथा पुनः श्रियो लक्ष्म्या दुरापोऽर्थाद् याचकः कथं भवेदपि तु लक्ष्म्या न याचकदैन्यं किन्तु याचकस्य लक्ष्मीप्राप्तौ संशयो भवति। एवं त्वत्तो ममावधीरणाशङ्का भवति न मत्तो भवत्या इति ॥१ ॥

सोऽयमुपस्थितः। प्रणयेन प्रेम्णा उत्सुक उत्कण्ठितः। रत्नं कर्तृ नान्विष्यति जनमित्यर्थात्। तत् रत्नमेव कर्म। हि यतः ॥१६॥

सख्यौ—आत्मगुणावमानिनि को नाम संतापनिवारणकर्त्रीं शारदीं ज्योत्स्नामातपत्रेण छत्रेण वारयिष्यति। शकुन्तला—सस्मितं सेषद्धासम्। स्मितं तूत्तमजनकर्तृकमेव। यदाह भरतः—

> ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।
> अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत् ॥

नियोजितास्मि। पदानि गीतपदानि। सखि चिन्तिता मया गीतिका। असंनिहितानि पुनर्लेखसाधनानि। लेखसाधनानि मसीपत्रादीनि। प्रियंवदा—शृणुवस्तावदस्या गीतिकाया अक्षराणि। ततोऽस्मिन् सुकठोरस्निग्धनलिनीपत्रे पत्रच्छेदभक्त्या नखैर्निक्षिप्तवर्णां करिष्यसि। साम्प्रतं पठ्यतां तावत्। शकु-

न्तला—शृणुतं तावदेनां विशदार्थास्ति न वेति । विशदार्था स्पष्टार्था । उभे-अवहिते स्वः । शकुन्तला पठति—

तव न जाने हृदयं मम पुनर्मदनो दिवा च रात्रौ च ।
निष्कृप तपति बलवत् त्वयि कृतमनोरथानि अङ्गानि ॥

लेखप्रस्तावना तु नार्या भावप्रकाशिका । यदाह कविकण्ठहारे ।

लेखप्रस्तावनैः स्निग्धैरीक्षितैर्मृदुभाषणैः—
दूतीसंप्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते ॥ इति । १८ ॥

सख्यौ—प्रियंवदानुसूये-विलोक्य राजानमित्यर्थात् । स्वागतं यथाचिन्तित-फलस्याविलम्बिनो मनोरथस्य । शकुन्तला आत्मगतमनन्यप्रकाशम् । हृदय तथा उत्तम्य इदानीं न किंचिदुपपद्यसे । राजवाक्ये- तं तव गात्राणि शरीराणि उपचारमभ्युत्थानार्घ्यदानादिरूपं नार्हन्ति मत्कृत इति शेषः ॥ २० ॥

अनुसूया—इमं शिलातलैकदेशमलंकरोतु वयस्यः । प्रियवयस्यः प्रियः सखा यद्वा प्रियायाः सख्या वयस्यः सखा अयमिति प्रियवयस्यः । अथ च प्रियाप्रियविषयिणी वयस्या मत्सखी यस्येति ध्वनिः । कश्चित् कामप्रवेदने । प्रियंवदा—लब्धौषध इदानीमुपशमं गमिष्यति । अनुसूया—जनान्तिकं प्रियं-वदया सममन्योन्यं यथास्याद्‌वम् । प्रियवदे—प्रेक्षस्व तावत् मेघवाताहतामिव ग्रीष्ममयूरीं निमेषान्तरेण प्रत्यागतप्राणां प्रियसखीम् । प्रियंवदा—महाराज द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति । अनुसूया—आश्रमवासिना जनेन राज्ञोऽन्तःपुरेण भवितव्यमिति न एष धर्मः । विवक्षितं वक्तुमाकाङ्क्षितम् । अस्मात् उक्तात् परमन्यत् किं तत् वक्तव्यमित्यर्थः । प्रियंवदा—तेन हि इयं नः प्रियसखी त्वामेवोद्दिश्य भगवता मकरकेतुना इमामवस्थां प्रापिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् । शकुन्तला सोपालम्भमाह—अलं युवयोरन्तःपुरविरहपर्यु-त्सुकेन राजर्षिणाऽवरुद्धेन । राजवाक्ये—हे मदिरेक्षणे मनोहरनयने ममेदं हृदयं अनन्यपरायणं त्वद्गतं अन्यथा अन्यपरायणमन्यगतं यदि समर्थयसे जानासि तदा मदनबाणहतोऽप्यहं पुनर्हतः स्यामिति योजना । तथा चाभि-हतस्य हननं बृहज्जनस्य न योग्यमिति भावः ॥ २१ ॥

अनुसूया—वयस्य बहुवल्लभा राजानो भवन्ति। तद्यथा नः प्रियसखी अन्यजनशोचनीया न भवति तथा निर्वाहयिष्यसि। बन्धुजनेति क्वचित् पाठे बन्धुजनशोचनीया इति बोद्धव्यम्। परिग्रहबहुत्वेऽपि पत्नीबहुत्वेऽपि। समुद्रो वसनं वस्त्रं यस्या उर्व्याः तथा चासमुद्रान्ता पृथिवी शकुन्तला च। इमे द्वे मे कुलप्रतिष्ठे इति योजना। शकुन्तलापक्षे समुद्रवसना सचिह्नवसना। यद्वा विरहसहितचिह्नवसना। यद्वा मुद्रा अङ्गुरीयकं तत्सहितवस्त्रा। यद्वा समुद्रे वसतिर्यस्याः सेयं लक्ष्मीः। यद्वा मुदं हर्षं राति ददाति मुद्रम्। मुद्रं च तत् वसनं चेति मुद्रवसनं तेन सह वर्तते समुद्रवसना हर्षदवस्त्रसहितेत्यर्थः। यद्वा हर्षदावस्थानसहिता। रा दाने धातुः। "परिग्रहः कलत्रे च मूलस्वीकारयोरपि"इति मेदिनिकरः। अनुनयोऽयमलंकारः। तथा च कविकण्ठहारे—

वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः। इति॥ २२॥

उभे—निर्वृत्ते स्वः। शकुन्तला—जनान्तिकं राजानमपवार्य-सख्यौ मर्षयतं लोकपालम्। यदस्माभिर्विश्रम्भपरवतीभिरुपचारातिक्रमेण भणितं तन्मृष्यतामिति। उपचारातिक्रमेण अवधीरणेत्यादिना निष्कृपेत्यादिना च। सख्यौ—सस्मितं सेपद्धासं येन त्वया मन्त्रितं स एव मर्षयतु। अन्यस्य जनस्य कः प्रत्ययः। येनेति सहार्थे तृतीया। शकुन्तला—अर्हति खलु महाराज इममयुक्तवचनं सोढुम्। परोक्षं तावत् किं न मन्त्र्यते। राजवाक्ये—अङ्करेचितार्द्धे शरीरसक्तार्घे कुसुमास्तरणे पुष्पशय्यायाम्। अवकाशं शयनार्थमित्यर्थात्। सुजनो हि स्वसंकोचमपि विधाय परोपकारं करोतीति भावादाह सुजनत्वादिति। स्वजनत्वादिति पाठे तवाहं स्वः स्वकीयो जन इति यद्यवकाशमनुमन्यसे स्वीकुरुष इत्यर्थः॥ २३॥

प्रियंवदा-नैतावन्मात्रेण परितुष्टिर्भविष्यति। शकुन्तलां राजानं चोद्दिश्य। शकुन्तला—विरम दुर्ललिते। एतावदवस्थां गतयापि मया क्रीडसि त्वम्। एतावदवस्थां परायत्तिं अथच......तथा चेदानीमत्र स्थित्वा मया सह क्रीडां कर्त्तुं न युज्यते भवत्या। अहं प्राप्ताभिलाषा। तत् त्वं बहिर्गच्छेति भावः। विदिताभिप्राया अनुसूया निर्जनदानाय सकपटमाह—बहिर्बाह्यमवलोक्य-एष तपस्वी मृगपोतक इतस्ततो दत्तदृष्टिर्नूनं यूथात् परिभ्रष्टः पर्युत्सुको मातरमनु-

संधत्ते, तत् संयोजयामि तावदेनम्। तपस्वी वराकोऽनुकम्प्यः मृगपोतो हरिणबालकः। प्रियंवदा स्वगमनाय व्याजमाह—सखि चपलः खल्वेष दुर्विनीतः। न एनं योजयितुमेकाकिनी पारयसि। तदहमपि सहायत्वं करिष्ये। शकुन्तला—सख्यौ न युवयोर्गमनमनुमन्ये। असहायिन्यस्मि। उभे—प्रियंवदानुसूये—त्वमिदानीमसहायिनी यस्याः पृथिवीनाथः समीपे वर्त्तते। शकुन्तला—कथं गते प्रियसख्यौ। सखीभूमौ सखीस्थाने उत पद्मान्तरे संवाहयामि मर्दयामि ॥ २४ ॥

शकुन्तला—न माननीये जने आत्मानमपराधयिष्यामि। णिच्। अपरिनिर्वाणो मध्याह्नत्वात्। शकुन्तला—मुञ्च मुञ्च। न खल्वहमात्मनः प्रभवामि पितुरायत्तत्वात्। यद्वा भवत एवेदानीं प्रभवतृत्वादिति भावः। अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि। ताभ्यामपि त्यक्ता। हृदये स्वीकार एव। अथ च ताभ्यां यत् कार्यते तत् करणे न मे दोष इति रहस्यम्। धिगिति श्रुत्वा राज्ञः प्रकृते प्रशिथिलत्वशङ्काव्युदासायाह—न खल्वहं महानुभावं भणामि। दैवमुपालभे। शकुन्तला—कथमिदानीं नोपालप्स्ये यदात्मनोऽनीशां मां परगुणैः प्रलोभयति। राजा स्वगतमनन्यप्रकाशम्। दयितप्रार्थनासु दयितकर्तृकप्रार्थनासु प्रतीपा विपरीताः। व्यतिकरसुखं संबन्धसुखम्। कातराः कुटिलाः। स्वाङ्गदाने परिरम्भादौ स्वसमर्पणे। लब्धान्तरत्वात् लब्धावकाशत्वात् कालातिक्रमात् न तु कर्त्तव्यकाले ॥ २६ ॥

शकुन्तला—पौरव रक्षाविनयम्। इतस्ततः ऋषयः संचरन्ति। अविनयं मदतिक्रमरूपम्। रक्ष न कुर्वित्यर्थः। ऋषय इत्येतावता तत्संचारेऽवहितो भवेति हृदयमभ्युपगम एव ध्वनितं भवति। इति श्रूयते। इति किं? बहवो मुनिकन्यका गान्धर्वेण विवाहेन परिणीता विवाहिताः अथानन्तरं ताश्च पितृभिरनुमोदिताः पश्चात् स्वीकृताः। आख्याननामायमलंकारः। यदाह कविकण्ठहारे—आख्यानं यत्र दृष्टान्तात् पुरावृत्तस्य कीर्तनम् इति। "गान्धर्व उभयो रागात्"इति स्मृतिः ॥ १७ ॥

शकुन्तला—पौरव अनिच्छापूरकोऽपि क्षणमात्रपरिचितोऽप्ययं जनो न विस्मर्त्तव्यः। त्वं दूरेति न जहासि न त्यजसि। केव, वनस्पतेर्वृक्षस्य पुरो

मूलं पूर्वदिगवस्थितमूलं दिनावसानच्छायेव । इवशब्दो यथार्थे । "वृक्षमात्रे वनस्पतिः" इत्यमरः ॥ २८ ॥

शकुन्तला—आत्मगतमनन्यप्रकाशम् । हा धिक् । इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः । भवत्वेभिः पर्यन्तकुरवकैरपवारितशरीरा प्रेक्षिष्ये ताव-दस्य भावानुबन्धम् । बन्धनं वृन्तम् ॥ २९ ॥

शकुन्तला—न मेऽस्ति विभवो गन्तुम् । मृणालवलयं मृणालकृत-कङ्कणम् ॥ ३० ॥

अम्मोशब्द आश्चर्यवाची । दौर्बल्यशिथिलतया दोर्वल्लिशिथिलतया वा परिभ्रष्टमेतत् मृणालवलयं न मया विज्ञातम् । "दोर्दोषा भुजा भुजः" इत्यमरः । राजवाक्ये—हे प्रिये ते तवानेन लीलावलयेनैष जनो मद्रूपः समाश्वासितः । कीदृशेन, अचेतनेनापि सता श्रेष्ठेन । तु पुनस्त्वया चेतनयापि न समाश्वासित इत्यभिप्रायः ॥ ३१ ॥

शकुन्तला—अतोऽपरमपि न समर्थास्मि श्रोतुम् । भवत्वनेनैव व्यपदेशेन आत्मानं दर्शयिष्यामि । व्यपदेशेन व्याजेन । परिदेवितानन्तरं विलापा-नन्तरम् । "विलापः परिदेवनम्" इत्यमरः । पक्षिणा चातकाख्येन । अस्य च चातकस्य । धारा जलधारा ॥ ३२ ॥

आर्य अर्धपथे स्मृतं मया । एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते आगतास्मि । आख्यातमिव मम हृदयेन त्वया गृहीतमिति । तन्निक्षिप एतं न्यासम् । मा मामात्मानं च मुनिजने सूचयिष्यसि । तथा च…ज्ञास्यतीति ध्वनितम् । ननु भण । स्वगतमनन्यप्रकाशम् । का खलु गतिः । प्रकाशम्, एवं कुरु । इत्युपसर्पति संनिधानं गच्छति । प्ररोहोऽङ्कुरः । किंस्वित् वितर्के । काम-तरोर्मदनद्रुमस्य । अयं हस्तः ॥ ३३ ॥

त्वरतां त्वरतामार्यपुत्रः । आर्यपुत्रशब्दो वल्लभे वर्त्तते । यथा ते रोचते । श्यामलता सओलए इति प्रसिद्धा । उज्झिताम्बरस्त्यक्ताकाशः ॥ ३४ ॥

शकुन्तला—न तावदेनं प्रेक्ष्यामि । पवनकम्पिना कर्णोत्पलरेणुना कलुषी-कृता मे दृष्टिः । अनुकम्पिता भवेयम् । न पुनस्ते विश्वसिमि । एतावन्मात्रकं रजोऽतिक्रमाकरणं च । अथ च एतत्करणेऽपि न विश्वसिमि । अथ चाग्रे

उत्तरमपि तथैव बोद्धव्यम्। शकुन्तला–अयमेव ते अत्युपचारोऽविश्वासजनकः। अत्रापि तथैव। उत्तरमपि तथैव। हर्षास्तु अन्यथा समर्थयते—अलमस्मद्-विनयाशङ्कया मत्तोऽविनयसंभोगरूपस्तदाशङ्कया। चारुणेति। अयं प्रिया-धरो ममानुज्ञां स्वीकारं स्फुरितेन कम्पेन ददातीव। इवशब्द उत्प्रेक्षायाम्। पिपासतः पिपासावतः। अपरिक्षतत्वेन किणाभावात् कोमलः। प्रतिमुखसन्धौ नाट्यालंकारे विलासनामायमलंकारः। यदाह कविकण्ठहारे—"संभोगो रति-संपन्नो विलास इति कीर्त्यते" इति ॥ ३५ ॥

फूत्कारविलम्बादाह शकुन्तला—प्रतिज्ञामन्थर इवार्यपुत्रः। प्रकृतिस्थित-दर्शना संवृत्तास्मि। अहं नवसंगमतया पुनरनुपकारिणी मम मुखाघ्राणादेवो-पकारस्य जातत्वात्। पुनरुपकारे समर्थसंगमरूपं न करिष्यामीत्याशयेनाह शकुन्तला—लज्जे खलु पुनः अनुपकारिणी प्रियकारिण आर्यपुत्रस्य। त्वमप्यु-पकारिणीत्याह राजा—इदमित्यादि। निदर्शनमाह—कमलस्य पद्मस्य गन्ध-मात्रेण सौरभमात्रेण मधुकरो भ्रमरः तु पुनः न संतुष्यति, अपितु तुष्यत्येव। तथाहमपि भ्रमरः कामी त्वन्मुखकमलसौरभलाभादेव संतुष्ट इति भावः। एतेन पद्मिनीत्वं सूचितम्। यद्वा इदमप्येतदपि उपकारपक्ष एव। तु पुनर्मधुकरो भ्रमरः कमलस्य गन्धमात्रेण न तुष्यति न संतोषं यात्यपि तु मधुपानादिक-मप्यर्थयते इति भावः ॥३६॥

शकुन्तला—असंतोषे पुनः किं करोति? राजा—इदमिदमिति परिरम्भा-धरपानादि इति कृत्वा व्यवसायं यत्नं यातः प्राप्तः। शकुन्तला कर्त्री वक्त्रं वदनं ढौकते पिधत्ते। अनेकार्था हि धातव इत्यनुसारात्। अत एवावृते वस्तुनि ढाकनेति देशिभाषा प्रसिद्धैव। एतद्देशेऽपि मृद्घटितपिधायकपात्रस्य ढाकन इति नाम। ढौकृ चुम्बन इति धात्वनुसारेण चुम्बतीति नार्थः। मुहुरङ्गुलि-संभृताधरौष्ठमिति पुरःस्थितश्लोकेनाङ्गुलिपिधानस्य बोधनात् चुम्बनस्य चाकृत-त्वबोधनाच्च। किं च नृत्यभूमौ चुम्बने भरतविरोधोऽपि। तथा हि—

न कार्यं शयनं रङ्गे नाट्ययोगमपेक्षता।
केनचिद् व्यपदेशेन तद्विच्छेदं च कारयेत् ॥
यदि स्वपेदर्थवशात् पुरुषः सहितः स्त्रिया।
न तत्र चुम्बनं कुर्यान्निर्व्याजालिङ्गनं न च ॥ इति ॥

नेपथ्ये यवनिकान्तरितदेशे। अयि चक्रवाकवधूः आमन्त्रय सहचरम्। उपस्थिता रजनी। शकुन्तला—आर्यपुत्र एषा मम वृत्तान्तोपलम्भनिमित्तं तातकण्वस्य धर्मकनीयसी आर्या गौतमी आगता। तद्विटपान्तरितस्तावद् भव। गौतमी—जाते हे पुत्रि शान्त्युदकम्। कुतस्तिष्ठसि ? दृष्ट्वा निरीक्ष्य, अत्याहितमेकाकिनी देवतासहायिनी तिष्ठसि। शकुन्तला—इदानीमेव प्रियंवदाऽनुसूयया मिश्रा मालिनीमवतीर्णा। गौतमीवाक्ये, अपि लघुसंतापानि तेऽङ्गानि। कथमस्ति विशेषः ? शकुन्तला—अद्यास्ति विशेषः। गौतमी—तेन हि निरपबाधा चिरं मे जीव। जाते परिणतो दिवसः। तदेहि उटजमेव गच्छावः। शकुन्तलावाक्ये—आत्मगतमनन्यप्रकाशं यथा स्यादेवं—हृदय प्रथमं सुखोपनते मनोरथे कालहरणं करोषि। साम्प्रतं अन्यथा वर्त्तितस्य कथं संपत्स्यसे। प्रकाशं राजानमप्युद्दिश्य, लतागृहक संतापहारक आमन्त्रये ते पुनरपि परिभोगार्थम्। लतारूपगृह इति व्यक्तोऽर्थः। संगोपने लतागृहक-इत्यादि राजसंबोधनं, तत्पक्षे लता गृहं यस्य स तथा। यद्वा लता अन्या महादेव्यो गृहे यस्य तादृश।

"लताप्रततिमाधव्यो लता प्रियङ्गुशाखयोः।
हस्तिजातिप्रभेदेऽपि लता स्त्रीभेदवाचिका॥" इति धरणिः।

अर्थो वस्तु। अंसविवर्त्ति स्कन्धदेशप्रापितं वक्त्रमिति यावत्। पक्ष्मलाक्ष्याः शकुन्तलायाः। कथमपि कष्टसृष्टया। तदनिर्वचनीयसुन्दरम्॥ ३७॥

शरीरलुलिता शरीरोपभुक्ता॥ ३८॥

रहः प्रत्यासत्तिमेकान्तमिलनम्। प्रकृत्या स्वभावतो दुरवापा दुःखप्राप्याः। हि शब्दो यस्मादर्थे। विषयाः स्रक्चन्दनवनितादयः। विघ्नैर्विरहैस्तद्धेतुभिर्वा क्लृप्तं मूढहृदयं मोहबद्धहृदयमिति पूर्वोक्तम्। गणयति च प्रियायाः प्रत्यक्षं किमपि च वक्तुं (?) तथा तेन प्रकारेण प्रवृत्तावित्यर्थात् कातरमिव॥ ३९॥

सायंतने सन्ध्याकालीने। सवनकर्मणि यज्ञकर्मणि। सन्ध्याकालीनमेघ-समूहपिङ्गलाः पिशिताशनानां रक्षसां छायाः संचरन्ति॥ ४०॥

॥ इति श्रीनरहरिविरचिताभिज्ञानशकुन्तलटिप्पण्यां
शृङ्गाराभिनयो नाम तृतीयोऽङ्कः॥



४

कुसुमावचयं पुष्पत्रोटनम्। अनुसूयावाक्ये—प्रियंवदे यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तलानुरूपभर्तृभागिनी वृत्ता तथापि निर्वृत्तं न मे हृदयम्। एतावदिदानीं चिन्तनीयम्। गान्धर्वविवाहः कामिनो रागकृत एव भवति न तत्र कन्यादानाद्यपेक्षा, "गान्धर्व उभयो रागात्"इत्यष्टविधविवाहप्रकरणे स्मरणादिति। प्रियंवदावाक्ये—किमिव? अनुसूया—अद्य स राजा इष्टिपरिसमाप्त्या ऋषिभिः प्रेषित आत्मनो नगरं प्रविश्य अन्तःपुरं समागत इमं जनं स्मरति न वेति। प्रियंवदा—अत्र तावद् विश्वस्ता भव। नहि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति। एतत् पुनश्चिन्तनीयम्। तात इदानीं तीर्थात् प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति। अनुसूयावाक्ये—यथा मां पृच्छसि तथाऽनुमतं तातस्य। प्रियंवदा—कथमिव? अनुसूया—आवश्यमनुरूपवरस्य कन्यका प्रतिपादनीयेति अयं तावत् प्रथमः संकल्पो मनोरथः, तं यदि दैवमेव संपादयति ननु कृतार्थो गुरुः। प्रियंवदा—एवमेव। अवचितानि वलिकर्मप्रशस्तानि कुसुमानि। "वलिः पूजोपहारे स्यात्"इत्यभिधानम्। अनुसूया—ननु शकुन्तलयापि सौभाग्यदेवता अर्चनीयास्तदपराण्यपि अवचिनुवः। सखि अतिथिनेव निवेदितम्। प्रियंवदा—ननूटज एव संनिहिता शकुन्तला। आमिति स्मरणाभिनये। अद्य पुनरसंनिहिता हृदयेन। अनुसूया—भवतु, कियद्भिः कुसुमैः प्रयोजनम्। आः साक्षेपसंबोधने। विचिन्तयन्तीति—स बोधितोऽपि ज्ञापितोऽपि सन् त्वां न स्मरिष्यति। क इव, प्रथममादौ कृतां कथां प्रमत्त इव। यथा प्रकर्षेण मत्तो जनः प्रथमं मत्ततापूर्वकाले कृतां कथां न स्मरति तथा सोऽपीत्यर्थः। यद्वा सन्नपि पण्डितोऽपीत्यर्थः। "सन् सुधीः कोविदो बुधः"इत्यमरः। स कः, यं विचिन्तयन्ती त्वं मां दुर्वाससं तपोनिधिमुपस्थितमागतं न वेत्सि न जानासि। कथंभूता, अनन्यमानसा तद्गतचित्तेत्यर्थः॥ १॥

उभेऽनुसूयाप्रियंवदे श्रुत्वा शापं विषण्णे स्तः। अनुसूया—हा धिक्। तदेव संवृत्तम्। कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी। विलोक्य पृष्ठतो निरीक्ष्य—सखि न खलु यस्मिन् कस्मिन्नपि वा। एष दुर्वासाः सुलभ-क्रोधो महर्षिरविलम्बं त्वरितया गत्या प्रतिनिवृत्तः। प्रियंवदा—कोऽन्यो हुतवहाद् दग्धुं प्रभवति? तद् गच्छानुसूये पादयोः प्रणम्य निवर्त्तय। यावदस्मै अहमपि अर्घोदकमुपकल्पयामि। प्रियंवदा—अम्मो विस्मये। तथा च भरतः—"विस्मये त्वम्महे अम्मो नित्यं स्त्रीभिः प्रयुज्यते"इति। आवेग-स्खलितायां मम परिभ्रष्टं हस्ताद् पुष्पभाजनम्। अनुसूया—सखि शरीरीव कोपः कस्यापि सोऽननयं न गृह्णाति। किंचित् पुनः सानुकम्पः कृतः। प्रियंवदा—एवं खलु एतदेव तस्मिन् बहुतरम्। तत् कथय कथमिदानीं त्वया स प्रसादितः। अनसूया—सखि यदा निवर्त्तितुं नेच्छति तदा पादयोः प्रणम्य विज्ञापितो मया, भगवन् प्रथमां भक्तिमवेक्ष्याद्य तवाविज्ञातप्रभावपरमार्थस्य दुहितृजनस्य भगवतापराधो मर्षणीय इति। प्रियंवदा—ततस्ततः। अनसूया—ततः स भणति, न मे वचनमन्यथा भविष्यति। किन्तु अभिज्ञानाभरणदर्शनात् शापो निवर्त्तयिष्यत इति मन्त्रयन्नेवान्तर्हितः। प्रियंवदा—शक्यां जानीह्यस्य सिद्धिम्। अस्य शापान्तस्येत्यर्थः। अस्ति तेन राजर्षिणा प्रस्थितेन नामधेयाङ्कितमात्मनोऽङ्गुरीयकं स्मारणीयमिति शकुन्तलायै स्वयं पिनद्धम्। तस्मिन् स्वाधीन उपायो भविष्यति। अनसूया—एहि। देवताकार्यमस्या इदानीं निवर्त्तयावः। प्रियंवदा—विलोक्य पृष्ठतो निरीक्ष्य—अनुसूये प्रेक्षस्व तावद् वामहस्तविनिहितवदनामालिखितामिव प्रियसखीं भर्तृगतया चिन्तया। आत्मानमप्येषा न विभावयति किं पुनरतिथिविशेषम्। अनुसूया—प्रियंवदे द्वयोरेवावयोर्मुखे एष वृत्तान्तस्तिष्ठतु। वृत्तान्तो वार्त्ता। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी। प्रियंवदा—क इदानीमुष्णोदकेन नवमालिकां सिञ्चति।

प्रवेशकस्तु—"असूचितस्य पात्रस्य प्रवेशो नैव विद्यत"इति वचनात्। अङ्केषु प्रधानपात्रप्रवेशं सूचयन्नधमपात्रप्रवेशः प्रवेशकः, प्रवेशयतीति ण्वुला ण्यन्तस्य साधितत्वात्। यदाह—

नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारप्रयोगमासाद्य कर्त्तव्यः ॥

अन्यच्च—

"परिजनकथानुविद्धः प्रवेशको नाम विज्ञेयः ।"

परिजना दासीप्रभृतयः । ते हि कथयानुकथया नायकप्रवेशं सूचयन्ति । प्रायेण चायं प्रवेशको द्वाभ्यां पात्राभ्यां संयोज्यत इति ।

× × × ×

कण्वशिष्यः, अवलोक्य दृष्टिमधस्तात् क्षिप्त्वा हन्त हर्षे । तथाहीत्युपदर्शने । अग्रसन्ध्या प्रातःसन्ध्या कर्कन्धूनामुपरि तुहिनं हिमं रञ्जयतीत्येको वाक्यार्थः । कर्कन्धूः क्षुद्रवदरी नद्यादितीरे विजातीयैव "झलकोलि:" इति प्रसिद्धा । "कर्कन्धूर्वदरी कोलिः"इत्यमरः । दार्भं दर्भनिर्मितं उटजपटलं पर्णशालाप्रान्तम् । "प्रान्ते तु पटलं छदिः"इत्यमरः । वीतनिद्रो अपगतनिद्रः' । स्वाङ्गं स्वशरीरं आयच्छमानः आयतं दीर्घं कुर्वाणः । पश्चाद् भागेनोच्चैर्महान् भवति । यद्वा पश्चादनन्तरमुच्चैर्भवति ॥ २ ॥

पादन्यासं किरणन्यासं क्षितिधरगुरोः पर्वतानां मध्ये गुरोर्महतः मूर्ध्नि शिखरे । क्रान्तं प्राप्तम् । क्षयिततमसा अपसारितान्धकारेण । विष्णोर्मध्यमं धाम आकाशम् । तादृशस्यापि चन्द्रस्य पतने हेतुमाह । महतामपि दुरारोहोऽत्यर्थेनाक्रमणं ऊर्ध्वाक्रमणं वा अपभ्रंशनिष्ठः पतनपर्यवसितो भवति ॥ ३ ॥

एकतः एकत्र । आद्यादिभ्यस्तस्युपसंख्यानमिति सप्तम्यां तसिः । अस्तशिखरमस्ताचलशृङ्गम् । "अस्तस्तु चरमः क्ष्माभृत्"इत्यमरः । ओषधीनां पतिः चन्द्रः । "ओषधीशो निशापतिः"इत्यमरः । आविर्भूतः प्रकाशितोऽरुणोऽनूरुः पुरस्सरोऽग्रगामी येन स यथा । तेजोद्वयस्य चन्द्रस्य सूर्यस्य च यथाक्रमं युगपत् एकदैव व्यसनोदयाभ्यां विनाशोद्भवाभ्यां लोको जनः । "लोकस्तु भुवने जने" इत्यमरः । व्यसनोदयेषु व्यसनेषु उदयेषु च । व्यसनोदययोर्बहुविधत्वेन व्यसनोदयेष्वित्यत्र कोटिद्वयापहारेण बहुवचननिर्देशः ॥ ४ ॥

इष्टः प्रियः स्वामीति यावत् । नूनमुत्प्रेक्षायाम् । तथा च दण्डी—

"शङ्के मन्ये ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

इति। नूनं निश्चये वा। "नूनं निश्चिततर्कयोः" इति कोषात् ॥ ५ ॥

अपटीक्षेपेण पटक्षेपव्यतिरेकेण यवनिकापटधारणक्षेपव्यतिरेकेणाकस्मादित्यर्थः। अनुसूया वदति। एवमपि नाम विषयपराङ्मुखस्यास्य जनस्य एतत् न विदितं यथा तथाविधेन राजर्षिणा शकुन्तलाया अनार्यमाचरितं इति। अनार्यं विस्मरणरूपम्। अनुसूया—ननु प्रभातवेला तन्निद्रां त्यजामि। अथवा प्रतिबुद्धेदानीं किं करिष्ये। न मे उटजादिकार्येषु प्रभातकरणीयेषु हस्तौ प्रसरतः। सकाम इदानीं कामो भवतु येन नः प्रियसखी शुद्धहृदया असत्यसन्धे जने पदं कारिता। असत्यसन्धे असत्यप्रतिज्ञे। "प्रतिज्ञापि च सन्धा स्यात्" इति रत्नकोषः। अथवा न तस्य राजर्षेरपराधः। दुर्वासःशापः खल्वेष प्रभवति। अन्यथा कथमिदानीं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतोऽपि कालस्य वार्त्तामात्रकमपि न विसर्जयति। विचिन्त्य स्मरणकरणार्थमाह—इतोऽभिज्ञानाङ्गुरीयकं विसर्जयामीति। अथवा नित्यदुःखशीले तपस्विजने कोऽभ्यर्थ्यताम्? ननु सखीगामी दोष इति कृत्वा व्यवसिते अपि न पारयावस्तातकण्वस्य दुष्यन्तपरिणीतां आपन्नसत्त्वां गर्भिणीं शकुन्तलां निवेदयितुम्। तस्य विस्मरणं न तद्दोषेण किंतु सखीदोषवशान्मुनिशापेनातः शक्यमेव संघटनमित्याह—सखीदोष इति कृत्वा व्यवसिते इति। तद्दोषे च शकुन्तलाप्रस्थापनमपि विफलमिति किं ताते निवेदितैः। अथ च सखी शकुन्तला तद्गामी दोषः। तस्याः स्वयं प्रवृत्तिः न तु राज्ञा बलाद् रमितम्। राजनि मुनिशापशङ्काभावादिति भावः। अत्र प्रकृतकार्ये किं खल्वस्माभिः करणीयम्, अपि तु सर्वमेव।

प्रियंवदा—अनुसूये त्वरय त्वरय। शकुन्तलायाः प्रस्थानकौतूहलानि क्रियन्तामिति। अनुसूया—साश्चर्यं, सखि कथमिव? प्रियंवदा—शृणु। इदानीमेव सुखसुप्तिकापृच्छानिमित्तं शकुन्तलायाः समीपं गतास्मि। यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्वोऽस्यै एवमभिनन्दति श्लाघते। वत्से दिष्ट्या धूमोपरुद्धदृष्टेर्यजमानस्य हुतवहस्यैव मुखे आहुतिर्निपतिता। राजा वह्निः त्वं चाहुतिरिति। योग्यसमागम एव वृत्त इति तात्पर्यम्। सुशिष्यप्रतिपादितेव विद्या अशोचनीयासि संवृत्ता। सद्भर्तृप्रतिपादिता हि कन्या पितु-

रशोच्या भवतीत्यर्थः। तदद्यैव त्वां ऋषिपरिगृहीतां कृत्वा भर्त्तुः सकाशं विसर्जयामीति। दिष्ट्या भाग्येनेत्यर्थः। अनुसूया—सखि! अथ केनाख्यातस्तातकण्वेऽयं वृत्तान्तः। प्रियंवदा—ननु शून्याग्निशरणं प्रविष्टस्य स्वच्छन्दवत्या वाचा। अग्निशरणमग्निगृहम्। "शरणं गृहरक्षित्रोः" इत्यमरः। स्वच्छन्दवती वाक् आकाशसरस्वती। "गीर्वाग्वाणी सरस्वती" इत्यमरः। होमार्थमग्निगृहप्रवेशेन। क्रोधशून्यत्वं मुनेः सूचितम्। अनुसूया—साश्चर्यं, कथमिव? प्रियंवदा - सखि शृणु। आहितं निषक्तम्। तेजो वीर्यम् भुवो भूतये पृथिव्याः संपत्यर्थम्। "भूतिर्भस्मनि संपदि" इत्यमरः। "शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" इत्यमरः। अवेहि जानीहि। शमीवृक्षः प्रसिद्ध एव। अग्निस्थाने तेजः शमीस्थाने शकुन्तला॥ ६॥

अनुसूया आश्लिष्यालिङ्ग्य—सखि प्रियं मे प्रियम्। किंतु अद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणमस्य ऋषेः परितोषमनुभवामि। प्रियं मे प्रियमेतदुक्तौ त्वन्यकथनादस्मत्कथने(?) तु कदाचित् स्वदोषशङ्कापि स्यात् सरस्वतीकथने न शकुन्तलाकृतं दोषमिति मुनिना गृहीतमयोग्यस्य सरस्वत्या समं तथा कृत्वाऽकथनादिति तात्पर्यम्। ऋषिकर्तृकसंतोषे अस्मदुत्कण्ठा आसीदद्यैव नीयत इति वचनात् सा तथा यथा तथैव(?) मुनेः संतोषः। यद्वा से अस्याः शकुन्तलायाः संतोषमस्मदुत्कण्ठासाधारणम्। अस्मदादेरप्येतादृशः संतोषो भवत्विति भावः। प्रियवदा—उत्कण्ठामपरामपि तत्पुत्रोत्पत्यादौ अथवा तत्प्रस्थाने विनोदयिष्यावः। सा इदानीं तपस्विनी निर्वृत्ता भवतु। सा तपस्विनी अनुकम्प्या शकुन्तला। अनुसूया—तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके तन्निमित्तमेव निःक्षिप्ताः कालान्तरक्षमाः केसरकणास्तिष्ठन्ति ताँस्त्वं नलिनीपत्रगतान् कुरु यावदस्याः प्रियां सुरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालभनं विरचयामि। "समुद्गकः सम्पुटकः" इत्यमरः। केसरकणान् किञ्जल्कपरागान् नागकेसरपुष्पपरागान् वा। "चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः" इत्यमरः। "किञ्जल्कः केसरोऽस्त्रियाम्" इति च। प्रियंवदा—कर्णं दत्वा, अनुसूये त्वरय त्वरय। एते खलु हस्तिनापुरगामिन ऋषयः सज्जीभवन्त्विति शब्द्यन्ते। सज्जशब्दभाजः

क्रियन्ते । प्रियंवदे एहि गच्छावः । प्रियंवदा—नेपथ्याभिमुखं यवनिकान्तरित-देशाभिमुखं—एषा सूर्योदय एव सुखमज्जिता नीवारभाजनाभिः तापसीभिर-भिनन्द्यमाना शकुन्तला तिष्ठति । तदुपसर्पाव एनाम् । शकुन्तला—भगवति प्रणमामि । गौतमी—भर्त्तुर्बहुमानहेतुं देवीशब्दमभिगच्छ । देवीशब्दं महिषी-शब्दम् । "देवी कृताभिषेकायाम्"इत्यमरः । वत्से वीरप्रसविनी भव । सखि शुभं गमनं ते भवतु । शकुन्तला चिरदर्शनादाह—स्वागतं प्रियसख्योः । इतो निषीदथः । सख्यौ—सखि ऋजुका तावद् भव यावत्ते मङ्गलसमालभनं कुर्वः । शकुन्तला - ऋजुकास्मि । उचितमपीदम् अद्य बहुतरं मन्तव्यम् । दुर्लभमिदानीं पुनर्मे सखीमण्डनं भविष्यति । सखीकृतं मण्डनं सखीमण्डनमलकतिलकादि । वाष्पं अश्रु । "वाष्पावुष्माश्रु च"इत्यमरः । सख्यौ, प्रियंवदानुसूये, सखि न युक्तं मङ्गलकाले रोदितुम् । प्रसाधयतः प्रतिकर्म विधत्तः अलंकुरुत इति यावत् । "प्रतिकर्म प्रसाधनम्"इत्यमरः । प्रियंवदा—अहो आश्चर्यं । आभर-णार्हमस्या रूपमाश्रमसुलभैः कुसुमप्रसाधनैर्विप्रतार्यते । वत्स हारीत कुत आसादितम् । किं नु मानसी सिद्धिः । क्षौमं पट्टवस्त्रं इन्दुपाण्डु चन्द्रधवलम् । मङ्गल्यं मङ्गलार्हम् । निष्ठ्यूत उद्गीर्णः । अन्येभ्यो वृक्षेभ्यः देवताकरतलैरा-भरणानि दत्तानि । नोऽस्मभ्यम् । किसलयच्छायाप्रतिस्पर्धिभिः पल्लवकान्ति-तुल्यैः ॥ ७ ॥

सखि कोटरसंभवापि मधुकरी पुष्करमध्वेवाभिलषति । पुष्करमधु पद्ममधु । "बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च"इत्यमरः । "मधु पुष्परसं विदुः"इति शाश्वतः । गौतमी—जातेऽनयाऽभ्युपपत्त्या सूचिता ते त्वया तवेति वा भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीः । अभ्युपपत्तिरभिलषिताभरण-प्राप्तिः । रूपयत्युद्भावयति । अनुसूया—अननुभूतभूषणोऽयं जनः कथं त्वामलं-करोतु ? यद् यत्र लगतीति चित्रकर्मपरिचयेन । यद्वा तव चित्तव्यापारपरिचयेन तुभ्यं यथा रोचते । यद्वा चित्तकर्म संकल्पो मानसी क्रिया तया परिचयेन ज्ञानेन मानसज्ञानेनेति यावत् । ज्ञात्वाङ्गेष्वाभरणविनियोगं कुर्वः । "संकल्पः कर्म मानसम्"इत्यमरः । शकुन्तला—जानामि युवयोर्निपुणत्वम् । अभिषेकः स्नानम् । वनस्पतिसेवां वृक्षानुगतिम् । "वृक्षमात्रे वनस्पतिः"इति

शाश्वतः । यास्यत्यद्येति-मम तावत् दर्शनं ज्ञानं चिन्तया जडं कर्त्तव्यापरिच्छेदकम् । यद्वा दर्शनं नयनं चिन्तया जडं बर्वरं विषयाग्राहकमन्धमितियावत् । यद्वा कथमेषाऽरण्यवासिनी महाराजान्तःपुरकलावत्कामिनीपुरतः तपस्विकन्या स्वं महाराजानुरागविषयं करिष्यतीति चिन्तया जलमश्रु यत्र-तत्तथा । "दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु" इति विश्वः । वनौकसस्तपस्विन ईदृशं वैक्लव्यं विह्वलता । गृहिणो गृहस्थाः । नु प्रश्ने ॥ ८ ॥

सख्यौ—सखि शकुन्तले अवसितमण्डना इदानीमसि त्वम् । तत् परिधेहि साम्प्रतमिदं पवित्रं क्षौमयुगलम् । तथा पूर्ववदेव । गौतमी—जाते एष ते आनन्दवाष्पपरिवाहिना चक्षुषा वर्षन्निव गुरुरुपस्थितः । तत् सादरं प्रतिपद्यस्व । शकुन्तला—सलज्जा—तात वन्दे । बहुमता आदृता । सम्राजमिति

"येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः ॥

सेव शर्मिष्ठेव । तथा च यथा शर्मिष्ठा ययाते राज्ञो बहुमताभूत्तथा त्वमपि पत्युर्भव । यथा च सा पूरुं साम्राज्यलक्षणान्वितं पुत्रमाप तथा त्वमप्यवाप्नुहि । लभस्वेति योजना ॥ ९ ॥

गौतमी—भगवन् वरः खल्वेष नाशीः । वेदीं परितः वेद्याः समीपे समिद्वन्तः ससमिधः । दुरितं विघ्नं पापं वा । अपघ्नन्तो विनाशयन्तः । हव्यं हवनीयं घृतादि तद्गन्धैः । वैतानाः यज्ञसम्बन्धिनः । "वितानो यज्ञविस्तार" इति विश्वः ॥ १० ॥

संनिहिता वनदेवता वनाधिष्ठात्री देवता येषु ते तपोवनवृक्षाः । अनुज्ञायतां स्वीक्रियताम् ॥ ११ ॥

कलमव्यक्तमधुरं परभृतविरुतं कोकिलशब्दः प्रतिवचनीकृतं प्रत्युत्तरीकृतम् । एभिः वृक्षैः । आत्मनः स्वस्य ॥ १२ ॥

नेपथ्यं यवनिकान्तरितो देशः । रम्यान्तर इति । अस्याः शकुन्तलायाः अनुकूलपवनश्च पन्थाश्च शिवः शुभजनको भूयात् । अनुकूलपवनः कथं भूतः, कुशेशयं शतपत्रं पद्मं तद्रजसः परागस्य मृदवो रेणवः कणा यत्र स तथा । शान्तोऽनुद्धतो मृदुगामीति यावत् । अनुकूलयति सुखयति इत्यनुकूलः पश्चा-

दागामिपवनः स तु यात्रायां शुभसूचकः। "अनुकूलो वहन् वायुः प्रयाणे शुभसूचक"इति। पन्थाः किंविशिष्टः, पुटकिनीहरितैः सरोभी रम्यान्तरः। छायाद्रुमैः छायाप्रधानवृक्षैः अपनीतसूर्यकिरणसंतापः।

"पूर्वाह्णे चापराह्णे च तलं यस्य न मुञ्चति।
अत्यन्तं शीतला छाया स छायातरुरुच्यते" इति ॥ १३ ॥

गौतमी—जाते ज्ञातिजनस्निग्धं यथा स्यादेवं अभ्यनुज्ञातासि तपोवनदेवताभिर्गमने। तत् प्रणम भगवतीः। शकुन्तला—जनान्तिकमेकान्ते, हला प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरोमुखौ निपततः। प्रियंवदा—न केवलं तपोवनपरित्यागकातरा त्वम्। तव विरहकातराः प्रियसख्योऽपि। यावत्त्वया उपस्थितवियोगस्य तपोवनस्यापि तावदवस्थां प्रेक्षतां भगिनी।

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्त्यङ्गानि वनलताः ॥ १४ ॥

शकुन्तला—स्मृत्वा स्मरणमभिनीय, तातात्रलताभगिनीमामन्त्रयिष्ये। अवैमि जानामि अस्यां लतायां सोदर्यं सहोदरत्वं समानोदर्यम्। "सोदर्यसगर्भसहजाः समा"इत्यमरः। दक्षिणेन प्रदेशेन। माधवि लताभगिनि प्रत्यालिङ्ग मां शाखामयाभ्यां बाहुभ्याम्। अद्यप्रभृति दूरवर्त्तिनी खलु ते भविष्यामि। ताताहमिवेयं चिन्तनीया। संकल्पितमिति—मया त्वदर्थे त्वन्निमित्तं प्रथमं संकल्पितं मनोरथीकृतं अमुं भर्त्तारं दुष्वन्तं स्वसदृशं सुकृतैः पुण्यैस्त्वं गता। इदानीं पुनरिमं सहकारं संनिहितातिसौरभमाम्रतरुं अस्या माधवीलताया वरं करिष्ये। कीदृशोऽहं, त्वयि वीतचिन्तोऽपगतानुरूपभर्तृसंयोजनरूपचिन्तनः ॥ १५ ॥

इतोऽत्र। हला एषा द्वयोरपि युवयोर्हस्तनिक्षेपः। सख्यौ—अयं जनः कस्येदानीं हस्ते समर्पयितव्यः। बाष्पमश्रु। रुदितेन क्रन्दनेनालं निष्फलम्। शकुन्तला—विलोक्य पृष्ठतो निरीक्ष्य, तात एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदा सुखप्रसवा भवेत् तदा मे कमपि प्रियनिवेदकं विसर्जयिष्यसि। नैतत् विस्मरिष्यसि। अम्मो आश्चर्ये को नु खलु पदाक्रान्त इव

पुनःपुनर्मे वसनस्यान्तं गृह्णाति। व्रणस्य क्षतस्य विगतं रोहणं यस्मात्तत्तथा। इङ्गुदी मुञ्जनीति प्रसिद्धा। कुशाग्रखण्डिते। श्यामाकः शस्यविशेषः प्रसिद्ध एव। पुत्रकृतकः कृत्रिमः पुत्र इत्यर्थः। पदवीं पद्धतिं पश्चान्मार्गम् इति यावत् ॥१६॥

शकुन्तला—वत्स किमर्थं मां सहवासपरित्यागिनीमनुवध्नासि। अचिर-प्रसूतोपरतया जनन्या विना यथा मया वर्धितोऽसि तथेदानीं मया विरहितं तातस्त्वां चिन्तयिष्यति। तन्निवर्त्तस्व वत्स निवर्त्तस्व। कण्ववाक्ये—उपरुद्ध-वृत्ति उपरुद्धव्यापारम्। वाष्पमश्रु। शिथिलो मन्दोऽनुबन्धः संश्लेषो यस्य तत्। अलक्षिते भूमिभागे अपरिशीलितभूमिप्रदेशे खलु यतः पदानि चरणानि विषमीभवन्तीति अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विरिति च्वि-प्रत्ययः ॥ १७ ॥

उदकान्तं जलसमीपपर्यन्तम्। नोऽस्मान्। अनुसूयावाक्ये—सखि न स आश्रमपदेऽस्ति चित्तवान् यस्त्वया विरहयन् न उत्सुकः कृतः। ततः प्रेक्षस्व तावत्।

पुटकिनीपत्रान्तरितो व्याहृतोऽपि नानुव्याहरति प्रियाम्।
तथा उद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः ॥

एतच्च प्रियमभिगच्छन्त्या सुशकुनं यत् पुटकिनीपत्रान्तरितो व्याहृतोऽ-प्यर्थात् प्रियया चक्रवाकः प्रियां नानुव्याहरति यच्च धृतमृणालः प्रियामपहाय मयि दृष्टिं ददाति ॥ १८ ॥

तथा मामपहायान्यकामिन्यां दत्तदृष्टी राजा भविष्यतीति स्वपरित्यागं शङ्कमाना शकुन्तला आह—सखि सत्यमेव नलिनीपत्रान्तरितं प्रियसहचरं अप्रेक्षमाणा आकुलं चक्रवाकी आरसति। प्रियंवदा—अथ किं स्वीकारे। "अथ किं स्वीक्रियालाप"इति भरतः। साभिप्रायेणाह शकुन्तला—दुष्करं खल्वियं करोति। प्रियंवदा—

"अद्य प्रियेण विना यद् गमयति रात्रिं विसूरणादीर्घाम्।
हन्त गुरुकमपि दुःखं आशाबन्धः साहयति ॥

विसूरणा खेदः। "आशाबन्धः समाश्वासे तथा मर्कटजालके" इति विश्वः ॥ १९ ॥

कण्ववाक्ये—साधु यथा स्यादेवं । उच्चैरधिकं श्रेष्ठमिति यावत् । अस्याः शकुन्तलायाः अबान्धवकृतां पित्रादिभिरकृतां किन्तु तदनपेक्षयैव स्नेहातिशयात् स्वयंकृतां भावप्रवृत्तिं आत्मप्रवृत्तिं अभिप्रायेण वृत्तिं वा लीलाप्रवाहं वा आत्मवार्त्तां वा ।

"भावः सत्तास्वभावाभिप्रायचेष्टात्मयोनिषु ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु"इति शाश्वतः ॥

"प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि"इति विश्वः । तां पूर्ववृत्ताम् । सामान्यप्रतिपत्तिपूर्वकं तुल्यगौरवपूर्वकम् । "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च"इति विश्वः । इयं शकुन्तला दारेषु पत्नीषु । दारशब्दः पुल्लिङ्गो नित्यबहुवचनान्तः । "दाराः पुंभूम्नि"इत्यमरः । भाग्याधीनं शुभात्मकविध्यधीनम् । "भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि"इति विश्वः । अतः परं सकलदारतुल्यगौरवाधिकगौरवम् ॥ २० ॥

वनौकसो वनवासिनः । गुरून् श्वशुरादीन् । प्रियसखीवृत्तं प्रियसखीचरित्रम् । "चरित्रछन्दसोर्वृत्तम्"इति शाश्वतः । विप्रकृता कृतविप्रिया प्रतीपमन्यथाभावं मा गमः स्म । न माङ्योग इत्यटो निषेधः । भूयिष्ठम् अत्यर्थं दक्षिणा सानुग्रहा परिजने दास्यादौ । भोगेषु सुखेषु अनुत्सेकिनी अतत्परा (?) । गृहिणीपदं गृहिणीशब्दम् । "पदं स्याद् वाक्यशब्दयोरपि" इति शाश्वतः । वामा विपरीता अन्यादृश्यः । कुलस्य वंशस्य आधयो मनोव्यथाः । "पुंस्याधिर्मानसी व्यथा"इत्यमरः ॥ २१ ॥

गौतमी—तात एतावन्मात्रकः खलु वधूजन उपदेशः । जातेऽवधारय एतत् । "वधूर्नवोढयोषायाम्"इति विश्वः । शकुन्तला—तात किमित एव प्रियसख्यौ निवर्त्तयिष्येते । कथं तातस्याङ्कात् परिभ्रष्टा मलयपर्वतादुन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि । अभिजनः कुलमस्यास्तीत्यभिजनवान् तस्य । "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ"इत्यमरः । अस्य दुष्यन्तस्य । शुचं शोकम् ॥ २२ ॥

समाधाय चिन्तयित्वा । शरीरेण आत्मनः पृथक्त्वं भिन्नीभावमर्थात् शरीरेणैव । एकान्ततो निसर्गतः । भावि भविष्यत् । आहार्ययोगेन सोपाधि-

संबन्धेन। परेण पित्रादिना। नाम संभावनायाम्। विषादी खेदवान् ॥ २३ ॥

शकुन्तला—तात वन्दे। सख्यौ एतम्। द्वे अपि मां सममेव परिष्वजेथाम्। सख्यौ अनुसूयाप्रियंवदे—सखि कदापि स राजर्षिः प्रत्यभिज्ञानमन्थरो यदि भवेत् तदाऽस्यात्मनो नामाङ्कितमङ्गुरीयकं दर्शयिष्यति। अस्य दुष्यन्तस्य। शकुन्तला—अनेन संदेशेन आकम्पितमिव मे हृदयम्। सखि—मा भैषीः स्नेहः पापं शङ्कते। शकुन्तला—तात कदा खलु पुनस्तपोवनं प्रेक्षिष्ये। अप्रतिरथमतुल्यरथमसत्प्रतिपक्षमिति यावत्। भर्त्रा स्वामिना ॥२४॥

गौतमी—जाते परिहीयते ते गमनवेला। तन्निवर्त्तय पितरम्। अथवा चिरेणाप्येषा न निवर्त्तयिष्यति। तन्निवर्त्त्यतां भवान्। तपोवनानुष्ठानं तपोवनकर्त्तव्यं कर्तृ। शकुन्तला—तपोवनव्यापारेण निरुत्कण्ठस्तातो भविष्यति। अहमिदानीमुत्कण्ठाभागिनी संवृत्ता। उटजद्वारि पर्णनिर्मितगृहद्वारि। "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः ॥ २५ ॥

हद्धी प्राकृते हाधिगित्यर्थे। "हद्धी नित्यं द्विरुच्यते" इति भरतः। अन्तरिता शकुन्तला वनराजीभिः। वां युवयोः सहधर्मचारिणी सखी। सख्यौ-तात शकुन्तलाविरहितं तपोवनं शून्यमिव प्रविशावः। हि यतः। कन्यार्थः कन्यारूपं धनम्। तां कन्यां संप्रेष्य प्रस्थापयित्वा। परिग्रहीतुः कृते निमित्तमिति यावत्। विशदः शुद्धः। निक्षेपः न्यासधनम्। समर्पकाय अर्पयित्वा यथा धर्त्ता विशदान्तरात्मा भवति तथाहमपीत्यर्थः ॥ २६ ॥

इति श्रीनरहरिविरचिताभिज्ञानशकुन्तलटिप्पण्यां

शकुन्तलाप्रस्थापनं नाम

चतुर्थोऽङ्कः ॥



## ५

कञ्चुकी अन्तःपुराधिकृतजनः। आचारः कञ्चुकिन इति कृत्वा अधिकृतेन अन्तःपुररक्षणरूपाधिकारवता। अवरोधगृहेषु राज्ञोऽन्तःपुरेषु। बहुतिथे प्रचुरे। सैव वेत्रयष्टिः। प्रस्थाने गमने विकला गतिर्यस्य। श्लोकस्यायमभिप्रायः। पुरा मया समर्थेनाधिकृतेनाधिकृतानामयमाचारो यद् वेत्रयष्टिर्गृह्यत इति कृत्वा गृहीता सा इदानीं वृद्धस्य मम गमने स्खलनाभावाय जाता ॥ १ ॥

प्रबोधं प्रकाशम्। लङ्घ्यते छन्ना क्रियते। जरसा वार्धकेन। निर्वास्यतः अस्तं गच्छतः। जरतो वृद्धस्य ॥ २ ॥

देवो राजा। "राजा भट्टारको देवः" इत्यमरः। प्रजाः लोकान् स्वाः प्रजाः अपत्यानीव। "प्रजा स्यात् सन्ततौ जने" इत्यमरः। विविक्तं विजनम्। "विविक्तविजनच्छन्नं" इत्यमरः। दिवा दिवसे। शीतं स्थानं द्विपेन्द्रो हस्तिराडिव। "दिवाह्नि" इत्यमरः ॥ ३ ॥

यत्रस्थो राजा धर्मं विचारयति तस्मात् धर्मासनात्। गन्धवहो वायुः। "पृषदश्वो गन्धवहो गन्धवाहाऽनिलाशुगाः" इत्यमरः। शेषोऽनन्तः सर्वदैव धृतभूमिभारः। षष्ठांशवृत्ते राज्ञोऽप्येष एव धर्मः ॥ ४ ॥

विभवतः विभवानुसारेण। परीवारोऽनुजीविनः सेवका इति यावत्। दुःखोत्तरा दुःखप्रधाना इति यावत्। राज्यं यथा श्रमाय तथा अतिश्रमापनयनाय न भवतीति योज्यम्। किमिव, स्वहस्तधृतदण्डं आतपत्रमिव। यथा स्वहस्तेन धृतदण्डं छत्रं श्रमाय भवति नातिश्रमापनयनाय तथेदमपीत्यर्थः ॥५॥

वैतालिकः स्तुतिपाठकः। लोकहेतोः लोकनिमित्तं खिद्यसे परिश्रान्तो भवसि। अथवा पक्षान्तरे ते तव एवंविधा अग्रे वक्ष्यमाणा पादपविषया यथा। हि यतः ॥ ६ ॥

विमार्गप्रस्थितानधर्माचरणोन्मुखानिति यावत्। अतनुषु प्रवृद्धेषु विभवेषु सम्पत्सु ज्ञातयः प्रजाभ्रातृपितृव्यादयः सन्तु तिष्ठन्तु। ते हि सुसमृद्धा अपि प्रजानामभ्यर्थनीया एवेत्याशयः। तु पुनः बन्धुकृत्यं चैण्ये सति भरणादि ॥७॥

विदूषकः—गोवृन्दारक इति भणितस्य वृषभस्य परिश्रमो नश्यति। गोवृन्दारको गोश्रेष्ठः। भो वयस्य संगीतकशालान्तरेणावधानं देहि। ताललयसिद्धायां वीणायां स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसवती वर्णपरिचयं करोति। स्थाय्यादिभेदेन गीतिषु चत्वारो वर्णास्तेषां परिचयमभ्यासम।

स्थायी तथैव संचारी तथारोह्यवरोहिणौ।
वर्णाश्चत्वार एवैते कथिताः सर्वगीतिषु ॥ इति भरतः।

सा तु महादेवी हंसवती। हंसः शकुन्तस्तं लातीति शकुन्तलापीति। हृदयं—तूष्णींभव नीरवो भव। नेपथ्ये यवनिकान्तरितदेशे।

अभिनवमधुलोभभाविता तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽसि एनां कथम् ॥

भाणनाम्नि नृत्यविशेषे प्रच्छादकनामकं लास्याङ्गमेतत्। यदाह कविकण्ठहारे—

अन्यासक्तं पतिं ज्ञात्वा प्रेमविच्छेदमन्युना।
वीणापुरस्सरं गानं स्त्रियः प्रच्छादको मतः ॥ इति।

एतेन परिचुम्बितचूतमञ्जरीकस्यानन्तरं कमलवनवासमात्रसुखितस्य विस्मृतचूतमञ्जरीकस्य मधुकरस्योपालम्भेन तथोपभुक्तविस्मृतशकुन्तलाकस्य राज्ञ उपालम्भोऽभिप्रेत इति ॥ ८ ॥

किं तावदस्या गीतेर्गृहीतो भवताऽक्षरार्थः। जनो राजा। यत् भवानाज्ञापयति। गृहीतस्तया परकीयैर्हस्तैः शिखण्डके अच्छभल्लः। अविगतरागस्यापि सुजनस्य नास्ति मे मोक्षः। ममापि प्रकृतकार्ये नास्ति बहिर्भाव इत्याशयः। कर्त्तरि क्तः। "ऋक्षाच्छभल्लभल्लूका" इत्यमरः। शिखण्डके चूडायाम्। "शिखा चूडा शिखण्डके" इत्यमरः। का गतिः? गतिः प्रकारः। इष्टविरहाद् ऋते इष्टविरहं विना। अन्यारादितरर्ते इत्यादिना पञ्चमी। जन्तुः शरीरी। "जन्तुजन्युशरीरिणः" इत्यमरः। नूनम् उत्प्रेक्षायाम्। तथा च दण्डी—

शङ्के मन्ये ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥

अबोधपूर्वमज्ञानपूर्वम्। भावस्थिराणि स्वभावस्थिराणि। "भावः सत्तास्वभावाभिप्रायचेष्टात्मयोनिषु" इति विश्वः। जननान्तरसौहृदानि पूर्वजन्मसौहृदानि "जनुर्जननजन्मानि" इत्यमरः॥ ९॥

वेत्रवति प्रतीहारिके। अग्निशरणमार्गमग्निगृहपन्थानं आदेशय कथय। "शरणं गृहरक्षित्रोः" इत्यमरः। इत इत एतु देवः। परिक्रम्य तिर्यक् गत्वा। एषोऽभिनवमार्जनरमणीयः संनिहितहोमधेनुरग्निशरणालिन्दकस्तदारोहतु देवः। मार्जनं विशोधनम्। अलिन्दको गृहावलग्नगृहम्। "ओएट" इति प्रसिद्धम्। उपोढ़तपसां धृततपस्यानाम्। धर्मारण्यं तपस्विवनम्। तच्चरेषु प्राणिषु मृगादिषु। उत पक्षान्तरे। असत् मरणादि। प्रसवः पुष्पादिः। अपचरितैरधर्मैः। विष्टम्भितोऽवरुद्धः। वीरुधां लतानाम्। बहुप्रतर्कमनेकाध्याहारम्। "अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः"। वीरुधां प्रसव इति शकुन्तलागर्भसूचनम्॥ १०॥

प्रतीहारी—देवस्य भुजदण्डनिर्वृते आश्रमे कुत एवम्? किं तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुं आगता इति तर्कयामि। सभाजयितुं पूजयितुम्। अभिन्नस्थितिरभिन्नमर्यादः। वर्णानां ब्राह्मणादीनाम्। "वर्णाः स्युर्ब्राह्मणादय" इत्यमरः। अपथममार्गं स्ववर्णाकथितधर्मम्। इदं स्थानं हुतवहपरीतं लग्नाग्निगृहमिव॥ ११॥

संवेग उद्वेगः। अभ्यक्तं तैलाभ्यक्तम्॥ १२॥

शकुन्तला दुर्निमित्तमशकुनम् अभिनीय प्रकाश्य। किमिति वामेतरं नयनं मे विस्फुरति? गौतमी—जाते प्रतिहतममङ्गलम्। शुभानि ते भवन्तु। वो युष्मान् प्रतिपालयति अपेक्षते। प्रतीहारी—देव प्रसन्नमुखरागा ऋषयः सस्त्रीका दृश्यन्ते। मन्ये तर्कयामि। दर्शनीयाकृतिः खलु लक्ष्यते। हृदय किं वेपसे? आर्यपुत्रस्य भावानुबन्धं स्मृत्वा धीरत्वं तावत् नन्ववलम्बस्व। स्वस्ति देवाय। "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च" इति चतुर्थी। अनुज्ञातं स्वीकृतम्। प्राग्रहरः श्रेष्ठः। नोऽस्माकम्। मूर्त्तिमयी कृतदेहपरिग्रहा। समंजयन् संयोजयन्। वधूवरं द्वन्द्वम्। वाच्यं वाच्यताम्॥ १६॥

सधर्मचारिणी भार्या। गौतमी—भद्रमुख वक्तुकामा वयम्। न च मे वचनावकाशोऽस्ति कथयितुं कथामिति।

नापेक्षितो गुरुजनोऽनया त्वयाऽपि न पृष्टो बन्धुः।
एकैकस्य चरिते किं भणतु एक एकस्मिन्॥ १७॥

शकुन्तला—किं नु खलु आर्यपुत्रो भणिष्यति? अयि किमिदमुपन्यस्तमित्यनभिज्ञानसूचकम्। स्वगतमनन्यप्रकाशम्। हा धिक् पापोऽस्य राज्ञो वचनोपन्यासः। भर्तृमतीं सस्वामिकाम्। सतीं साध्वीम्। "सती साध्वी पतिव्रता" इत्यमरः। ज्ञातिकुलैकसंश्रयां नाभिकुलैकवासिनीम्। जनो लोकः अन्यथाऽसतीम्। अप्रिया प्रिया वा प्रमदा युवती॥ १८॥

हृदय समुदिता ते आशङ्का। कृतात् कार्यात् द्वेषो वैराग्यम्। कृतेषु कार्येष्ववज्ञाऽनादरः धर्मं प्रति विमुखता। मूर्च्छन्ति वर्धन्ते। "विकारो मानसो भाव" इत्यमरः॥१९॥

गौतमी—जाते मा लज्जस्व। अपनेष्यामि तावदवगुण्ठनम्। ततो भर्ता त्वामभिज्ञास्यति। इदं स्त्रीरत्नं उपनतमुपस्थितम् एवंरूपमेतादृशम्। अध्यवस्यम् चिन्तयन्। निशान्ते रात्रिशेषे प्रातरिति यावत्। कुन्दं कुन्दपुष्पं अन्तस्तुषारमभ्यन्तरहिमम्॥२०॥

प्रतीहारी—अहो धर्मापेक्षिता भर्त्तुः। ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति। जोषं मौनम्। "तूष्णीमर्थे सुखे जोषम्"इत्यमरः। स्वीकरणं विवाहम्। अत्रभवत्याः शकुन्तलायाः। अभिव्यक्तसत्त्वलक्षणां गर्भलक्षणवतीम्। शकुन्तला-कथं परिणय एव संदेहः? भग्नेदानीं दूरारोहिणी आशालता। शार्ङ्गरवः—कृतावमर्षा कृतस्वीकारामर्थादुपभुक्तां सुतामवमन्यमानोऽनास्थाविषयिणीं कुर्वाणो मुनिः कण्वो मा विमान्यो नानादर्त्तव्यः। स्वं स्वीयमर्थं शकुन्तलारूपं प्रतिग्राहितो दुष्टस्त्वं दस्युरिव चोर इव येन मुनिना पात्रीकृतः॥ २१॥

सोऽत्रभवान् मान्यो दुष्वन्तः। शकुन्तलावाक्ये, इदमवस्थान्तरं गते तादृशे अनुरागे किं वा स्मारितेन? अथवा आत्मा इदानीं मे शोचनीयः। भवतु, वदिष्यामि इदम्। आर्यपुत्र इत्यर्धभणिते अथवा संशयिते इदानीं न

चैष समुदाचारः। पौरव युक्तं नाम एतत्तव पुरा आश्रमपदे सद्भावोत्तान-हृदयमिमं जनं समयोपरुद्धं प्रतार्य साम्प्रतम् ईदृशैरक्षरैः प्रत्याख्यातुं निराकर्त्तुम्। "प्रत्याख्यानं निराकृतिः"इत्यमरः। इमं जनं मद्रूपमित्यर्थः। व्यपदिश्यतेऽनेनेति व्यपदेशः कुलं तं मलिनयितुं म्लानीकर्तुं मां पातयितुं च समीहसे इच्छसि। नाम संभावनायाम्। सिन्धुर्नदी ओघं प्रवाहं यथा मलिनयति तटतरुं च पातयति तथेत्यर्थः॥ २२॥

भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एतत् प्रयुक्तं तदभिज्ञानेन केनापि तव संदेहमपनयिष्यामि। अभिज्ञानं परिचायकमसाधारणं चिह्नम्। प्रथमः आद्यः श्रेष्ठो वा कल्पः प्रकारः। मुद्रास्थानमङ्गुरीयकस्थानम् अवलोक्य निरीक्ष्य, हा धिक् अङ्गुरीयकशून्या मेऽङ्गुली। गौतमी–न खलु ते शक्रावताराभ्यन्तरे शचीतीर्थोदकं वन्दमानायाः परिभ्रष्टमङ्गुरीयकम्। राजा कपटमाशङ्कमान आह इदमित्यादि। अत्र तावद् विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि। ननु एकदिवसं वेतसलतामण्डपे नलिनीपत्रभाजनगतं उदकं तव हस्ते संनिहितमासीत्। लघु तत्क्षणं मम पुत्रीकृतहरिणकः उपस्थितः। ततस्त्वया अयमिदानीं प्रथमं पिबत्विति अनुकम्पिना उपच्छन्दित उदकेन। न पुनस्ते अपरिचितस्य हस्ते उदकमुपगतः पातुम्। पश्चात्तस्मिन्नेव उदके मया परिगृहीते कृतस्तेन प्रणयः। प्रणयो विश्वास इत्यर्थः। "प्रणयः प्रेम्णि विश्वासे याच्ञा विश्रम्भयोरपि"इति विश्वः। अत्रान्तरे उपहस्य त्वया भणितं–सर्वं स्वगणे विश्वसिति। द्वावपि युवामारण्यकाविति।

अनृतवाग्भिर्मिथ्यावचनैः। महाभाग नार्हसि एतत् मन्त्रयितुम्। तपोवनसंवर्धितो अयं जनोऽनभिज्ञः कैतवस्य। अन्तरीक्षगमनात्पूर्वम्। स्वं स्वीयम्। अन्यद्विजैरन्यपक्षिभिः। "दन्तविप्राण्डजा द्विजा" इत्यमरः। परभृताः कोकिलाः। किल व्याजे। प्रतिवस्तूपमेयमलंकारः। तथा च दण्डी—

वस्तु किञ्चिदुपन्यस्य न्यसनं तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा॥ २३॥

अनार्य आत्मनो हृदयानुमानेन सर्वमेतत् प्रेक्षसे। को नामान्यो धर्मकञ्चुकव्यपदेशिनः तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति? अनुकारी सदृशः।

अविभ्रमो विलासशून्यः। तथाहीत्युपदर्शने। तिर्यक् वक्रं नावलोकितं भवति। चक्षुरालोहितम्। वेपते कम्पते॥ २४॥

एवं पूर्वोक्तप्रकारेण। अस्मरणाद् दारुणा भयानका चित्तवृत्तिर्मनो-व्यापारो यस्य तस्मिन् मयि। वृत्तं निर्व्यूढं रहःप्रणयमेकान्तप्रेम। अप्रति-पद्यमाने अस्वीकुर्वाणेऽपि अतिलोहिताक्ष्या शकुन्तलया स्मरस्य शरासनं धनुर्भग्नमिव। कुतः कुटिलयोर्भ्रुवोर्भेदात्। कीदृश्या, अनयाऽतिरुषातीवसरो-षया। यद्वातिरुषातिरोषेण करणभूतेन॥ २५॥

अनार्येत्यादि शकुन्तलावचनेषूत्तरं भद्रेत्यादि संबोधनमिदं सोल्लुण्ठम्। प्रथितं ख्यातम्। इदं तृणच्छन्नकूपोपमत्वादि। शकुन्तलावाक्ये—

"यूयमेव प्रमाणं जानीथ धर्मस्थितिं च लोकस्य।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः॥

"स्त्रियः वनिता महिला" इत्यमरः। सोल्लुण्ठमाह, सुष्ठु इदानीं स्व-च्छन्दचारिणी समवस्थिता तावदहम्। "सुष्ठु प्रशंसने' इत्यमरः। गौतमी-वाक्ये—जाते अस्य पुरुवंशस्य प्रत्ययेन मुखमधुनो हृदयप्रस्तरस्य हस्तमुप-गतास्मि। अप्रतिहतम नवारितं चापलं कर्तृ। विशेषात्तत्त्वतः समीक्ष्य ज्ञात्वा। सौहृदं सुहृद्भावः। वैरीभवति अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विरिति कर्तरि च्विः। च्वाविति दीर्घः॥ २५॥

अयि सानुनयसंबोधने। "अनुनये त्वयि"इत्यमरः। अत्रभवतीसंप्रत्ययात् शकुन्तलानिश्चयात् अवलेपेनानादरेण क्षिरवन्ति पीडयन्ति। आजन्मन इति—जन्मप्रभृति यः शाठ्यं धूर्ततामशिक्षितोऽपाठितः तस्य जनस्य वचनम-प्रमाणमयथार्थं भवतीति शेषः। ते आप्तवाचो यथार्थवचनाः सन्तु। ते के ये विद्या इति कृत्वा पराभिसन्धानं पराभिप्रायं(?) अधीयते पठन्ति। तथा चेयं शकुन्तला कथंचिदपि शठोक्तिं न जानाति, भवन्तस्तु सर्वदा शठमतय एवातो भवद्वचसि न प्रमाणतेति भावः॥ २७॥

अभ्युपगतं ज्ञातम्। एवंविधा धूर्ता मिथ्यावचना इति यावत्। इमां अविद्यां मिथ्यावचनैरभिसन्धायाभिसंहितां कृत्वेति यावत्। किं लभ्यते जनै-रित्यर्थात्। रोषादाह—विनिपातो नरकगमनम्। अनुष्ठितः कृतः गुरुसंदेशः

गुरोराज्ञा । प्रतिनिवर्त्तामहे गृहं प्रतिगच्छामः । तदेषेति । एषा भवतः पत्नी शकुन्तलास्ति । एनां शकुन्तलाम् । उपयन्तुर्विवाहकर्त्तुः । हि यतः दारेषु पत्नी-विषये सर्वतोमुखी सर्वप्रकारा प्रभुता ऐश्वर्यम् ॥ २८ ॥

शकुन्तला—हूं क्रोधे । अहमनेन कितवेन विप्रलब्धा प्रतारिता । यूयमपि ननु मां परित्यजथ । ननु विरोधे । तथा च युष्माकं मम त्यागो न समुचितः । "ननु च स्याद् विरोधोक्तौ" इत्यमरः । इति उक्त्वा अनुप्रस्थिता पश्चाद्गता । गौतमी वाक्ये—अनुगच्छति नः करु॰ परिदेविनी शकुन्तला । प्रत्यादेशदारुणे भर्तरि किं करोतु तपस्विनी ? करुणं यथा स्यादेवं परिदेविनी क्रन्दनशीला । "प्रत्यादेशो निराकृतिः" इत्यमरः । तेन दारुणे भयानके भर्तरि सति तपस्विनी वराकी । पुरोभागिनि दोषैकदर्शिनि । तथा व्यभिचारिणी त्वमसि तदोत्कुलया कुलधर्मातिक्रमेण वर्त्तमानया त्वया पितुः कण्वस्य किम्, अपि तु न किमपि प्रयोजनमस्तीत्यर्थः । अथ पक्षान्तरे । तु पुनः आत्मनो व्रतं पतिव्रतं शुचि शुद्धं वेत्सि जानासि । दास्यं दासभावो दासकर्म वा क्षमं योग्यम् ॥२९॥

नियममाह निदर्शनेन कुमुदानीत्यादि । वशिनां जितेन्द्रियाणां परपरिग्रहः परपत्नी । "वृत्तिर्वर्त्तनजीवने" इत्यमरः । तथा चाहं वशी । ततस्तटस्थाप्येषा न मयि लब्धप्रयोजना भविष्यतीत्यभिप्रायः ॥ ३० ॥

आहोशब्दो विकल्पार्थे । परस्त्रीस्पर्शेन पांशुलः पापिष्ठः ॥ ३१ ॥

"पुरोधास्तु पुरोहितः" इत्यमरः । अनुशास्तु आज्ञापयतु । अत्रभवती शकुन्तला । आ प्रसवात् प्रसवपर्यन्तम् । कुतः कारणात् ? साधुनैमित्तिकैः श्रेष्ठज्योतिःशास्त्रज्ञैः आदिष्टः कथितः । तल्लक्षणोपपन्नश्चक्रवर्त्तिलक्षणसहितः । एनां शकुन्तलामभिनन्द्य । शुद्धान्तमन्तःपुरं स्त्र्यागारम् । "भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च" इत्यमरः । विपरीते यद्येतत्पुत्रश्चक्रवर्त्ति-लक्षणो न भवेत् । पितुः कण्वस्य । शकुन्तला—भगवति वसुन्धरे देहि मेऽव-काशम् । बाहूत्क्षेपं बाहू उत्क्षिप्य यथा स्यादेवम् । स्त्रीसंस्थानं स्त्रिया इव संस्थानमाकृतिर्यस्य तज्ज्योतिस्तेजोऽप्सरस्तीर्थमारादप्सरस्तीर्थसमीपे एनां शकुन्तलामाक्षिप्यादाय तिरोभूदन्तर्हितं बभूव ॥ ३२ ॥

एषोऽर्थस्तदवस्थानरूपः । प्रत्यादिष्टो निराकृत एव । इत इत एतु । काम-

मकामानुमतौ । परिग्रहं पत्नीम् । बलवद् यथास्यादेवं मे हृदयं कर्तृ प्रत्याप-यतीव प्रतीतमिव करोति मां तत्परिग्रह इत्यर्थात् । इवशब्द उत्प्रेक्षायाम् ।

"शङ्के मन्ये ध्रुवं प्रायो नूनमित्येवमादिभिः ।

उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ इति दण्डी ।

इति माण्डरग्रामीणश्रीनरहरिविरचिताभिज्ञानशकुन्तलटिप्पण्यां

शकुन्तलाप्रत्याख्यानं नाम पञ्चमोऽङ्कः ॥



## ६

नागरको नगराधिकारी। अरे कुम्भीलक। "चोरः शङ्कितवर्णः स्यात् कुम्भीलो दस्युतस्करौ" इति। कथय कथय। त्वया कुत्र महारत्नभासुरमुत्कीर्ण-नामाक्षरं राजकीयमङ्गुरीयकं समासादितम्? प्रसीदन्तु प्रसीदन्तु मे भाव-मिश्राः मान्यमिश्राः। अहं न ईदृशः कर्मणः कर्ता। किं नु खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः। शृणुत तावदेतत्। अहं शक्रा-वतारवासी धीवरः। शक्रावतारो गङ्गातीर्थविशेषः। "कैवर्त्ते दाशधीवरौ" इत्यमरः। हण्डे इति नीचसंबोधनम्। नीचवर्वर किं अस्माभिर्जातिं वसतिं च पृष्टोऽसि त्वम्। सूचक इति चोरप्रकाशकपुरुषसंबोधनम्। कथयतु सर्वं क्रमेण। मा एनं प्रतिबध्नीहि। यदीश्वर आज्ञापयति। लप लप। अहं जाल-बडिशादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि। "बडिशं मत्स्यवेधनम्" इत्यमरः। विशुद्धोऽस्येदानीमाजीवः जीविका। भट्टारक मा एवं भण।

सहजं किल यत् विनिन्दितं न खलु तत् कर्म विवर्जनीयम्।
पशुमारणं करोति कारणात् षट्कर्मा विद्वानपि श्रोत्रियः॥

सहजं कुलक्रमागतम्। षट्कर्मा यजनयाजनाध्ययनाध्यापनदानप्रतिग्रह-कर्मवान्। विद्वान् पण्डितः।

जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥"

कारणात् निमित्तात्। निन्दितमप्येतत् कर्म कुलक्रमागतमिति न मे दोष इत्यभिप्रायः॥ १॥

ततस्ततः। तदेकदिवसे मया रोहितमत्स्यको मुण्डे कल्पितः छिन्नः। यावत्तस्योदराभ्यन्तरगतं इदं महारत्नभासुरमङ्गुरीयकं पश्यामि। पश्चादिह विक्रयार्थं दर्शयन्नेव गृहीतः भावमिश्रैः। एतावान् तावदेवास्य आगमः।

साम्प्रतं मारय वा ताडय वा । जानुक मत्स्योदराभ्यन्तरगतमिति न संदेहः । यथा एतस्यामिषगन्धो वाति । अङ्गुरीयागम इदानीं विमर्ष्टव्यः । तदेहि राजकुलमेव गच्छामः । आगच्छ रे ग्रन्थिच्छेदक आगच्छ । सूचकौ इह गोपुरद्वारे अप्रमत्तौ परिपालयतां मां यावद्राजकुलं प्रविश्य निष्क्रमामि । प्रविशतु राजपुत्रः स्वामिप्रसादार्थम् । जानुक चिरायते राजपुत्रः । ननु अवसरोपसर्पणीया राजानो भवन्ति । पुरुषयोरेकः सूचकनामा अपरो जानुकनामा । वयस्य स्फुरतो मे हस्तौ इमं ग्रन्थिच्छेदकं घातयितुम् । एषोऽस्माकमीश्वरो राजशासनं गृहीत्वा प्राप्तः । ततः शकुनानां मत्स्यानां स्वकुलानां वा मुखं प्रेक्षतु । अथवा गृध्रीशृगाल्योर्बलिर्भवतु । शीघ्रं शीघ्रमेतत्··· । हा हतोऽस्मि ।··· मुञ्चतं मुञ्चतमेनं जालोपजीविनम् । उपपन्नः किलाङ्गुरीयागमोऽस्मत्स्वामिना यावदस्य कथितम् अस्यागमस्य कथितं स्वरूपमित्यर्थात् । यमवसतिं गत्वा प्रतिनिवृत्त एषः । ततः तव क्रीतं वश्यं वा साम्प्रतं मम जीवितम् । एष भर्त्रा अङ्गुरीयकदर्शनसमुल्लसितेन पारितोषिकस्ते प्रसादीकृतः । तद् गृहाण इदमिति । कटकं वलयम् । "कटकं वलयोऽस्त्रियाम्"इत्यमरः । अनुगृहीतोऽस्मि । एष खलु राज्ञा अनुगृहीतः यतः शूलादवतार्य हस्तिस्कन्धे समारोपितः । जानामि तेनाङ्गुरीयकेन स्वामिनो बहुमतेन भवितव्यम् । ननु तस्मिन् भर्तुर्महाराजस्यानन्तपरितोषः एकं पुनस्तर्कयामि । तस्य दर्शनेन कोऽपि हृदयावस्थितो भर्त्रा स्मृत इति । यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत् । तोषित इदानीं भर्त्ता राजपुत्रेण । जानुकः—ननु भणास्य मत्स्यशत्रोः कृते इति । अर्थात् परितोषः भर्तुः । इह युष्माकमप्यर्धमूल्यं भवतु । धीवर महत्तरक साम्प्रतं प्रियवयस्यो मम संवृत्तोऽसि । कादम्बरीस्वस्तिकं(?) मदिरागृहम् ।

"सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ।
गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥"इत्यमरः ।

"स्वस्तिकः सर्वतोभद्रः"इत्यमरो गृहभेदे । प्रथमसौहित्यं त्वावयोरीष्टे । तत् शौण्डिकागारमेव गच्छामः ॥

प्रवेशकलक्षणं पूर्वं लिखितमेव ।

——:※:——

मिश्रकेशीत्यप्सरोनाम। एतद्वाक्ये—निर्वर्त्तितं मया पर्यायनिर्वर्तनीयं कर्म। अप्सरस्तीर्थसान्निध्यं यावत् साधुजनस्याभिषेककालस्तदस्य राजर्षेः साम्प्रतं वृत्तान्तं प्रत्यक्षीकरिष्ये। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तथापि संदिष्टास्मि। किं नु खलु उपस्थितक्षणेऽपि दिवसे निरुत्सवारम्भमिव राजकुलं दृश्यते। उपस्थितक्षणे उपस्थितः क्षण उत्सवो यस्मिन्। "अथ क्षण ...उद्धव उत्सव" इत्यमरः। अथवा अस्ति मे विभवः सर्वं प्रणिधानेन ज्ञातुम्। किन्तु सख्या एष आदरो मन्तव्यः। भवतु, आसामुद्यानवाटिकानां पार्श्वपरिवर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये। तिरस्करिणी तिरोधानकर्त्री। चेटीवाक्ये—कथं उपस्थितो मधुमासः ?

आताम्रहरितवृन्तमुच्छ्वसितमिव वसन्तमासस्य।
दृष्टं चूताङ्कुरकं रत्यै क्षणमङ्गलं नियच्छामि॥

उच्छ्वसितं प्राणाः॥ २॥

मधुकरिका—सखि परभृतिके। किमेतदेकाकिनी मन्त्रयसे ? सखि मधुकरिके चूताङ्कुरं प्रेक्ष्य उन्मत्ता परभृतिका भवति। तव पुनः काल एष मदविभ्रमसुद्गीतानाम्। तत् सखि अवलम्बस्व मां यावत् पादपस्थिता भूत्वा अनेन चूतप्रसवेन संपादयामि कामदेवस्य वायणम्। मदविभ्रमं यथा स्यादेवम्। चेट्योरेकस्याः परभृतिकेति नाम अपरस्या मधुकरिकेति ' हलेति सखीसंबोधनम्। यद्येवं तन्ममाप्यर्धं वायणकस्य फलम्। सखि अभणितमप्येतत् संपत्स्यते यथा एकमेवावयोः शरीरं द्विधा विभक्तं प्रजापतिना। अवलम्बितकमवनमनविशेषः। अम्महे इति शब्दो विस्मये। अप्रबुद्धोऽपि चूतप्रसव एष बन्धनप्रभ्रष्टः सुरभिर्वाति। कपोतहस्तं कृत्वा। कपोतहस्तलक्षणं च भरते—

सर्वपार्श्वसमाश्लेषात् कपोतः सर्पशीर्षकः।
भीतौ विज्ञापने चैव विनये च नियुज्यते॥

नमो भगवते मकरध्वजाय—

अर्हसि मया चूताङ्कुर दत्तः कामस्य गृहीतचापस्य।
संस्थापितयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम्॥

भाणकनाम्नि नाट्यविशेषे आसीनपाठ्यनामकमिदं लास्याङ्गम्। तथा च कविकण्ठहारे—

भ्रूकरचरणविलासाभिनयैर्युक्तं प्रयुज्यते यच्च ।
आसीनया वनितया भवति तदासीनपाठ्यं तु ॥ इति ३ ॥

आत्मानं न जानाति इत्यनात्मज्ञा । देवेन राज्ञा । "राजा भट्टारको देवः" इत्यमरः । प्रसीदतु प्रसीदत्वार्यः । अगृहीतार्थे खल्वावाम् । हूं क्रोधे । शासनमाज्ञा । वासन्तैर्वसन्तसमयपुष्पफलशालिभिः । रजः परागम् । "परागः सुमनोरजः" इत्यमरः । संनद्धं पुष्पितुमुद्यतं तदपि कुरुवकं कोरकावस्थया स्थितं न पुष्पितमित्यर्थः । शिशिरे गतेऽपि पुंस्कोकिलानां कण्ठेषु रुतं स्खलितं न बहिर्गतमित्यर्थः ॥ ४ ॥

मिश्रकेशी—नात्र संदेहः महाप्रभावः खलु राजर्षिः । प्रथमा चेटी—अद्य कतिपयदिवसं मित्रावसुना रिष्टिकेन भर्तुः पादमूलं प्रेषिताभ्यामावाभ्यां अत्र परमादरेण कलागृहकर्म संपादितम् । तदद्य न कदापि श्रुतपूर्व एष वृत्तान्तोऽस्माभिः । आर्य कौतूहलमावयोर्यद्यनेन जनेन श्रोतव्यं श्रवणार्हं न गोप्यं तत् कथयत्वार्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति । मिश्रकेशी—उत्सवप्रिया राजानो भवन्ति । तदत्र गुरुणा कारणेन भवितव्यम् । कर्णपथं श्रोत्रमार्गम् । शकुन्तलाप्रत्यादेशकौलीनं शकुन्तलानिराकरणकुकर्म । "कौलीनं स्यात् कुलीनत्वे गुह्ये जन्ये कुकर्मणि" इति विश्वः । आर्य श्रुतं रिष्टिकमुखात् सर्वमङ्गुरीयकदर्शनं यावत् । रिष्टिकः कर्मकरो "बोठयेत' इति प्रसिद्धः । "रिष्टिः कर्मकरे भद्रे प्रेषणे वेतनेऽपि च" इति विश्वः । ऊढपूर्वा पूर्वं विवाहितेत्यर्थः । प्रत्यादिष्टां निराकृताम् । मोहादस्मरणात् । पश्चात्तापमनुतापम् । देवो राजा । तथाहीत्युपदर्शने । रम्यानिति—रम्यान् पदार्थान् द्वेष्टि द्वेषविषयतां नयति । देव इति सर्वत्र योज्यम् । प्रकृतिभिः शिष्टैः यथापूर्वं सेवितस्तथा प्रत्यहं न सेव्यते । शय्याप्रान्ते विशेषतो वर्त्तनैरवस्थितिभिरुन्निद्रो जाग्रदवस्थः त्रपा रात्रीर्विगमयत्यपनयति । अन्तःपुरेभ्यः इत्यनेन तदवस्थिताः स्त्रीजना उच्यन्ते । मञ्चाः क्रोशन्तीतिवल्लक्षणया तदुपपत्तेः । गोत्रेषु स्खलित इति अन्यनाम्नि वक्तव्ये शकुन्तलानामोदीरणात् । "नाम गोत्रम् 'इति शाश्वतः । व्रीडया लज्जया विलक्षः सविस्मयः । 'विलक्षो विस्मयान्वितः' इत्यमरः ॥ ५ ॥

मिश्रकेशी—प्रियं मे प्रियम् । प्रभवतो राज्ञः । यद्वा प्रभवतो जायमाना-

दिति वमनस्यविशेषणम् । प्रत्याख्यातो निवारितः। युज्यते। एत्वेतु भवान्। अयि प्रश्ने। "अयि प्रश्नानुनययोः"इति विश्वः। इतोऽत्र अभिवर्तते आगच्छति। प्रत्यादिष्ट इत्यादि। एष राजा क्षीणोऽपि आत्मनस्तेजोगुणैर्नालक्ष्यते कृशत्वेन न ज्ञायते। क इव, संस्कारार्थमुल्लिखितः शाणादिघृष्टो मणिरिव। यथा संस्कारोल्लेखनेन क्षीणोऽपि महामणिः पुष्परागादिरात्मतेजोगुणैः कृशतया नालक्ष्यते किन्तु पूर्ववदेव तथायमपीत्यर्थः। प्रत्यादिष्टो निराकृतो विशिष्टमण्डनस्य विधिविधानं येन स तथा। "विधिर्दैवविधानयोः"इत्यमरः। किं कुर्वन्, वामप्रकोष्ठे वामकरमूले श्लथं कृशतया सर्वतः संचारि काञ्चनं सौवर्णमेकमद्वितीयं श्रेष्ठं वा वलयं कङ्कणं बिभ्रत्। नाभ्यस्ताच्छतुरिति नुम्निषेधः। श्वासेनोपरक्तः संबद्धोऽधरो यस्य स तथा। चिन्तया शकुन्तलाविषयिण्या यज्जागरणं तेन प्रतान्ते ग्लाने नयने चक्षुषी यस्य स तथा॥ ६॥

मिश्रकेशी—राजानमवलोक्याधस्तान्निरीक्षते। "अधस्तादवलोकितम्" इति भरतः। स्थाने खलु प्रत्यादेशविमानिताप्यस्य कारणात् शकुन्तला क्लाम्यति। शारङ्गाक्ष्या हरिणनेत्रया शकुन्तलया। अनुशयदुःखाय पश्चात्तापदुःखाय। हतहृदयं दुष्टहृदयं कर्तृ॥ ७॥

मिश्रकेशी—तादृशान्यस्याः तपस्विन्या भागधेयानि। विदूषकः—हूं रोषे। भूयोऽपि लंघित एष शकुन्तलावातेन। न जाने कथं विचिकित्सितव्यो भविष्यति। जयति जयति देवः।

"आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।
स्यादेतदेव प्रमदवनमन्तःपुरोचितम्॥ इत्यमरः।

अन्तःपुरोचितं वनं प्रमदवनं तद्भूमयः। यथाकामं यथेष्टम्। वेत्रवतीति प्रतीहारिकानाम। चिराप्रबोधाच्चिरकालीनाज्ञानात्। प्रत्यवेक्षितं ज्ञातम्। यद्देव आज्ञापयति। पार्वतायन इति कञ्चुकिनाम। स्वनियोगमन्तःपुरावेक्षणरूपम्। विदूषकवाक्ये—कृतं भवता इदानीं निर्मक्षिकम्। साम्प्रतं शिशिरविच्छेदरमणीये एतस्मिन् प्रमदवने आत्मानं विनोदय। निर्मक्षिकं मक्षिकाया अप्यभावाद् विजनमित्यर्थः। रन्ध्रोपनिपातिनः प्रमादोपगताः। अव्यभिचारि यथार्थमित्यन्वयः। मुनिसुतेति—ममेदं मनस्तमसा शोकेन च

मुक्तम्। कथंभूतेन तमसा, मुनिसुतायाः शकुन्तलायाः प्रणयः स्नेहस्तस्या स्मृतिः स्मरणं तेन बोधिना प्रकाशं गच्छता। एतद्ग्रन्थम्। अत्रानर्थोपनिपातमाह—मनसिजेनेत्यादि ॥ ८ ॥

अङ्गुलिमुद्रयाङ्गुरीयकेण उपहितस्मृतिराहितस्मरणः सन्नकारणत्यक्तां प्रियामनुरोदिमि। अनुशयात् पश्चात्तापात् उत्सुक उत्कण्ठितः। इति रन्ध्रोपस्थितिः। अत्रानर्थोपनिपातमाह, सुरभिमाससुखं च पुरोऽग्रे उपस्थितम्। "वसन्ते पुष्पसमयः सुरभिः" इत्यमरः॥ ९ ॥

भो वयस्य तिष्ठ। तावदमुना दण्डकाष्ठेन कन्दर्पबाणं नाशयामि। ब्रह्मवर्चसं ब्रह्मतेजः। ननु भवता आसन्नपरिचारिणी मेधाविनी लिपिकरी आदिष्टा माधवीलतामण्डपे इमां वेलामतिवाहयिष्यामि। तत्रास्याः चित्रफलके स्वहस्तालिखिता तत्रभवत्याः प्रतिकृतिरानीयतामिति। इत इत एतु भवान्। एष मणिशिलापट्टसनाथो माधवीलतामण्डपः उपचाररमणीयतया निश्शब्दस्वागतेनेव प्रतीक्षते भवन्तम्। तत् प्रविश्यात्रोपविशावः। मिश्रकेशी—लतासंसृष्टा भूत्वा प्रेक्षिष्ये तावत् सख्याः प्रतिकृतिम्। ततोऽस्यै भर्तुरनुरागं बहुमुखं निवेदयिष्यामि। प्रत्याख्यानकाले निराकरणकाले शकुन्तलायाः। विदूषकः—न विस्मरामि। किंतु सर्वं कथयित्वा अवसाने त्वया भणितं परीहासविजल्प एष न भूतार्थ इति। मया मन्दबुद्धिना तथैव गृहीतम्। अथवा भवितव्यतात्र बलवती। एवमेतत्। भोः किमिदमनुपपन्नं तव? अनुपपन्नम् अयोग्यम्। न कदापि सत्पुरुषाः शोकपरिगता भवन्ति। ननु प्रवातेऽपि निःकम्पा एव गिरयः। इत इति। इतो मत्तः प्रत्याख्यानात् निराकरणात् स्वं स्वीयं जनं मुनिशिष्यं पश्चाद् गन्तुं व्यवसिता व्यवसायं यत्नं कृतवती। गुरुसमेऽलंघ्यवचनतया कण्वतुल्ये गुरुशिष्ये तिष्ठेति वदति सति स्थिता। यत् सा क्रूरे निर्दये मयि कलुषां कृपणां दृष्टिमर्पितवती तन्मां सविषं शल्यमिव दहति। यत्तदोर्नित्याभिसंबन्धः॥ १० ॥

अम्महे इति शब्द आश्चर्ये। "विस्मये त्वमहे अम्मो" इति भरतः। मिश्रकेशी—ईदृशी कायस्य परवशता। अस्य जनस्य संतापेनाधिकतरमिव रमे। भोः अत्र तर्कयामि केनापि तत्रभवती आकाशचारिणा नीतेति। जन्मभूमि-

प्रतिष्ठेति जननी। विस्मयनीयः खल्वस्य प्रबोधः। यद्येवं तत् समाश्वसितु भवान्। अस्ति खलु समागमः कालेनापि तत्रभवत्याः। नहि मातापितरौ भर्तृविरहितां दुहितरं पारयतः प्रेक्षितुम्। यत् सा सुदती शोभनदशना शकुन्तला संनिवृत्ता तत् स्वप्नो नु। एवमग्रेऽपि। नु वितर्के ॥ ११ ॥

वयस्य मैवं भण। ननु अङ्गुरीयकमेवात्र निदर्शनम्। अवश्यंभाविनोऽचिन्तनीयसमागमा भवन्ति। तवेति। हे अङ्गुरीय तस्याः शकुन्तलायाः अङ्गुलीषु लब्धपदं त्वं च्युतमसि। अनेनैव फलेन तव सुचरितं पुण्यं गतं विभाव्यते ज्ञायते। नूनम् उत्प्रेक्षायाम् ॥ १२ ॥

मिश्रकेशी—यद्यन्यहस्तगतं भवेत् तदा सत्यं शोचनीयं भवेत्। सखि दूरे वर्तसे। एकाकिन्यहं कर्णसुखानि अनुभवामि। विदूषकः—इदं नाममुद्रा केनोपायेन तत्रभवतीहस्तं गता प्राप्ता। मिश्रकेशी—ममापि कौतूहलेन वादित एषः। ततस्ततः। किमिति। अत्राङ्गुरीयके। अवरोधनिदेशवर्ती अन्तःपुराज्ञाकारी। नेता आनयनकारी ॥ १३ ॥

मिश्रकेशी—रमणीयः खलु अवधिर्विधिना विसंवादितः। विदूषकः—अथ कथं रोहितमत्स्यस्य बडिशमिव मुखं प्रविष्टमेतदासीत्। आं युज्यते। अतः खलु तपस्विन्याः शकुन्तलाया धर्मभीरोरस्य राजर्षेरपनीतः संदेहो जातः। शकुन्तलायाः कृते निमित्तम्। अथवा न ईदृशोऽनुरागोऽभिज्ञानमपेक्षते। तत् किमप्येतत्। भोः अहमपीदं दण्डकाष्ठमुपालप्स्ये। कथमृजोर्मम कुटिलं त्वमसि। कथमिति। नु प्रश्ने। अचेतनं कर्तृ नाम संभावनायाम्। मया चेतनेनापि कस्मात् कारणात् प्रियाऽवधीरिता ॥ १४ ॥

मिश्रकेशी—स्वयमेव प्रतिपन्नमर्थादनेन यदहं वक्तुकामा। विदूषकः—भोः अहं सर्वथा बुभुक्षया मारयितव्यः। लिपिकरीवाक्ये—भर्तः इयं चित्रगता भट्टिनी शकुन्तला। "भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषिति" इति विश्वः। आलेख्यस्य चित्रस्य। तदेतत्तस्या मुखं चित्रेऽपि आलपतीव मामित्यर्थात्। मुखं कीदृशम्? कर्कन्धूः क्षुद्रबदरी तद्द्युतिवत् पाटलमीषद्रक्तमोष्ठरुचकमधरस्थलाक्षारसो यत्र तत्तथा। "रुचकं मङ्गलद्रव्ये" इति विश्वः।

यद्वा कर्कन्धूरुचिवत् पाटलौ यावोष्ठौ ताभ्यां रुचकं रुचिजनकं यत्तथा। इवशब्द उत्प्रेक्षायाम् ॥ १५ ॥

साधु वयस्य साधु। मधुरासु विरचनासु दर्शितो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु। अहो राजर्षेर्वर्णरेखानिपुणता। जाने प्रियसखी मेऽग्रतो वर्तत इति। तत्तत् अन्यथा न क्रियते तथैव व्यवस्थाप्यत इत्यर्थः। किंचिदल्पं न तु समग्रं लावण्यं सौन्दर्यं अन्वितं संबद्धम्। ॥ १६ ॥

सदृशं पश्चाद्भावगुरोः स्नेहस्य। पच्छादावगुरुण इति पाठे पश्चात्तापगुरोः साधु यथास्यादेवम्। वाक्यार्थ एव सोल्लुण्ठे वा। साक्षादिति पाठे प्रत्यक्षं उपगतां स्वयमुपस्थिताम् अपहाय त्यक्त्वा। स्रोतोवहां नदीं निकामजलां निर्मलपानीयां अतीत्य उल्लंघ्य। सखे माधव्य मृगतृष्णिकायां मरुमरीचिकायां प्रणयवान् सप्रेमाहं जातः। तथा च विमलजलपूर्णनदीप्राया शकुन्तला, तामपहाय मरुमरीचिकाप्रायायां तत्प्रतिकृतौ ममानुराग इत्याशयः ॥ १७ ॥

स्वयमेव प्रतिपन्नमर्थादनेन यदहं वक्तुकामा। भोः तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वा दर्शनीयाः। तत् कतमात्रभवती शकुन्तला? अनभिज्ञ एष तपस्वी सखीरूपस्य मूढदृष्टी। नेमं(?) खलु गता प्रत्यक्षतः सखी। तर्कयामि या एषा शिथिलितकेशबन्धोद्वान्तनिपतद्वनकुसुमेन बद्धसेकबिन्दुना वदनेन विशेषदर्शनीया, एतस्य स्निग्धतरुपल्लवस्य बालचूतवृक्षस्य वामे(?) आलिखिता सा तत्रभवती शकुन्तला, शेषे सख्याविति। "उद्भ्रान्तो निर्मदगजे समुद्गीर्णे च वाच्यवत्"इति विश्वः। निपुणोऽभिज्ञः। भावलिङ्गं भावचिह्नम्। भावचिह्नमाह—स्निग्धाङ्गुलिविनिवेशादिति। अश्रु च कपोलपतितमिति। उभयमेतत् सात्त्विके भावे भवति।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ इति भरतः ॥

रेखा मलिना दृश्यत इत्यन्वयः। लक्ष्यं व्यक्तम् ॥ १८ ॥

मेधाविनी—आर्य माधव्य अवलम्बस्व चित्रफलकं यावद् गच्छामि।

विदूषकः—किमत्रापरं लिखितव्यम्? मिश्रकेशी—यो यः प्रियसख्या अभि-

मतः प्रदेशस्तं तमालिखितुकामो राजा भविष्यतीति तर्कयामि। कार्येति। सैकते बालुकामयप्रदेशे लीनं संबद्धं हंसस्य मिथुनं युगलं यस्यां तादृशी मालिनी नाम स्रोतोवहा नदी कार्या कर्त्तव्या। "सैकतं सिकतामयम्"इत्यमरः। तामभितस्तस्याः समीपे गौरीगुरोर्हिमालयस्य पादः कार्यः। "पादा प्रत्यन्तपर्वताः" इत्यमरः। निषण्णा उपविष्टश्चमरो गवय इति प्रसिद्धः पशुविशेषो यत्र स तथा। तरोरधः कृष्णमृगस्य कृष्णसारस्य वामनयनं वामदृष्टं सुन्दरं वा चक्षुः शृङ्गैः कण्डूयमानां मृगीं च निर्मातुमिच्छामि ॥ १९ ॥

यथा मन्त्रयते तथा तर्कयामि पूरितोऽनेन चित्रफलको नम्रकूर्चानां तापसानां समूहैः। कूर्चं श्मश्रु। अभिप्रेतमभिरुचितं किमिव। मिश्रकेशी— वनवासस्य कन्यकाभावस्य सदृशं भविष्यति। शिरीषं शिरीषकुसुमं कर्णयोरर्पितं बन्धनं वृन्तं यस्य तत्तथा ॥ २० ॥

किं नु खलु तत्रभवती अत्र रक्तकुवलयदलशोभिनाग्रहस्तेन मुखमपवार्य चकितचकितेव दृश्यते। आं ह्री ह्री भोरित्याश्चर्ये। एष दास्याः पुत्रः कुसुमरसं पातुमिव मधुकरस्तत्रभवत्या वदनकमलमभिलंघयति। एष भ्रमरः। भोः, त्वमेवाविनीतशासने प्रभवसि। कुसुमसहिता या लता तत्रस्था या प्रिया तया आतिथ्यं यस्य स त्वं भ्रमर। अतोऽत्र हेतोर्वा। एषेति। एषा भ्रमरी भवन्तं प्रतिपालयत्यपेक्षते त्वां विना मधु न खलु पिबतीत्यन्वयः ॥२१॥

शकुन्तलापि भ्रमरीवदिममपेक्षत इति मनसि कृत्वाह मिश्रकेशी— अयि युक्तंखल्वस्य व्याहृतम्। भोः प्रसिद्धवामा खलु एषा जातिः। प्रसिद्धा ख्याता वामा स्त्री यस्यां भ्रमरत्वजातौ। यद्वा प्रसिद्धं वामत्वं कुटिलत्वं यस्यां सा तथा। रतोत्सवेपु मया सदयं यथा स्यादेवं पीतमधरं प्रियायाश्चेत्त्वं दशसि तदा त्वां कमलोदरबन्धनस्थं कारयामीत्यन्वयः ॥ २२ ॥

एवं तीक्ष्णदण्डस्य कथं न भेष्यति ? एष तावदुन्मत्तोऽहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः। भोः चित्रं खलु एतत् न शकुन्तलेति भावः। मिश्रकेशी— ममापि तावदात्मान्तरं न गणयति याहमपीदानीं प्रतिबुद्धा। किं पुनर्यथाचिन्तितानुभावी एषः। पौरोभाग्यं दोषैकदृगसि त्वमनुचितमिति यावत्। "दोषैकदृग्पुरोभागी"इत्यमरः। दर्शनसुखमिति—तन्मयेन शकुन्तलामयेन। मे

मम कान्ता त्वया पुनरपि चित्रीकृता। राज्ञा तन्मयतया सैवेयमिति न चित्र-मिति ज्ञातं; तेन तु तथाविधमचित्रं सा पुनश्चित्रतया बोधितेति। चित्रपदात् च्विप्रत्ययः संगच्छत इति। तन्मयहृदयेन राज्ञः पञ्चमी कामावस्था। यदाह—"पञ्चमे तन्मयत्वं च" इति ॥ २३ ॥

सर्वः पूर्वापरविरुद्ध एष विधातुर्मार्गः। स्वप्नसमागमः स्वप्नेऽपि समागमो मिलनम्। बाष्पोऽश्रु। "बाष्पमूष्माश्रु" इत्यमरः। मिश्रकेशी—सर्वथा वयस्य प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य। लिपिकरी—भर्तः वर्तिकाः करे गृहीत्वा इतोऽभिमुखं प्रस्थितास्मि। यावत्तया पिङ्गलिकाद्वितीयया देव्या वसुमत्याहमेवार्यपुत्रस्योपनयामीति सबलात्कारं गृहीता। पिङ्गलिकेति परिचारिकानाम। वसुमतीति महादेवीनाम। कथं त्वं विमुक्ता? यावल्लताविटपाग्रलग्नं देव्याः परिचारिका अञ्चलं मोचयति तावन्निर्वाहितो मया आत्मा। जयति जयति भट्टिनी। भोः अभिधावन्ती एषा अन्तःपुरव्याघ्री मेधाविनीं मृगीमिव कवलयितुमुपस्थिता। आत्मानमपि भण। मिश्रकेशी—सखि एषा प्रतिकृतिरपि ते प्रतिपक्षस्यालंघनीया क्रियते। यदि भवान् अन्तःपुरकूटपाशान्मुच्यते ततो मां मेघच्छन्दप्रासादे वाचयिष्यसि त्वमित्यर्थात्। इदं च तस्मिन्नेव गोपयामि यत्र पारावतं वर्जयित्वा न कोऽप्यन्यः प्रेक्षते। इदं चित्रफलकम्। मिश्रकेशी अम्मो आश्चर्ये। अन्य-संक्रान्तहृदयोऽपि प्रथमसंभावनां रक्षति। विरसो न खल्विदानीमेषः। प्रतीहारी—जयति जयति भर्ता। अन्तरे मध्ये। देव! दृष्टा। पत्रहस्तं मां प्रेक्ष्य निवृत्ता। कार्योपरोधं कार्यप्रतिबन्धम्। देवं त्वमात्यो विज्ञापयति—अस्ति जनस्य बहुलतया एकं मया पौरकार्यं प्रत्यवेक्षितम्। तद् देवः पत्रारोपितं प्रत्यक्षीकरोत्विति। आपन्नसत्त्वा गर्भिणी। देव इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते। तस्य धनवृद्धिनाम्नो वणिजः जाया पत्नी। पित्र्यं पितृसंबन्धि ऋक्थं धनम्। अमात्यं मन्त्रिणम्। यद्देव आज्ञापयति। इयमस्मि। येन येनेति—येन येन स्निग्धेन बन्धुना प्रजा वियुज्यन्ते विरहिता भवन्ति तासां प्रजानां स सः स्निग्धो बन्धुः दुष्यन्तः। पापमस्यास्तीति पापः। अर्शादित्वादच्प्रत्ययान्तः। पापाद् पापिष्ठपुरुषादृते

विना इति घुष्यतां उच्चैरुच्यताम्। "उच्चैर्घुष्टं तु घोषणा" इत्यमरः। एतेन प्रजानां दुष्वन्तो राजैव रक्षणभरणादिना तत्कार्यकारी भविष्यतीति विज्ञापितम् ॥ २५ ॥

एवं नाम घोषयितव्यम्। काले प्रबुद्धमिव शासनमभिनन्दितं महाजनेन देवस्य। मूलपुरुषस्य गृहस्थस्यावसाने विनाशे सति। एवं…पदं स्थानम्। "स्थाने पादे च तच्चिह्ने पदमाहुर्मनीषिणः" इति कोषः। प्रतिहतममङ्गलम्। मिश्रकेशी—असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेन आत्मा भविष्यति। मया धर्मपत्नी शकुन्तला त्यक्ता। कस्मिन् सति, आत्मनि पुत्ररूपे निषेकद्वारा तस्यामेव संरोपिते। "आत्मा वै जायते पुत्र" इति श्रवणात्। नाम संभावनायाम्। केव, काले उप्तबीजा निःक्षिप्तधान्यादिबीजा वसुंधरेव पृथिवीव ॥ २६ ॥

अपरित्यक्ता इदानीं ते भविष्यति। लिपिकरी—अद्यैतत्पत्रं प्रेषयता द्विगुणानुभावः कृतो भर्ता अमात्येन। तन्मेघतुङ्गप्रासादावस्थितं संतापनिवारकं आर्यमाधव्यं गृहीत्वा आगच्छामि। सुष्ठु ते भणितम्। पिण्डभाजः पितरः। अस्मात्परमित्यादि। नूनम् उत्प्रेक्षायाम्। पितरः इति कृत्वा धौताश्रुसेकं यथा स्यादेवं उदकं पिबन्तीत्यन्वयः। इति किं? अस्मात् दुष्वन्तात् परमनन्तरं नोऽस्माकं कुले निवपनानि पितृदेयद्रव्याणि जलाञ्जल्यादीनि यथाश्रुतिसंभृतानि यथावेदोपनीतानि कः करिष्यति? "निवापः पितृदेयं स्यात्" इत्यमरः। उदकं किं विशिष्टं, प्रसूतिविकलेनानपत्येन मया प्रसिक्तं दत्तम् ॥ २७ ॥

मिश्रकेशी वाक्ये—संसदि खल्वनवधानदोषेणानुतापमनुभवति राजर्षिः। सदि क्खु दीवे अणवधाणदोसेण अन्धआरमणुभवदि राएसीति क्वचित् पाठे सति खलु दीपेऽनवधानदोषेणान्धकारमनुभवति राजर्षिः। भर्तः अलं संतापेन। अपूर्णवयःस्थो यौवनस्थ एव प्रभुः। अपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति देवः। स्वगतमनन्यप्रकाशं, न मे वचनं प्रतिगृह्णाति भर्ता। अथवा अनुरूपमेवौषधं आतङ्कं निवर्तयति। आमूलेति। अनार्ये पापिष्ठे प्रजावन्ध्ये अपत्यशून्ये मयि पौरवं पुरुसंबन्ध्येतत् कुल-

मस्तमितम्। कुलं कीदृशं, आमूलं मूलादाद्यपुरुषादारभ्य शुद्धसन्तति शुद्धापत्यम्। अनार्ये देशे सरस्वतीस्रोत इव। यथा आर्यदेशातिरिक्तदेशे सरस्वतीप्रवाहोऽस्तमितस्तथेदमपीति।

"कृष्णसारश्चरति मृगो यत्र स्वभावतः।
आर्यदेशः स विज्ञेयो म्लेच्छदेशस्ततः परम॥"

इति मत्स्यपुराणम्॥ २८॥

मोहं ज्ञानराहित्यम्। समाश्वसितु समाश्वसितु भर्ता। मिश्रकेशी—किमिदानीमेवैनं निर्वृत्तं करिष्यामि। अथवा श्रुतं मया शकुन्तलां धारयन्त्या देवजनन्या मुखात् यज्ञभागोत्सुका देवता एव तथा करिष्यन्ति यथा भर्ता त्वामचिरेण धर्मपत्नीमभिनन्दयिष्यति। तन्न युक्तमिमं कालं मम लंघयितुम्। यावत् अनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि। उद्भ्रान्तकेनोद्ध्वंगतिविशेषेण। भोः अब्रह्मण्यमब्रह्मण्यम्। ब्राह्मणोऽहं वध्यो न भवामीत्यर्थः। "अब्रह्मण्यमवध्योक्तौ" इत्यमरः। लिपिकरी—मा नाम माधव्यतपस्वी पिङ्गलिकामिश्रिताभिर्देवीभिश्चित्रफलकहस्तं प्राप्तो भविष्यति। अनिषिद्धपरिजनां परिजनसहितां देवीं महादेवीम्। स एव शब्दोऽब्रह्मण्यमब्रह्मण्यमेवंरूपः। परमार्थभीतस्तत्त्वतो भीतः। अभिन्नस्वर एकस्वरः। प्रागेवेति—प्राक् प्रथमतो जरसा वार्धकेन कम्पोऽभूत्। स कम्पः संप्रति इदानीं विशेषेण सर्वाङ्गमाविष्करोति सुसंबद्धतया प्रकाशयति। यद्वा सविशेषेण जरैव संप्रति सर्वाङ्गं सकलदेहव्यापकं कम्पमेवाविष्करोति। क इव, यथा स्वभावतश्चलदलमेवाश्वत्थं पिप्पलं मारुतो वायुश्चलदलत्वेन प्रकाशयति तथेत्यर्थः॥ २९॥

कृच्छ्रात् कष्टात्। विभिन्नार्थं विशेषतः स्पष्टार्थमभिधीयतामुच्यताम्। तस्येति—अग्रभूमेरुपरिभागस्थितस्य तस्य मेघच्छन्दप्रासादस्य गृहनीलकण्ठैर्गृहमयूरैरनेकेन विश्रामेण विलंध्यं यच्छृङ्गं तस्मात् केनाप्यनिर्वचनीयस्वरूपेण सत्त्वेन प्राणिना ते सखा माधव्यो निगृह्य निग्रहं कृत्वा नीत इत्यन्वयः। प्रकाशेतरमूर्त्तिना अव्यक्तशरीरेण अदृश्येनेति यावत् सत्त्वैर्जन्तुभिः। "सत्त्वं प्राणेषु जन्तुषु" इत्यमरः॥ ३०॥

आत्मनः स्वस्य। प्रजासु मध्ये केन पथा सता असता वा॥ ३१॥

अभिधाव रक्षायै इति शेषः। विदूषकः—कथं न भेष्यामि ? एष मां कोऽपि पश्चात्पीडितशिरोधरं बन्धयित्वा अस्थिभङ्गं करोति। प्रतीहारी—देव एतत् शरासनं बाणभाजनं च। शरासनं धनुः बाणभाजनं तूणीरम्। एष इति—एषोऽहं त्वां हन्मि मारयामि। तवेदानीमार्त्तानां भयमपनेतुं दूरीकर्तुमात्तधन्वा गृहीतचापो दुष्वन्तः शरणं रक्षिता भवत्विति योजना। अभिनवं नूतनं कण्ठे यच्छोणितं रुधिरं तदर्थी शार्दूलो व्याघ्रः। चेष्टमानं करचरणादिसंचारणशीलं पशुं चतुःपदप्राणिनमिव। इवशब्दो यथार्थ-वाची ॥ ३२ ॥

आः रोषोक्तौ। कुणपापसद राक्षसाधम। विदूषकवाक्ये—अहं भवन्तं प्रेक्षे। न त्वं मां प्रेक्षसे ? मार्जारगृहीत उन्दुर इवानीशोऽस्मि जीविते संवृत्तः। "ओतुर्विडालो मार्जारः"इत्यमरः। "उन्दुरो मूषकोऽप्याखु" इति। च। अभिभावकमुद्दिश्य, भोस्तिरस्करिणीगर्भितमिति—कपाटाकारा·········न्तरितं त्वाम्। अस्त्रं कर्तृ। स्थिरो भवेत्यभिभावकम्। विदूषकमुद्दिश्य, मा च ते वयस्यसम्पर्कान्मिलनादभिभावकस्य अविश्वासः अनध्यवसायो-ऽभूत्। एषोऽहं त्वदर्थं त्वन्निमित्तं इषुं बाणं संदधे धनुषीति शेषः। यो हनिष्यतीति—य इषुर्वध्यं हनिष्यति, रक्ष्यं द्विजं ब्राह्मणं त्वां रक्षिष्यतीति योजना। अभिभावकस्य मम च मिलितस्य कथं भेद इषुणा कर्त्तव्य इति आशङ्क्योपमानेन समन्वयति हंस इति। यथा हंसः क्षीरं दुग्धं आदत्ते गृह्णाति तन्मिश्रा दुग्धमिलिता अपो जलानि वर्जयति त्यजतीति तत्स्वभावस्तथेषोरपि वध्यघातकत्वं रक्ष्यरक्षकत्वमिति ॥ ३३ ॥

कृताः शरव्या इति—शरव्याः बाणघात्याः। हरिणा इन्द्रेण। तेष्वसुरेषु इदं शरासनं धनुः। सतां सज्जनानां चक्षूंषि सुहृज्जने पतन्ति दारुणाः शरा नेति वाक्यार्थः। तथा चाहं भवतां सतां सुहृदतो मद्विषये प्रसादसुन्दराणि नयनानि निपातयितुमर्हन्ति भवन्तो न शरानित्यर्थः ॥ ३४ ॥

विदूषकः—भो अहमनेन पशुमारं मारितः। भवान् पुनरेनं स्वागतेनाभि-नन्दति। सख्युरिति—किल आगमे। स दुर्जयस्ते भवत्सख्युः शतक्रतोरिन्द्रस्य अवध्योऽघात्यः। तस्य च दुर्जयस्य त्वमेव शरसखो बाणमात्रसहायः

संनिहन्ता सम्यक्प्रकारेण घातकः। यो हीन्द्रस्याप्यवध्यः स कथं मद्घात्यो भविष्यतीति राजहृदयमाशङ्क्य निदर्शनेन समर्थयति तच्छेत्तुमित्यादि। सप्तसप्तिः सप्ताश्वः सूर्यो यन्नैशं निशासंभवं तिमिरमन्धकारमुच्छेत्तुमपनेतुं न प्रभवति चन्द्रस्तदपाकरोति निस्सारयति। "हयसैन्धवसप्तयः" इत्यमरः ॥ ५॥

विजयाय विजयनिमित्तं प्रतिष्ठतां गच्छताम्। मघवत इन्द्रस्य। संभावनया समादरेण। माधव्यं विदूषकम्। विक्लवो विह्वलः। आयुष्मन्तं दीर्घायुषं भवन्तम्। स्वापराधप्रमार्जने स निदर्शनामुपपत्तिमुपदर्शयति ज्वलतीति। विप्रकृतो दत्तोद्वेगः पन्नगः सर्पः फणां कुरुते। "उरगः पन्नगो भोगी" इत्यमरः। प्रायो बाहुल्येन तेजस्वी पुरुषः संक्षोभात्तेजः प्रतिपद्यते प्राप्नोति अधिकमित्यर्थात् ॥ ३६ ॥

जनान्तिकं मातलिमपवार्य वयस्यसमीपं गत्वा वदतीत्यर्थः। दिवस्पतेरिन्द्रस्य। प्रजाः कर्म। अधिज्यं दत्तपतञ्चिकमिदं धनुरन्यस्मिन्नसुरवधरूपकर्मणि व्यापृतं व्यावृत्तं वृत्तमस्तीति ॥ ३७ ॥

विदूषकवाक्ये–यद्भवानाज्ञापयति।

इति माण्डरग्रामीणश्रीनरहरिविरचिताभिज्ञानशाकुन्तलटिप्पण्यां

शकुन्तलाप्रत्याख्यानं नाम षष्ठोऽङ्कः ॥



७

अनुष्ठितनिर्देशः कृतदुर्जयनामकासुरवधरूपाज्ञः। सत्क्रियाविशेषात्। पूजा क्रिया। अनुपयुक्तमनुपकारकम्। इवशब्द उत्प्रेक्षायाम्। उभयत्र स्वविषये इन्द्रविषये च। असंतोषे हेतुमाह—प्रथमोपकृतमित्यादि। मरुत्वत इन्द्रस्य प्रतिपत्त्या पूजया भवान् प्रथमोपकृतं लघु मन्यते। सोऽपीन्द्रो भवत उपकारसंमितां इमां सत्क्रियां न गणयति॥ १॥

अन्तिकस्थं समीपस्थं जयन्तं पुत्रम्। मम वक्षो हृदयं मन्दारमाला पारिजातमाला हरिणा इन्द्रेण पिनद्धा बद्धा मयीत्यर्थात्॥ २॥

उभाभ्यामित्यर्थे उभयैः कृतमित्यत्र बहुवचनं शरेषु नखेषु च बहुत्वख्यापनार्थम्। पुरा पूर्वं पुरुषकेसरिणो नरसिंहरूपविष्णोर्नखैः॥ ३॥

खलु निश्चितम्। अत्र मया दानवजये शतक्रतोरिन्द्रस्य महिमा महत्त्वम्। अत्र सनिदर्शनं हेतुमाह सिध्यन्तीति। नियोज्या आज्ञाकारिणो महत्स्वपि कर्मसु यत् सिध्यन्ति तदीश्वराणामाज्ञाकारिणां(?) संभावनागुणं अवेहि जानीहि। चेद्यदि सहस्रकिरण आदित्यो धुरि रथाग्रे तमरुणं नाकरिष्यत् तदा तमसां वधाय अपनयनाय किं वा अभविष्यदपि तु न। अतो यथा सहस्रांशुना रथाग्रनियोजितोऽरुणस्तमोऽपनयनसमर्थस्तथाहमपीन्द्रनियुक्तो दानवनिहन्तेत्यर्थः॥ ४॥

अमी दिवौकसो देवास्त्वच्चरितं कल्पलतांशुकेषु सुरसुन्दरीणामप्सरसां विच्छित्तिशेषैरनुलेपनशेषैर्वर्णैर्लिखन्ति। "विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि" इति विश्वः। किं कृत्वा? गीतिक्षममर्थतत्त्वं विचिन्त्य॥ ५॥

पूर्वेद्युः पूर्वदिवसे। त्रिस्रोतसं गङ्गामाकाशस्थां यो वायुर्वहति धारयति। चक्रविभक्तरश्मि यथा स्यादेवं ज्योतींषि सूर्यादिग्रहनक्षत्ररूपाणि वर्तयति धारयति। तस्याधः परिवहस्य वायोरेनं मार्गं पण्डिता वदन्ति। कीदृशं

मार्गम् ? द्वितीयेन हरेर्विष्णोर्विक्रमेण विशिष्टपादविक्षेपेण पूतं पवित्रम्। बलिविजये हि पुरा वामनेन त्रिविक्रमता समारब्धा। तत्रैकपदं पृथिव्यां द्वितीयमाकाशे तृतीयं बलिशिरसि वामनः समतनोदिति पुराणवार्त्ता। क्रमु पादविक्षेपे ॥ ६ ॥

मेघपदवीं मेघमार्गम्। अयमिति। ते तवायं रथश्चातकैर्हरिभिश्चाश्वविशेषैर्हेतुभिर्घनानां मेघानामुपरि गतं गमनं पिशुनयति सूचयति। घनानां कीदृशाम्, वारि जलं तद्गर्भमुदरं येषाम्। रथः कीदृशः, शीकरेण जलकणया क्लिन्ननेमिरार्द्रचक्रप्रान्तः। चातकैः कीदृशैः, अगविवरेभ्यः पर्वतविलेभ्यो निष्पतद्भिर्निस्सरद्भिः।

"त्वक्केशवाललोमानि स्वर्णाभानि च यस्य तु।
स हरिर्नामतोऽश्वः स्यात्पीतकौशेयसंनिभः ॥"

हरिभिः कीदृशैः, अचिरभासां विद्युतां तेजसा अनुलिप्तैः ॥ ७ ॥

आत्माधिकारभूमौ मर्त्ये। शैलानामिति–मेदिनी पृथिवी शैलानां शिखराण्यधिरोहतीव। कथं भूतानाम्, उन्मज्जतां उपरि भवतां वर्धतामिति यावत्। स्कन्धोदयात् शाखानिर्गमस्थानात्। पर्णेन पत्रेण यः स्रस्तरः शय्या तत्र लीनतामेकीभावत्वं तिरोहितत्वं वा पादपा वृक्षा विजहति त्यजन्ति। संधानं मिलनम्। तनुभागे कृशप्रदेशे या नष्टसलिला इवातिदूराज्ज्ञायन्ते स्म ता आपगा नद्यः। "स्रवन्ती निम्नगापगा" इत्यमरः ॥ ८ ॥

परिघोऽर्गलः तद्वद्दीर्घो मेघो मेघपरिघः। "परिघो योगभेदेऽस्त्रविशेषेऽर्गलयातयोः" इति विश्वः। सान्ध्यः सन्ध्यासमयसंबन्धी सानुमान् पर्वतः। अस्मिन् हेमकूटे सपत्नीकः पत्नीसहितः स मारीचनामा प्रजापतिस्तपस्यति तपस्यां करोति। स्वायम्भुवाद् ब्रह्मपुत्रात् ॥ ९ ॥

उपोढशब्देति—अत्र वाक्यार्थचतुष्टये अभूतलस्पर्शता हेतुः। उपोढशब्दा धृतशब्दाः। इन्द्ररथो भूतलं न स्पृशति भवद्रथो भूतलस्पर्शी अपि इति एतावान् विशेषो भेदः ॥ १० ॥

बल्मीकार्धेति। यत्राश्रमेऽसौ मारीचो मुनिरचलो निश्चलः स्थाणुरिव निश्शाखवृक्ष इव अभ्यर्कबिम्बं सूर्यमण्डलाभिमुखं स्थितोऽस्तीति योजना।

कथंभूतो मुनिः, वल्मीके अर्धनिमग्ना मूर्त्तिर्देहो यस्य स तथा। "मूर्त्तिः काठिन्यदेहयोः" इत्यमरः। उरगत्वचा सर्पकञ्चुकेन ब्रह्मसूत्रान्तरं यज्ञोपवीतान्तरं यस्य स तथा। जीर्णलतायाः प्रतानवलयेन प्रकाण्डमण्डलेन कण्ठे अत्यन्तसंपीडितः। जटामण्डलं जटासमूहं बिभ्रत्। नाभ्यस्ताच्छतुरिति नुम्निषेधः। जटामण्डलं कीदृशं, अंसव्यापि स्कन्धव्यापकं शकुन्तः पक्षी तस्य नीडेन गृहेन निचिडं सकुलम्। "कुलायो नीडमस्त्रियाम्" इत्यमरः॥ ११॥

संयतप्रग्रहं आकृष्टडोलकम्। "मन्दारः पारिजातकः" इत्यमरः। निर्वृत्तिस्थानं सुखस्थानम्। समयः संकेतः तेन नियन्त्रितः स्थिरीकृतः। अत्रभवतां मान्यानाम्। प्राणानामिति। अन्यमुनयस्तपोभिर्यद् वाञ्छन्ति तस्मिन् स्थाने अमी मुनयस्तपस्यन्ति तपस्यामाचरन्ति। अन्यमुनीनां तपस्यया कल्पपादपसहितवनावस्थानं सौवर्णपद्मपरागसुगन्धि तोयं रत्नशिलाकन्दरा देवाङ्गना चैतत्सर्वं प्रार्थनीयं भवति। अत्र च तत्र तत्र प्राणानां वृत्तिरनिलेन वायुना रुचिता अभिमता। अभिषेकक्रिया स्नानक्रिया। ध्यानं संयमश्चेति विस्मयादाश्चर्यादुभयमेतदवलोकयामीति वाक्यार्थः॥ १२॥

उत्सर्पिणी उत्कर्षेण प्रसरणशीला। वृद्धशाकल्यो मुनिविशेषः। इन्द्रगुरवे मारीचाय। अशोकतरुच्छायायां राज्ञोऽवस्थापनेऽशोकता भाविन्युपदर्शिता। निमित्तं दक्षिणबाहुस्पन्दम्। श्रेयः शकुन्तलालाभरूपं पूर्वमवधीरितमिदानीं दुःखेन परि सर्वतोभावेन वर्त्ततेऽस्ति। शकुन्तलालाभादन्यदस्माकं मनोरथस्थानं नास्ति। स पूर्व एवावधीरित इदानीमसम्भव इति मनोरथाकरणे बाहुवृथाचलने च दुष्वन्तस्याशय(?) इत्यर्थः॥ १-॥

नेपथ्ये यवनिकान्तरितदेशे। मा खलु चपलत्वं कुरु। कथं गत एवात्मनः प्रकृतिं बालचापलं क्षत्रियस्य प्रबलविनाशनं वा। अभूमिरस्थानम्। न बालस्येव सत्त्वं आणा यस्य स तथा। आमर्देन परिमर्दनेन क्लिष्टः विपर्यस्तः केशरः स्कन्धबालो यस्य तम्। चिलम्बिनं लम्बमानं मातुरित्यर्थात् यद्वा विलम्बिनं सदृशं बालत्वात् महासत्त्वव्यक्तिजातत्वात्॥ १४॥

यथानिर्दिष्टकर्मा सिंहशिशुसमाकर्षणशीलः। बालकवाक्ये—जृम्भस्व रे सिंहशावक जृम्भस्व मुखव्यादानं कुर्वित्यर्थः। दन्तान् ते गणयिष्यामि।

"पृथुकः शावकः शिशुः"इत्यमरः। प्रथमा तापसी—अविनीत किमिति सहोदरनिर्विशेषेऽस्मिन् सिंहशावके अनपराद्धे ते समारम्भः? स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि स्थाने योग्यम्। राजा स्वगतमनन्यप्रकाशम्। औरस इव आत्मजे पुत्रे यथा स्निह्यति स्नेहमायाति। द्वितीया तापसी—इयं खलु सिंही त्वां लंघयति यद्यस्याः पुत्रकं न मुञ्चसि। पुत्रकमत्रानुकम्पायां कन् प्रत्ययः। अम्मो आश्चर्ये। बलवत् खलु भीतोऽस्मि इति सोल्लुण्ठे। "विस्मये अम्मह्रे अम्मो" इति भरतः। अधरं दशति रोषादिति तात्पर्यम्। तेजसः क्षत्रियरूपस्य। एधःकूटे काष्ठराशौ॥ १५॥

वत्स मुञ्चेमं बालमृगेन्द्रम्। अन्यत् ते क्रीडनं दास्यामि। कुत्र तत्। देहि मे। चक्रवर्त्तिलक्षणं ध्वजकलशवज्रादिरेखारूपम्। प्रलोभिनि वस्तुनि (प्रणयेन) प्रसारितो विस्तीर्णः। जालवद्ग्रथिताङ्गुलिः मिलिताङ्गुलिः। संहताङ्गुलिकरवत्तापि महापुरुषत्वसूचिका। उषा प्रातःसमयः तया भिन्नं प्रकाशितम्॥ १६॥

सत्यं नैष शक्यो वाङ्मात्रेण शमयितुम्। तद् गच्छ मम निजे उटजे सालङ्कायनस्य ऋषिकुमारस्य निजो वर्णिकाविचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्मै उपहर। केरको निजः। सालङ्कायन इति ऋषिकुमारनाम। वर्णिका पीतहरितलोहितकृष्णरूपा तया विशेषतश्चित्रितः। तावदमुनैव क्रीडिष्यामि। मुञ्चैनम्। आलक्ष्यदन्तमुकुलानिति। तनयान् पुत्रान् वहन्तो धारयन्तो धन्याः सुकृतिनः पुरुषाः तदङ्गरजसा पुत्रशरीरधूल्या मलिनीभवन्ति अमलिना एव म्लाना भवन्ति। तनयान् कथंभूतान्, अनिमित्तहासैरकारणहासैः आलक्ष्या ईषद्व्यक्ता दन्ता एव मुकुलाः कलिकाः येषां तान्। तथा अव्यक्तवर्णेन अस्फुटाक्षरेण रमणीया वचःप्रवृत्तिः वाक्प्रसरणं येषां तान् तथा। अङ्के क्रोडे य आश्रयोऽवस्थानं तत्र प्रणयिनः प्रेमवतो याचकान् वा। तथा चाहं कदा तादृक् स्यामित्याशंसा महीपालस्येत्यर्थः॥ १७॥

तापसी—भवतु, न मां गणयसि। पार्श्वान् पार्श्वस्थजनान्। कोऽत्र ऋषिकुमारकाणां मध्य इत्यर्थात्। भद्रमुख एहि मोचय तावदमुना दुर्मोक्ष्यहस्तग्रहणं यथा स्यादेवं डिम्भकेन बालकेन व्यापाद्यमानं बालमृगेन्द्रम्।

"पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः। एवमिति। आश्रमविरुद्धवृत्तिना भवताऽत्राश्रमे जन्तुना सिंहशिशुना संयतेन बद्धेन किमिव अपि तु न किमपि प्रयोजनमित्यर्थः। यद्वा आश्रमविरुद्धवृत्तिना जन्तुना प्राणिना भवताऽत्र सिंहशिशौ संयते किमिव न न किमपि फलमित्यर्थात्। "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यमरः। दोषं द्रढयितुं निदर्शनमाह—सर्वसंश्रये सकलप्राण्याश्रये सुखं यस्मात् तादृशः चन्दनवृक्षो यथा कालसर्पबालकेन दुष्यते दुष्टो भवति। "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः। चन्दनप्राय आश्रमः सकलप्राण्याश्रयसुखहेतुराश्रमविरुद्धवृत्तिता त्वया दोषाश्रयो भविष्यतीत्यर्थः ॥ १८ ॥

तापसी—भद्रमुख न एष ऋषिकुमारः। चेष्टितं सिंहबालकाक्रमणरूपम्। स्थानप्रत्ययात् मुन्याश्रमोऽयमत्र कथमन्यादृग्जनप्रचार इति निश्चयादप्रतर्किण ऊहशून्याः। अनेनेति। अनेन बालकेन कस्याप्यनिर्वचनीयभागधेयस्य कुलाङ्कुरेण वंशप्रकाण्डेन। ममैवं गात्रेषु शरीरेषु स्पृष्टेषु सुखं भवतीत्यर्थात्। कामप्यनिर्वचनीयस्वरूपां निर्वृत्तिं सुखं तस्य चेतसि हृदये कुर्यात् इति न जाने इत्यर्थात्। यस्य कृतिनः पुण्यवतोऽङ्गादयं प्रसूत उत्पन्नः। "आत्मा वै जायते पुत्रः"। "अङ्गादङ्गात् संभवति" इत्यादि श्रुतिवार्त्ता।… …औरसः पुत्र इत्यर्थः ॥ १९ ॥

आश्चर्यमाश्चर्यम्। अस्य बालस्यासंबन्धेऽपि भद्रमुखे त्वयीत्यर्थात् संवादिनी आकृतिरिति विस्मितास्मि। संवादिनी सदृशी। अपरं च वामशीलो भूत्वा अपरिचितस्यापि नाम ते वचनेन प्रकृतिस्थितोऽयं संवृत्तः। नाम संभावनायाम्। व्यपदेशः व्यपदिश्यते लक्ष्यतेऽनेनेति व्यपदेशः कुलगोत्रादिः। पौरव इति। एकान्वय एकवंशः। खलु उपेक्षायां निश्चये वा। पौरवाणां पुरुवंशजानाम्। भवनेष्विति—भवनेषु गृहेषु सुधया सितेषु धवलेषु सुधा…ह इति प्रसिद्धाः। पूर्वमादौ विहितमेकमद्वितीयं मुनिप्रीतं येषु तानि। गृहीभवन्ति अगृहाण्येव गृहाणीत्यर्थः ॥ १० ॥

एष आश्रमः। विषय आश्रमः। आश्रमस्य स्वर्गविशेषत्वात् मानुषाणां स्वशक्तिमात्रेण तत्रागमनादित्याशयः। यथा भद्रमुखो भणति। अप्सरसः संबन्धेनास्य बालस्य जननी अत्रैव गुरोस्तपोवने प्रसूता। हन्त हर्षे। तत्र-

भवती बालकमाता। किमाख्यस्य किंनाम्नः। धर्मपत्नी पतिव्रता। "आख्याह्वेऽभिधानं च नामधेयं च नाम च" इत्यमरः। तापसी कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति। तत् किमियं कथेति। यतः पौरवोऽयं बालकः, अस्य च जनन्यप्सरोभवा अहं च तत्परित्यागीति सर्वं मय्येव संगच्छत इत्याशयः। न न्याय्यो न योग्यः। तापसी—प्रविश्य वदतीत्यर्थः। सर्वदमन! प्रेक्षस्व शकुन्तलावण्यम्। भ्रमे शकुन्तला-वर्णम्। कुत्र सा मे अज्जूमाता? नामसादृश्येनोपच्छन्दितो मातृवत्सलः। वत्स अस्य मयूरस्य रमणीयत्वं प्रेक्षस्वेति भणितोऽसि। अथवा पक्षान्तरे। बालः—रोचते मे एष चटुलो मयूरः क्रीडनसम्बन्धः। अम्मो आश्चर्ये रक्षाकरमर्थात औषधं अस्य मणिबन्धे न दृश्यते। मणिबन्धे करमूले। आवेगेन आकुलतया। अलं निःफलम्। ननु संबोधने। इदं पुरःस्थितमौषधम्। अस्य बालकस्य सिंहशावकविमर्दात् सिंहबालकाकर्षणात् परिभ्रष्टं पतितम्। आदातुं ग्रहीतुम। मा खलु मा खलु लम्भयिष्यसि नास्य स्पर्शं करिष्यसीत्यर्थः। कथं गृहीतमेवानेन। उभे तापस्यौ विस्मयमाश्चर्यमापन्ने प्राप्ते। उरसि हृदये। भवतीभ्यां प्रतिषिद्धोऽस्मि किम्? यद्वा भवतीभ्यां किं किं निमित्तं प्रतिषिद्धोऽस्मि? प्रथमा तापसी—शृणोतु महानुभावः। यथा एषाऽपराजिता नाम परममहौषधी अस्य नामकरणसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति। अथ पक्षान्तरे। ततः सर्पो भूत्वा तं दशति। एतत् सर्पो भूत्वा अन्यं दशतीति दृष्टम्? अनेकशः। संयते! एहि इमं वृत्तान्तं नियमव्याकुलायै शकुन्तलायै गत्वा निवेदयावः। संयतेति तापसीनाम। बाल—मुञ्च मां यावदज्जुकाया मातुः सकाशं गमिष्ये। दुष्वन्तो मम तातो न खलु त्वम्। प्रत्यापयति निश्चापयति।

शकुन्तलावाक्ये–विकारकालेऽपि प्रकृतिस्थितां सर्वदमनस्य औषधीं श्रुत्वा न मे आसङ्क आश्वास आत्मनो भागधेयेषु। अथवा यथा मिश्रकेश्या आख्यातं तथा संभाव्यते एतत्। वसने इति। इयं शकुन्तला मम विरहव्रतं बिभर्ति। कथंभूता, परि सर्वतो भावेन धूसरे म्लाने वसने वाससी वसाना धारयन्ती। नियमेन क्षामं कृशं मुखं यस्याः सा तथा। धृता एका अद्वितीया

वेणिरलकः केशविन्यासविशेषो यया सा तथा। विरहे सति साध्वीनामियमेव परिपाटिरित्याशयः। "तथा प्रोषितकान्तानामेकवेणीधरं शिरः" इति भरतोपदेशात्। शुद्धशीला अपापमतिः। मम कीदृशस्य, अतीव निःकरुणस्य करुणाशून्यस्य यतः पूर्वमुपस्थितापि दीनानना न संवर्धितेति भावः॥ २१॥

ननु खलु आर्यपुत्र इव कः खलु एषः कृतरक्षामङ्गलं दारकं पुत्रं मे हस्तसंसर्गेण निर्भर्त्सयति? बालः मातरमुपेत्य मातुः सन्निधानं गत्वा—अज्जुके मातः एहि। कोऽपि परो मानुषो मां पुत्रक इत्यालपति। आत्मगतमनन्यप्रकाशं, हृदय समाश्वसिहि ननु······केवलं असंवृत्तमत्सरेण अनुगृहीतास्मि दैवेन। कथमार्यपुत्रः खलु एष। राजा—हे सुमुखि मे मम प्रमुखे संमुखे दिष्ट्या भाग्येन त्वं स्थितासि। मे कीदृशस्य, स्मृत्या स्मरणेन भिन्नमपनीतो मोहो मिथ्याज्ञानरूप एव तमोऽन्धकारं यस्य स तथा। उपरागान्ते राहुग्रासान्ते शशिनश्चन्द्रस्य रोहिणीयोगः समुपस्थितः। इयं हि प्रतिवस्तूपमा। तथा च दण्डी—

वस्तु किंचिदुपन्यस्य न्यसनात् तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा मता॥ २२॥

आर्यपुत्र बाष्पमश्रु। बाष्पेणाश्रुणा। असंस्कारादसंयमनात्॥ २३॥

अज्जुके मातः क एष? वत्स भागधेयं पृच्छ। भागधेयं भाग्यम्। "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। राजा प्रणिपत्य। प्रणिपातो हि नागराणां कुपितकामिनीमनोहरणोपाय इति नात्रानौचित्यम्। तथा च नागरानन्दे भरतः—

सपत्नीनां तु सम्मानं दृष्ट्वा या कुपिता भवेत्।
रहस्तदविकैर्हृद्यैरुपचारैः प्रसाद्यते॥
काकुभिः प्रणिपातैश्च भाग्यनिन्दादिभिस्तथा।
एवं कृते च नारीणां पुरुषोऽतिप्रियो भवेत्॥ इति॥

सुतनु हृदयादिति। सुतनु शोभनशरीरे! ते तव हृदयात् प्रत्याख्यानव्यलीकं निराकरणरूपमप्रियं अपैतु दूरं गच्छतु। किमपि अनिर्वचनीयस्वरूपं यथा स्यादेवं मे मम मनसश्चित्तस्य संमोहः सम्यक् प्रकारेण मौग्ध्यं तदा

त्वत्त्यागकाले बलवानतिशायितोऽभूत् वृत्तः। कथमेवमभूदित्याशङ्क्य स्व-निन्दार्थमुपपत्तिमाह चपलमनसामिति। हि यतः चपलमनसामस्थिरहृदयानां शुद्धेषु कार्येषु वृत्तयो एवं प्रायाः एतादृश्यो भवन्ति। अत्र निदर्शनम्। मत्तः शिरोदत्तामपि स्रजं पुष्पमालां अहिशङ्कया सर्पशङ्कया क्षिपति दूरीकरोति। "प्रत्याख्यानं निराकृतिः" इत्यमरः। "व्यलीकमप्रिये कार्ये" इति मेदिनिकरः॥२४॥

उत्तिष्ठतु आर्यपुत्रः। नूनं मे सुखप्रतिबन्धकं पुराकृतं पूर्वजन्मकर्म तेषु दिवसेषु परिणतमासीत् येन सानुकम्पोऽप्यार्यपुत्रो मयि तथा संवृत्त आसीत्। तथा निःकरुणः। शकुन्तला—अथ कथं आर्यपुत्रेण स्मृतोऽयं दुःखभागी जनः। उद्धृतशल्यविषादविशद इति। उद्धृतो बहिः कृतः शल्यायितो यो विषादः तेन विशदः स्पष्टः। बाष्पविन्दुरश्रुविन्दुः अद्य अस्मिन्नह······ विगतानुशयः विशेषेण गतो -नुशयः पश्चात्तापो यस्मात् स तथा॥ २५॥

शकुन्तला—आर्यपुत्र तदेतदङ्गुरीयकम्। राजा—अथ किं स्वीकारे। शकुन्तला—समीहितं कृतं खलु······यदार्यपुत्रस्य प्रत्ययकरणे दुर्लभं मे आसीत्। इदमङ्गुरीयकं प्रतिपद्यतां गृह्यताम्। केव, ऋतूपगमात् लता यथा कुसुमं पुष्पं धारयति। अथ च नागरो······रप्यत्र संभवति। ऋतुप्रायोऽहं मदुपगमात् कुसुमवती लता कामिनी त्वं फलवती भविष्यसीत। न सेविष्यामि। आर्यपुत्र एव एतत् धारयतु। परोक्षमज्ञातम्। शकुन्तला—लज्जे खलु आर्यपुत्रेण सह समीपं गुरुजनस्य गन्तुम्। अपरिबाधितमनिषिद्धम्। ते तव पुत्रस्य इन्द्रस्य। गोप्ता रक्षकः। कोटिमत् कुलिशं वज्रं मघोन इन्द्रस्य आभरणमलंकरणम्। कीदृशं तत्? अस्य दुष्यन्तस्य चापेन धनुषा विनिवर्त्तितं निष्पादितं कर्मजातं कर्मसमूहो यत्र तत्तथा। तत्कत्त······तच्चापेन कृतत्वात् तस्याभरणमात्रतेत्यर्थः॥ २६॥

संभावनीया खलु अस्य आकृतिः। दिवौकसां देवानाम्। प्राहुरिति। तदेतत् द्वन्द्वं स्त्रीपुंसोर्युगलमस्तीति······कीदृशं दक्षमरीचिसंभवम्। दक्षस्यापत्यं दाक्षायिणी, मरीचेरपत्यं मारीचः। दक्षमरीच्योरुत्पन्नं स्रष्टुर्ब्रह्मण एकान्तरमेकान्तरितम्। तत् कतरत्। यद्द्वन्द्वं द्वादशधा स्थितस्य तेजसः सूर्यस्य कारणं मुनयो वदन्ति। यदेव च द्वन्द्वं भुवनत्रयस्य स्वर्गमर्त्यपातालस्य

धर्तारं यज्ञभागेश्वरं इन्द्रं सुषुवे प्रासूत। यस्मिंश्चात्मभुवो ब्रह्मणोऽपि परः पुरुषो नारायणो भावास्पदं आत्मवृत्त्यावस्थितिं चक्रे कृतवान्। "स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम्" इत्यमरः। "सूरसूर्यार्यमादित्यद्वादशात्म-दिवाकराः" इत्यमरः ॥ २७ ॥

अथकिं स्वीकारे। उभाभ्यामिति चतुर्थीद्विवचनम्। अप्रतिहतरथो भव। शकुन्तला—भगवन्तौ गृहीतदा···पादपतनं करोमि। दारको बालकः। पौलोमीमङ्गला पौलोमी शची तद्वत् मङ्गलं यस्यास्तादृशी भव ॥ २८ ॥

जाते पुत्रि भर्तुर्बहुमता भव। अयं च दीर्घायुरुभयकुलनन्दनः पुत्रो भवतु। तदुपविशत। दिष्ट्या भाग्येनेयं शकुन्तला साध्वी पतिव्रता, इदं सदपत्यं, भवान् इन्द्रपूजितः। तथा च शकुन्तला···पत्यं वृत्तं चरित्रं भवान् विधिः एतत् त्रितयं समुपागतं सम्यक्मिलितम्। तया मिलितेऽस्मिंस्त्रितये सकलक्रियासिद्धिः संपद्यते तथात्रापि···भविष्यतीति ध्वनितम् ॥ २ ॥

प्रागिति। भवद्दर्शनोपजातानुग्रहेण शकुन्तलालाभः स्यादित्यभिप्रेत-मासीत्। इदानीं प्राक् प्रथमतोऽभिप्रेतसिद्धिरित्याद्यनुग्रहस्यापूर्वता। उदेतीति। ·········ध्ये सति फलं भवति, मेघोद्गमे सति जलम्। निमित्तनै-मित्तिकयोरेवं विधिः यन्निमित्ते सति नैमित्तिकसंभवः। भवतः प्रसादस्य पुरः प्रथमत एव संपदः। शकुन्तला······भरूपा इत्यर्थः ॥ ३० ॥

ऊढपूर्वां पूर्वं विवाहिताम्। यथा गज इति—तथाविधस्तादृशो मे मनस-श्चित्तस्य विकार आसीत्। यथा साधुसमक्ष······गजे हस्तिनि संशयः स्यात् कस्मिन् सति तस्मिन्नपाक्रामति देशान्तरं गच्छति। तु पुनः पदानुवृत्त्या चरणचिह्नेन प्रतीतो गजो भ······यमादौ दृष्टापि न ज्ञाता पश्चात् अङ्गुरीयक-दर्शनेन······तेत्यभिप्रायः ॥ ३१ ॥

ते त्वया प्रत्यादिष्टा निराकृता। वचनीयात् साध्वी······त्यागापवादात्। दिष्ट्या अकामप्रत्यादेशी आर्यपुत्रः। न पुनः शप्तमात्मानं स्मरामि अथवा वृत्तो भवेत्। अहं शून्यहृदया एष···शाप इत्यर्थः। यतः सखीभिरत्यादरेण संदिष्टं भर्तुरङ्गुरीयकं दर्शयिष्यसीति। सहधर्मचारिणं पतिम्। मन्युः क्रोधः। शापादिति। स्मृतिः स्मरणं तल्लोपेन रूक्षात् उत्कटात् शापात् प्रतिहतासि।

भर्तुस्तदेव प्रभुत्वम्। छाया प्रतिबिम्बः। मलेनापहृतः······ यस्य तादृशि दर्पणतले न मूर्च्छति न प्रतिभाति। "मूर्च्छा मोहसमुच्छ्राययोः"। तु पुनः शुद्धे आदर्शे विकाशाः सुलभाः ॥ ३२ ॥

कश्चित् कामप्रवेदने। शाकुन्तलेयः शकुन्तलाया अपत्यम्। स्त्रीभ्यो ढगिति ढक्प्रत्ययान्तः। रथेनेति अयं बालः पृथिवीं पुरा अवति अग्रे परिपालयति। ······निपातयोर्लडिति काले भविष्यति लट्। कीदृशीं वसुधां, सप्तद्वीपाम्। जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुपुष्कराः।·········अप्रतिरथः अतुल्यरथः। रथेनोत्तीर्णजलधिः जलधिमप्युत्तीर्णः समुद्रपारगामीत्यर्थः। रथेन कीदृशेन, अनुद्घातेनाप्रतिरुद्धेन······ता गतिर्गमनं यस्य तेन। इह तपोवने अयं बालकः सत्त्वानां प्राणिनां मध्ये प्रमदानां प्रकृष्टबलशालिनां सिंहादिजन्तूनां दमनात्········लोकस्य जनस्य भरणात् पोषणात् पुनः भरत इति आख्यां नाम यास्यति गामिष्यति। इदानीमसौ सर्वदमनः क्रमेण भरत इति आख्यया प्रसिद्धो भविष्यतीत्यर्थः ॥ ३३ ॥

अदितिः अनया दुहितुः पुत्र्या मनोरथसम्पत्या कण्वोऽपि तावत् (राज्ञा ?) ज्ञातार्थः क्रियताम्। मेनका पुनरिहैव मां प······संनिहिता तिष्ठति। शकुन्तला—मम मनोरथं तत् खलु भणितम् देव्या। तत्रभवतो मान्यस्य। विहायसा आकाशेन। "पुंस्याकाशविहायसी"इत्यमरः। ···दुर्वासःकृतशापनिवृत्तौ। सापत्यदारः पुत्रपत्नीसहितः। बिडौजा इन्द्रः। "बिडौजाः पाकशासनः" इत्यमरः। प्राज्यवृष्टिः बहुतरवृष्टिः। वज्रिणमिन्द्रम्। अलमत्यर्थेन प्रीणय··· कुरु। "वज्री वासवो वृत्रहा वृषा"इत्यमरः। एवमनेन प्रकारेण······निश्चितं यथा स्यादेवमुभयलोकानुग्रहश्लाघनीयौ उ······ स्याताम् ॥ ३४ ॥

सुरान् देवान् सुरपतिरिन्द्रः। प्रजार्थं प्रजाप्रयो······ प्रकारेण समं तुल्यं उपकारमहिम्नोः भवदिन्द्रयोः बहुतिथः······ ॥ ३५ ॥

कर्तुं परं कर्तुमेव। प्रकृतिहिताय प्रकृतयः शिष्टाः······मितुम्। क्षपयतु दूरीकरोतु। नीललोहितः शिवः। पुनर्भवं पुनर्जन्म। "कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः" इत्यमरः ॥ ३६ ॥ श्रीबुद्धिकरलि···

---

॥ इति ॥

# मिथिलाविद्यापीठग्रन्थमाला

## १. प्राचीनाचार्यग्रन्थावली

१. **तत्त्वचिन्तामणिः**—गङ्गेशोपाध्यायविरचितः आलोक-दर्पण-संवलितः। प्रत्यक्षखण्डे प्रामाण्यवादान्तः प्रथमो विभागः। मूल्यं द्वादश रूप्यकाः।

२. **काव्यपरीक्षा**—श्रीवत्सलाञ्छनभट्टाचार्यविरचिता। मूल्यमष्टौ रूप्यकाः।

३. **पारिजातहरणम्**—कविकर्णपूरविरचितं महाकाव्यम्। मूल्यमष्टौ रूप्यकाः

४. **काव्यलक्षणरत्नश्रीः**—सिंहलाचार्यरत्नश्रीज्ञानविरचिता। मूल्यं पञ्चदश रूप्यकाः।

५. **वैशेषिकदर्शनम्**—सुप्राचीनव्याख्योपेतम्। मूल्यं सार्धषड्रूप्यकाः।

६. **अभिज्ञानशाकुन्तलम्**—टीकाद्वयसनाथं मिथिलापाठानुगम्। मूल्यं पञ्चदश रूप्यकाः।

७. **आगमडम्बरं नाटकम्**—भट्टजयन्तकृतम्। प्रारब्धम्

## २. अर्वाचीनपण्डितप्रबन्धावली

१. **रामावतारप्रकीर्णप्रबन्धावली**-प्रथमः खण्डः। मूल्यमेकादश रूप्यकाः।

२. **त्रितलावच्छेदकतावादः**—न्यायप्रधानाचार्य-पण्डितश्रीशशिनाथझा-विरचितः। मूल्यं सार्धरूप्यकचतुष्टयम्।

३. **लिङ्गवचनविचारः**-स्वर्गीयमहावैयाकरणपण्डितदीनबन्धुझाविरचितः मूल्यं रूप्यकचतुष्टयम्।

४. **विमण्डलचक्रविचारः**—ज्योतिषप्रधानाचार्यपण्डितश्रीदयानाथझा-विरचितः। मूल्यं रूप्यकद्वयम्।

## 3. Studies (In English)

1. **History of Mithila** by Dr. Upendra Thakur. Price Rs. 17. 50.
2. **Vacaspati Misra on Advaita Vedanta** bp Dr. S. S. Hasurkar — Shortly
3. **History of Navya Nyaya in Mithila** — Shortly

N. B. Copies of these publications, postage paid, can be had of the Director, Mithila Institute, Darbhanga, on receipt of price marked either by M. O., or Postal Order or Cash.